यत्कृपापाङ्गपीयूषादेडमूकोऽपि पाटवम् । वक्ते तां निर्गुणो मूर्खो गिरां साभ्यर्च्य गुरुः ॥ १ ॥
येषां कैरवकुंदवृंदशशभृत्कुंदशुभ्रा अदभ्रा गुणा मालिन्यं व्यपनीय चेतसि नृणां वैशद्यमातन्वते ।
संतः संतु मयि प्रसन्नमनसस्ते कोऽपि गौणीकृतस्वार्था मुख्यपरोपकारविधयो ह्यभ्यर्थनैः किं जनैः ॥ २ ॥
ग्रंथान्कोऽपि लघुः प्रकाशयति चेत्तेन तेषां प्रथामातन्वंति कृपाकटाक्षलहरीलावण्यतः सज्जनाः ।
माकंदद्रुममंजरीं वितनुते चित्रा मधुश्रीस्ततः सौभाग्यं प्रथयंति पंचमचमत्कारेण पुंस्कोकिलाः ॥ ३ ॥
दोषोल्लेखविषः खलाननबिलादुत्थाय कोपाज्ज्वलन् जिह्वालिर्ननु कं गुणं गुणवतः सद्यः क्षयं प्रापयेत् ।
न स्याच्चेत्प्रबलप्रभावभवनं दिव्यौषधी संनिधौ नागार्थोपनिषद्विदां शुभदृशां कारुण्यतः प्रेक्षणम् ॥ ४ ॥
क्षमादेवाः क्षमासाराः क्षांत्वा तन्वंतवदः क्षमाम् । प्रमक्षामे क्षमापात्रेऽनवेक्षा सत्सु न क्षमा ॥ ५ ॥

# अथेदमत्रप्रास्ताविकम् ।



श्रीमद्भगवतामहापुरुषेणातर्क्यैंद्रजालिकेनसर्गादावखिलंस्थावरजंगमात्मकंजगद्धर्माधर्मौचसृष्ट्वाऽखिलसंव्यवहारायाऽपरिच्छेद्यशब्दराशिगतत त्तच्छब्दानांतेनतेनार्थेनयथावत्संबंधंपरिकल्प्य सर्वाभ्यर्हितधर्माधर्मप्रतिपादकपदेस्वतःप्रमाणभूतान्वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यःप्रत्यपीप दत् तेचेतरेभ्यइत्येवमुत्तरोत्तरमाविरासीच्छब्दार्थप्रतिपत्तिः । एवंस्वयंभ्वादिपरपरासादितवेदभागामंत्रद्रष्टारः श्रीशसृष्टजनसंघनिर्वाहार्थ विशेषतश्चदुःषमानुभावेनापचीयमानशेमुष्यायुर्बलानामैदंयुगीनमानुषप्राणिनांश्वश्रेयसाकांक्षिणःपारिकांक्षिणोंतराव्यवस्थाकेवलनिगमानामचारिता र्थ्यमन्वानाः शिक्षाकल्पव्याकरणनिरुक्तज्यौतिषच्छंदआत्मकानिवेदषडंगानि नानास्मृतीतिहासादीन्धर्मशास्त्रप्रतिपादकान्निबंधान्परिकल्पयां बभूवुरितिवेदांगस्मृत्यादिसाधनकलापव्यवस्था । अपिचास्यांपरिनिष्ठितामहामहिमभाजोऽग्रेतनाविद्वदग्रेसरा लोकेतिकर्तव्यताक्षमान्नैकशोधर्म शास्त्रप्रतिपादकान्याज्ञिकप्रयोगक्षमांश्चनिबधानरीरचन् । कस्यामपिमानुषकृतावतीतेबहुतिथेकालेभिन्नभिन्नप्रज्ञभाविविद्वद्भिःसूक्ष्मदृशाभूयोभूयः परिशीलनेमूलभूतविविधार्षनिबंधानामग्रेतनविद्वद्वरप्रणीतनिबधानाचकर्त्रैनैक्यात्प्रायःपरस्परविसंवादआपतत्येवेतिवर्ततेखलुनैसर्गिकीस्थितिरनुभू तप्रायैवाखिलप्रेक्षावद्भिः । तथाचैतादृश्यामापदिग्रंथमालिन्येनवर्त्स्यत्यांधर्मग्लानौ धर्मावनबद्धपरिकरस्यश्रीभगवतःप्रेरणयाकेपिमहानुभावाः प्रादुर्भूयगोपायंत्युद्भूतविविधविसंवादपरिहारदक्षयाभिनवयास्वकृत्यानादिनिधनधर्मसेतुमर्यादाम् । अथयमुद्दिश्यायमुपक्रमःसोऽपिमहानुभावो भट्टनारायणः श्रीमद्वाराणस्यांप्रादुर्भूयाखिलजगतीगतद्विजोपकृतये प्रयोगरत्नम्, क्रमशश्चत्रिस्थलीसेतुं, रुद्रपद्धतिं, उत्तरनारायणभट्टीं (अंत्ये ष्टिपद्धतिं ) चेतिसुप्रसिद्धान्निबंधानरीरचत् । उक्तचनिर्णयाब्ध्युपक्रमे श्रीकमलाकरभट्टेन—'वेदार्थधर्मरक्षायैमायामानुषरूपिणम् । पिता

महद्धरिवंदे भट्टनारायणाह्वयम् ॥' इति । मायामानुषरूपित्व नररूपणेनास्या रमानुषप्रभावत्त्वः
तथाच यावत्सेतुहिमशैलयोरंतरालयत्कृतिमुपजीव्यैवपारयतिमस्कारानितिलोकातिशायितास्यस्फुटाभवति ।

## प्रसंगादत्रनारायणभट्टैतिह्यंयथाश्रुतमुपन्यस्यते ।

पूर्वप्रतिष्ठानपुरे( पैठणनाम्नि )कश्चिदाश्वलायनशाखीदेशस्थवर्गीयोमहाविद्वान गोविंदभट्टाख्योविप्रप्रवरआस । अग्रेचतदात्मभूरपिसदाचारसंपन्नो रामेश्वरभट्टः पित्रन्यूनोमहापंडितोबभूव । अयमतीतेऽर्धवयस्यनपत्यत्वेनसमुद्भूतनिर्वेदः सनसकुटुंबपरिवारः काशीक्षेत्रंगत्वातिवाहयामासोर्वरितायुःशेषाहानि । तत्रचप्रत्यहंश्रीभागीरथीतीर्थावगाहोपस्पर्शामृतजलपानश्रीविश्वेश्वरदर्शनानवरतनात्मसदाचारादिभिर्विस्मृतप्रायानपत्यत्वविषादःपरमोदमानांतःकरणःस्वाराध्यदेवश्रीरामचंद्रमारिराध । अथास्यातततपःसपन्नत्वेनश्रीरामकृपयाविश्वनाथानुग्रहेणचचरमेवयसिमूर्तःपुण्यपुंजइवविद्याविनयसद्वृत्तनलावण्यादिगुणगणसंपन्नपुत्ररत्नंबभूव । अयंहरिनाम्ना प्रसिद्धनारायणभट्टनाम्नाचव्यवह्रियते । प्रस्तुतप्रयोगरत्नग्रंथप्रणेतायमेव । बाल्यादप्यस्यलोकातिशायिप्रज्ञाप्रकर्षेणाल्पाभ्यासेनैवायमचिरादधिगतवेदशास्त्रादिविविधतंत्रोयौवनेपित्रब्रह्मवर्चसीसर्वतंत्रस्वतंत्रोबभूव । श्रीमच्छारदापांगेक्षितकाशीक्षेत्रनिवासिविद्वद्विजमंडलमंडनायमानस्यास्यसर्वत्रप्रससारकीर्तिपरिमलोपि । अथकदाचनोच्छृंखलैर्यवनैरार्यधर्मोच्छेदैकव्यसनैःकाश्यामागत्यालोचि यदार्यैरहर्दिवविश्वेश्वरएवाराध्यतेतोऽयमेवैषासर्वस्वमस्योच्छेदेचार्योच्छेदस्तद्धर्मह्रासश्चानायासेनसंपादितःस्यादितितिनिश्चित्यतेश्रीविश्वेश्वरमंदिरंहठादुचखनुः । तेनातिक्रूरकर्मणातत्रत्याश्चत्वारोपिवर्णाःप्रबलयवनसवशासनासमर्थाःसंतोहाहाकृत्वामहताकष्टेनावात्सुः । अतिभयकरेणानेनदुर्यवनातिचारेण भगवत्क्षोभादखिलराष्ट्रेदेवोनववर्ष । अथोजलवान्यतृणाद्यभावेनसर्वेपि

ग्लानिमापन्नादीनाःसंतःकथंकथमाप्यतिवाहयामासुर्दिनानि । अथैतादृशिकष्टतरेकालआपन्निरसनक्षमंकमप्युपायमजानानायवनप्रभवोपिकर्णो पकर्णिकयाश्रुतं नारायणभट्टस्यालौकिकप्रभावमनुभवितुंकाश्यातत्सविधमागत्यपप्रच्छुरवर्षणनिदानम् । तच्छ्रवणानुपदमेवोचेनिर्भीकेनभट्टनाराय णेन भवत्कृतश्रीविश्वेश्वरमंदिरोच्छेदापचारएवनिदानमस्त्यस्यदुर्भिक्षस्येति । तैःपुनरूचेकिमत्रमानंभवदुक्ततथ्यातथ्यांशे, यदिस्यादद्यैवस्वल्पा पिवृष्टिः साधयामस्तर्हिभवत्कथितानुगुणभवद्धस्तेनैवपुनःपूर्ववन्मंदिरमिति । भट्टनारायणेनापिसपदिस्वाराध्यदेवतां श्रीरामंश्रीविश्वेश्वरंचसचित्यो क्तं एवचेत्सुवृष्टिरद्यप्रभृत्येवभवितेति । ववर्षचतदहरेवभगवान्पर्जन्यस्तेनाखिलास्तुतुषुः यवनाश्चानुपदंकारयामासुस्तद्धस्तेनैवमंदिरनिर्माणपूर्वक श्रीविश्वेश्वरप्रतिष्ठाम् । अदुश्चैनंमहता सभारेणरामाननपूर्वजगत्पूज्यांजगद्गुरुसज्ञाम् काशीक्षेत्रवासिनश्चसर्वेविद्वांसःसंघीभूयाद्दुरखिलमंत्रजा गरसभाप्रसंगेष्वग्रपूजाम् । याकिलैतावंतंतदन्ववायेऽव्याहतंप्रचलति । जगद्गुरुसंज्ञाचेयंनारायणभट्टमभिव्याप्यैवासीन्नतद्वंश्येषु । इति ।

## भट्टनारायणवंश्यानांतत्कृतीनांचनिर्देशः ।

सर्वाग्रगण्यो भट्टनारायणः अस्यप्रयोगरत्नं, त्रिस्थलीसेतुः, रुद्रपद्धतिः, उत्तरनारायणभट्टी (अंत्येष्टिरिति) ग्रंथाः प्रणीताःसंति। अस्यतनयौद्वावा स्तां **रामकृष्णभट्टः शंकरभट्टश्च** । तत्ररामकृष्णभट्टस्य तत्रवार्तिकव्याख्या, जीवत्पितृकनिर्णयश्च । शंकरभट्टस्यतु द्वैतनिर्णयः । रामकृष्णभट्टस्य पुत्रत्रयमासीत् **दिनकरभट्टः, कमलाकरभट्टः, लक्ष्मणभट्टश्च** । तत्राद्योदिनकरएवक्वचिद्दिवाकरशब्देनव्यवह्रियते । दिनकरस्यभाट्टदिनकर मीमासा, उद्योतः, शांतिसारश्च । अस्यतनुजन्माविश्वेश्वरभट्टः । **गागाभट्ट**इत्यस्यैवापरंनाम । अस्यकायस्थधर्मदीपः, भाट्टचिंतामणिः, गागा भट्टीच । अस्याग्रेकुरलोपः । अग्रेवंशधरःद्वितीयो भट्टनारायणपौत्रः **कमलाकरभट्टः** । अस्य निर्णयसिंधुः, पूर्तकमलाकरः, शांतिकमलाकरः,

विवादतांडवं (विवादकमलाकरः), काव्यप्रकाशव्याख्या, कमलाकराह्निकम्, शूद्रकमलाकरश्च। तृतीयस्तुलक्ष्मणभट्टः। अस्यैकं आचाररत्नम्। अग्रेकमलाकरभट्टपुत्रास्त्रय आसन् अनंतभट्टः, प्रभाकरभट्टः, शामभट्टइति। तत्रानंतभट्टस्यरामकल्पद्रुम एकएव। अत्रभट्टनारायणवंश्यानातत्कृतीनांचज्ञातानामेवकृतोस्तिविन्यासस्तथापिरार्वेषामेषांमहामहिमत्वेनान्येपिकतिचनग्रंथाएतदन्यतमप्रणीताल्लः येरन्नित्यनुमीयते तत्रात्यंतपरिचयभाग्भिर्महाशयैरावेदितेसमावेशयामोऽस्यपुनर्मुद्रणावसरे। तथात्रनिबंधेऽस्मदनवधानदृक्चांचल्याक्षरयोजकादिजन्यस्खलितस्थलेष्वपिदयालवोविद्वांसःपरिशोधयंतु कृपार्द्रांतःकरणेनावेदयंतुमातदनुगुणंपुनःपरिशोधयेयेति सांजलिबंधंप्रार्थ्योपरमतेऽस्माल्लेखनव्यापारात्—

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजन्मा

**वासुदेवशर्मा।**

# अथप्रयोगरत्नविषयक्रमः ।

# अथोत्तरनारायणभट्टी(अंत्येष्टि)विषयाः ।

# सप्तपाकसंस्थौपयिकयज्ञपात्राकृतयः ।

अथौपयुक्तपात्रप्रकृतिवृक्षाउच्यंते । प्रयोगपारिजाते स्मृत्यर्थसारे । 'जुहूःपालाश्युपभृदाश्वत्थीवैकंकतीध्रुवा । यद्वासर्वाःस्रुचः कार्याएतेपामन्यवृक्षतः । शमीमय्यःस्रुचःकार्याःसर्वावाभूर्जवृक्षजाः । तदलाभेयथालाभमन्ययज्ञियवृक्षजाः । खादिरस्तुस्रुवःकार्यःशम्याप्राशित्रमेक्षणे । खादिरोमुसलःकार्यःपालाशःस्यादुलूखलः । मुख्याभावेतुसदृशंद्रव्यप्रतिनिधीयते' । संग्रहेतु—'मृन्मयानिचपात्राणितैजसाश्मम यानिच । सर्वेपामेवपात्राणांशंखःशुक्तिश्चशस्यते । तयोश्चशंखउत्कृष्टोगृहीयाद्यज्ञकर्मणि । दारवाणिचकार्याणियथाशक्त्यनुरूपतः । पूर्णपात्राद्यो ग्राह्याःशस्तायज्ञद्रुमोद्भवाः । प्रशस्तौपूर्णपात्रार्थेदारुकास्यमयौमुखे । खादिरेणस्रुवःकार्यःपालाशेनजुहूर्भवेत् । त्वक्पदेशेविलेस्यातामन्यैर्वायज्ञियैर्द्रुमैः । तदलाभेपलाशस्यपर्णाभ्याहूयतेहविः । पलाशपर्णाभावेतुपर्णैर्वापिप्पलोद्भवैः । पलाशस्यपर्णाभ्यामित्यत्र मध्यमपर्णेनेतिवेदितव्यम् । "मध्यमेनपर्णेनजुहोति"इतिश्रुतेः । चमसंवाप्रणीतायाःकांस्यपात्रमथापिवा' इति । पात्रप्रमाणमत्रिराह—'अङ्गुष्टपरिमाणाढ्यंदंडकुर्भकभूपितम् । पुष्करपुष्कराग्रेतुमध्यरेखोच्छ्रिताकितम् । स्रुक्स्रुवावप्यथैकरौदंडवृत्तसुशोभितम् । अंगुष्टपरिणाहाढ्यंस्रुतियत्रविनिर्मितम् । द्व्यंगुलमूलदेशेतुकुम्भपुष्करमूलगम् । एकगतद्विजानीयात्रिभागेनतुपुष्करम् । वेदिःसप्तांगुलाकार्यापचवृत्तप्रकल्पयेत् । त्रीणिखातंसमकार्यमग्रंकुर्यात्पडगुलम् । गोकर्णाकृतिशोभाढ्यकनिष्ठांगुलपंचकम् । घृतनिष्कप्रमाणंचयवत्रयसुरेखितम् । एवंस्रुचंस्रुवंकृत्वाताभ्यांहोमाःसुखावहाः' । पात्रघटनाप्रकारः संग्रहे—'आयामंपंचधाकृत्वाद्विभागंपात्रमुच्यते । त्रिभागंदंडमित्याहुरेतदायामलक्षणम् । पात्रायामार्धतःपात्रविस्तारश्चेत्तदर्धत ।

ग्रीवाविस्तारस्तस्यार्धाद्बिलस्योच्छ्रायइष्यते । विस्ताराद्द्विगुणंपात्रंग्रीवाविस्तारमर्धतः’ इति । पुनरप्याह—‘स्रुवस्रुचोःप्रमाणंचलक्षणंसम्यगुच्यते । अरत्निमात्रमायामस्तयोर्मध्येस्रुवस्यतु । बिलमंगुलमानेनअंतर्व्यंगुलमानतः । मूलेव्यंगुलमात्रेतुद्वेलेखेविलिखेत्ततः । दर्व्याविशेपतश्चैवदंडस्त्वष्टांगुलोभवेत् । चतुरंगुलमानेनग्रीवांकुर्यात्ततःपरम् । पंचांगुलप्रमाणेनबिलंकुर्यात्तुसर्वतः । बिलाच्चपूर्वभागेतुपुच्छंसप्तांगुलंभवेत् । सर्वतोबिलमाख्यातंकुर्यात्र्यंगुलमानतः । स्रुतियंत्रंपुच्छभागेकारयेद्यवमानतः । काकपक्षाकृतिवाग्रंकुर्याद्धंसमुखाकृति । ग्रीवाविस्तारंतुकुर्यात्सार्धव्यंगुलमानतः । ग्रीवोपरिसमंताच्चदृढरेखास्तुकारयेत् । इदंस्थौल्यंकुंभयोश्चकुर्यादंगुष्ठमानतः’ । इति । विशेपविस्तारोगृह्याग्निसागरादावालोचनीयः ॥

---

## यज्ञपात्राणिकिंपरिमाणानीत्यपेक्षायां " वितस्तिर्गृह्यकर्मणि " इतिप्रमाणात्तावंतीतिज्ञेयानि ।

१ चरुस्थाली. २ प्रोक्षणी. ३ दर्वी, स्रुक्. ४ स्रुव ५ प्रणीता, चमसः ६ आज्यपात्र. ७ इध्म ८ बर्हि. ९ शूर्प. १० कृष्णाजिन.

१ इयंताम्रमयीमार्तिकीवाअष्टांगुलासंकुचितानना २ इयंस्रुगाकारावारणवृक्षजाविस्तारार्धनिम्ना. ३ इयंपालाशीद्वादशांगुला. ४ अयंखादिरोवितस्तिप्रमाणोर्धांगुलच्छिद्रः. ५ अयंपैप्पल.षडंगुलश्चतुरंगुलदंडः. ६ इदंकांस्यजंमृन्मयंवाषडंगुलं ७ इदंगार्हेष्वरत्निप्रमाणंपंचदशयज्ञियसमित्कं, प्रादेशमितमन्यत्र. ८ इदंप्रादेशमात्रमुष्टिपरिमितदर्भरूपं. ९ इदंवंशानिर्मितं. १० इदंपुंरूपहरिणस्यचर्म.

११ उलूखलं.


१२ मुसल.


१३ दृषत्


१४ उपला.


१५ मेक्षणं.


१६ पिष्टोद्वपनी.


१७ शम्या


१८ वेद


१९ उपवेष.


११ इदंपालाशदारुकृतं. १२ इदंखादिरं १३ इयंपापाणमयी १४ अयंपाषाणःपेषणसाधनं. १५ इदंयज्ञियदारुजं १६ इयंयज्ञियदारुकृता. १७ इयंखादिरी. १८ अयंदर्भमुष्टिकृतोगोवत्सजान्वाकारोवस्तुविशेषः, अयंकुशमार्जनीरूपआयतनावकरोन्मार्जनसाधनं १९ अंगाराणां-वहिर्निर्वहणार्थासमित्.

२० मदंतीपात्रं. २१ स्फ्यः २२ वैकंकती स्रुक्. २३ कपालं. २४ शकट. २५ जुहू २६ मदश यज्ञियदारुज २७ शिक्यस्था सक्तुस्थाली. २८ पिष्टोद्वपनसाधनं.










२० इदंजलसंतपनपात्रं २१ काष्ठखड्गःस्फ्यः २२ इयंस्रुक्वैकंकतदारुजा २३ इदंमृन्मयमश्वशफाकारपुरोडाशश्रपणसाधनम्. २४ अयंयज्ञियदारुजःयजनोपवेशनपरिमितोमुस्य असंभवेव्रीहिस्थापनपर्याप्तः २५ आज्यधारणार्थपात्रं २६ अयंयज्ञियदारुकृतआयसोवाआयतनाद्बहिर्गतस्याग्नेर्ग्रहणादिसाधनं २७ इयंसर्पवल्यंगसक्तुनिधानकल्पाशिक्यस्थापितास्थाली २८ इदंपिष्टाद्युद्वपनसाधनं.

# सर्वसामान्येतिकर्तव्यता ।

'अनाम्नातेषुधर्मेषुकथंस्यादितिचेद्भवेत् । यंशिष्टाब्राह्मणाब्रूयुःसधर्मःस्यादशंकितः ॥
धर्मेणाधिगतोयैस्तुवेदःसपरिबृंहणः । तेशिष्टाब्राह्मणाज्ञेयाःश्रुतिप्रत्यक्षहेतवः ॥' मनुः ।
'केवलंशास्त्रमाश्रित्यनकर्तव्योविनिर्णयः । युक्तिहीनविचारेतुधर्महानिःप्रजायते ॥' कुल्लूकभट्टः ॥

अथाखिलमहानिवंधेषुलघुष्वपित्रसर्वत्रप्रयोगारंभे—अथयजमानः कृताभ्यंगस्नानः परिहिताहतवस्त्रो धृतमंगलतिलकः पत्न्यासहसंस्कारेषुकरिष्यमाणेषुपुमपत्यस्त्र्यपत्यरूपसंस्कार्येणचसह आसनउपविश्य आचम्य पवित्रपाणिःप्राणानायम्य यथाचारमिष्टदेवताकुलदेवतागुर्वादीन्नत्वा सुमुखश्चेत्यादिनानापद्यपाठपूर्वकं देवताःस्मरन् देशकालौसंकीर्त्य करिष्यमाणकर्मसंकल्पयेत्' इत्येवमादिवाक्यैःसमस्तैर्व्यस्तैरप्येतदन्यतमैःसाधारण्येनसर्वेषां केवलमुपक्रमएवदृश्यते नतत्रतत्रास्त्येषांस्वरूपादिनिर्णयइत्यनाकलितविविधनिवंधानामनायासेनतदवगमाय प्रसंगान्निर्णीतानि । तदंतेचसर्वत्रोपयोक्ष्यमाणमंत्राणामृषिदैवतच्छंदसांस्मृतिक्रमविचारश्चक्रियते ॥

**अभ्यंगलक्षणम्** । **आचाररत्ने योगरत्नाकरे**—'अभ्यंगमाचरेन्नित्यंगर्वेचंगेपुपुष्टिदम् । शिरःश्रवणपादेपुतंविशेषेणशीलयेत् । सार्षपंगंधतैलंचयत्तैलंपुष्पवासितम् । अन्यद्रव्ययुततैलनदुष्यतिकदाचन ।' इति । **प्रायश्चित्तशूलपाणावायुर्वेदे**—'मूर्ध्निदत्तंयदातैलंभवेत्सर्वांगसंगतम । स्रोतांसितर्पयेद्राहूअभ्यंगःराउदाहृतः' इति । **अन्यत्रापि**—'तिलामलककल्केनतिलकल्केनवापुनः । सर्वांगोद्वर्तनंकृत्वास्नायादुष्णेनवारिणा' इति । 'एतदन्यतमद्रव्योद्वर्तनपूर्वकमुष्णोदकेनस्नानंमंगलस्नानमभ्यंगस्नानंचसंपद्यते । इत्यभ्यंगप्रकारसंक्षेपः ॥'

**अहतवासोलक्षणम्** । **अहतलक्षणमाहाचाररत्ने पुलस्त्यः**—'ईषद्धौतंनवंश्वेतसदशंयन्नधारितम् । अहतंतद्विजानीयात्सर्वकर्मसुशोभनम्' इति । ब्राह्मे—'अच्छिन्नाग्रंचयद्वस्त्रंमृजाप्रक्षालितंचयत् । अहतंधातुरक्तवातत्पवित्रमितिस्थितिः' इति । प्रशंसतितर्पणेसदशंतथा । कापायधातुरक्तवानोल्बणंतत्तुकर्हिचित्' इति । उल्बणमारक्तम् । **माधवीयेप्रजापतिः**—'क्षौमंवासः' त्पारंपर्याचाराच्च । इतिपरिधानीयाहतवासोलक्षणम् ॥ दुकूलत्वारक्तमपीष्यते शिष्टैर्महावस्त्रत्वेनतस्यादरा-

**मंगलतिलकः** । तिलकोयंमांगलिकारंभात् कृताभ्यंगस्नानस्यगोपीचंदनादेरधार्यत्वाच्च गंधकुंकुमकेशरसिंदूराद्यन्यतमेनमांगलिकद्रव्येण कार्यः । **तदुक्तमाचाररत्ने हारीतेन**—'अभ्यंगेसूतकेचैवविवाहेपुत्रजन्मनि । मांगल्येषुचसर्वेषुनधार्यंगोपिचंदनम्' इति । मंगलद्रव्याण्यपि 'रोचनंचंदनगंधं' इत्यादिकात्यायनपरिगणितेभ्योललाटधार्याण्येवात्रयोज्यानि । **मदनपारिजातेब्रह्मांडेतिलकंप्रक्रम्य**—'श्यामंशांतिकरंप्रो-क्तंरक्तंवश्यकरंतथा । श्रीकरंपीतमित्याहुःश्वेतंमोक्षप्रदायकम्' इति कामनाभेदेनव्यवस्थाकृतास्ति । तत्रश्याममृगमदादेः । रक्तकुंकुमसिंदूरादेः । पीतगोरोचनादेरित्याचाररत्नात् । इतितिलकव्यवस्था ॥

आसनोपकरणवस्तूनि । तान्याहव्यासः—'कौशेयंकंवलंचैवअजिनंपट्टमेवच । दारुजंतालपत्रंवाआसनंपरिकल्पयेत्' इति । कालिकापुराणे—'चतुर्विंशत्यगुलैस्तुदीर्घकाष्ठासनंमतम् । षोडशांगुलविस्तीर्णमुत्सेधेचतुरंगुलम् । पंचांगुलंवाकुर्यात्तुनोच्छ्रितंकारयेत्ततः । आसनेवस्त्रंद्विहस्तान्नोदीर्घं सार्धहस्तान्नविस्तृतम् । 'त्र्यगुलंतुतथोच्छ्रायंपूजाकर्मणिसंश्रयेत'। सर्वेषांतैजसानांचआसनंश्रेष्ठमुच्यते' इति । कचिद्भद्रासनउपविश्येत्यपिदृश्यते । भद्रासनशब्दश्चमण्यादिविरचितनृपासनवाचकः । तस्यचसर्वेषामसुलभत्वान्नृपासनवद्यावच्छक्यंसर्वतःशोभनमासनंविधेयमितिप्रतीयते । इत्यासनोपकरणवस्तूनि ॥

अथासनविचारः । तत्रप्रयोगपारिजातेभगवान्—'अथशुद्धेसमेदेशआसीनःप्राङ्मुखःशुचिः ।' इतिस्थलशुद्धिपूर्वकंकर्तुःशुद्धिप्राङ्मुखासीनतांचानुजज्ञे । आचार्यस्तु—'ततःप्राङ्मुखआसीनःप्रागुदङ्मुखएववा ।' इतिप्रागुदङ्मुखात्मकंविशेषंनिबबंध । एवमन्येपि । तथाचैवमादिविविधप्रमाणैरासनोपविष्टएवयष्टाऽऽचमनाद्यखिलकर्माधिकारीसंपद्यते । उपविशंश्चप्रायःप्रथममूर्ध्वज्ञुःसन्नेवोपविशतीत्यस्तिनैसर्गिकीलोकप्रवृत्तिः । तथोपवेशनेचाचमनादौवहिर्जानुहस्तकर्मनिर्वर्तनजन्यप्रत्यवायोऽनभिज्ञस्यकर्तुर्माप्रसांक्षीदितिभगवान्याज्ञवल्क्यः—'अंतर्जानुःशुचौदेशेउपविष्टउदङ्मुखः । प्राग्वाब्राह्मेणतीर्थेनद्विजोनित्यमुपस्पृशेत्' इत्युपस्पर्शेऽतर्जानुत्वमनुशशास । तत्रांतर्जानुःजानुनोर्मध्येहस्तौकृत्वेतिमिताक्षराकारोव्याचख्ये । तत्सिद्धमूर्ध्वज्ञुरप्यंतर्जानुःकर्माचरिष्यन्कर्तानप्रत्यवैतीति । अतएवधर्माब्धिकारोब्रह्मयज्ञोपक्रमेप्रथममासनबंधमुक्त्वापक्षांतरे—'अथवावामपादांगुष्ठोपरिदक्षिणपादांगुष्ठंनिधायैवमुपस्थंकृत्वा' इत्यासनबंधमंतरापिप्रकृतकर्मनिर्वर्तनमचूचुदत् । परंत्वेतादृशनिबंधकारानुज्ञातकर्मस्वेवोर्ध्वज्ञुतायाःसमावेशोनसर्वत्रेतिनिश्चीयते । कुतः । धर्माब्धिकृतैवादौ 'वामजंघोपरिमूलदेशेदक्षिणंपादंनिधाय'

इत्यनुशासनात्, तथान्यमहानिबंधकारैरपि 'आसनंबद्ध्वा' 'बद्धासनः' इतितत्रतत्रोत्कीर्तनात्सर्वत्रासनबंधआवश्यकएव क्वचिदेवोर्ध्वजानुतेति निरपवादो राद्धांतः ।

अथप्रसंगतोजानुनिपातविचारःक्रियते । प्रयोगपारिजातेस्वस्तिवाचनकारिकासुशौनकः—'कर्ताथदक्षिणंजानुपातयित्वामहीतले' इति, श्राद्धपरिभाषोपक्रमेधर्माब्धिः—'निपात्यदक्षिणंजानुदेवान्परिचरेत्सदा । पितॄणांपरिचर्यातुवामजानुनिपातनात्' इति । (अत्रदैवपित्र्य-कर्मप्रविभागोविशेषः ) । एतच्चजानुनिपातनं 'आच्याजानुदक्षिणतोनिपद्य०' ( ऋ० स० ७८।१८ ) इतिश्रुतौ, तथा 'विपर्यासितरितेमंत्रेजा-न्वाच्याहुतिंजुहुयात्' (४।२६।२५) इत्याश्वलायनसूत्रे, तथान्यत्रापिस्मृतिषुवाक्येषुचक्वचिज्जान्वाच्येति क्वचिच्चजानुनिपात्येत्युभयथातादृशताद-शकर्मोपक्रमेषुबहुत्रदरीदृश्यते । 'आच्याजान्वि'तिमंत्रे 'जानुआच्य—निपात्य' इत्येवार्थं सायनाचार्योऽभापिपत् । आच्येत्यत्राङुपसर्गाद्ग-त्यर्थकादञ्चेःक्त्वा । निपात्येत्यत्रनिपूर्वकणिजतपतधातोःक्त्वा । नितरापातोनिपातः । ऊर्ध्वीकृतयोर्जान्वोरधःपातनतस्यार्थः । अत्रसंशेरते बहवःकिंनिपातशब्देनजानुन्युब्जीकरणविवक्षित आहोस्वित्केवलमधःपातनवेति । तत्रोर्ध्वजानोरधःपातनमेवनिपातनप्रतीमःनतुन्युब्जीक-रणम् । कुतः । स्वस्तिवाचनोपक्रमे—'कर्ताथदक्षिणजानुपातयित्वामहीतले' इतिशौनकवाक्येजानोर्महीतलेसामान्यतःपातनमात्रविधानात्, न्युब्जीकरणपक्षांगीकारेसमग्रजानुनोभूतलपातनासंभवात्, यथोक्ताऽपातनेशास्त्रातिक्रमजन्यकर्मवैगुण्यापत्तेः, भूतलएवजानुनिपातस्यसाधी-यस्त्वात् सुशकत्वाच्च' । 'अतइममर्थंप्रचिख्यापयिषुर्वृत्तिकृत् 'सर्वत्रजानुनिपातनमुपस्थस्योत्तानत्वाविरोधेनकर्तव्यंनन्यग्भावेन' इत्यवीवृतत् । अस्यार्थः—जानुनिपातन सर्वत्र उपस्थस्य—उत्सगापरनाम्नोजघामूलदेशस्य उत्तानत्वाविरोधेन—उत्तानत्वस्यअविरोधेनउत्तानत्वभंगोयथानभवे-

१ उपस्थशब्दोत्रजानुर्मूलवचन —(ऋ सं ८।१।११) 'प्रहोताजातो०—दपामुपस्थे' इति । भाष्य—'अपां अंतरिक्षनामैतत् । अंतरिक्षस्योपस्थेउत्सगे' इति ।

त्तथाकर्तव्यं, नन्यग्भावेन—न्युब्जीकरणेननकर्तव्यमिति । यथामतिस्फुटीकृतेत्रजानुनिपातविचारेसदसद्विपर्ययेसदसद्विवेकचणानिर्मत्सराविद्वांसएवप्रमाणमित्यलंबहुलेखनेन ।

**आचमनम्** । तद्यथा—अप्रावृतशिरःकंठउपविष्टोंगुष्ठमूलेनमुक्तांगुष्ठकनिष्ठहस्तेनानुष्णंफेनादिरहितंजलंहृदयंगतंत्रिःपिबेत् । केशवाद्यैस्त्रिभिःपीत्वेत्यादेःसर्वेषांसौकर्यायार्थिकउपन्यासः—ॐकेशवायनमः **नारायणाय०** **माधवाय०** इतित्रिरपःप्राश्य । **गोविंदाये**तिदक्षकरंमृजेत् । **विष्णवे०** **मधुसूदनाये**तिद्वाभ्यां ऊर्ध्वाधरोष्ठौमृजेत् तत्रोर्ध्वोष्ठस्यांगुल्यग्रैःस्पर्शः । **त्रिविक्रमाये**तिओष्ठौमार्जयेत् । **वामनाये**तिजलमभिमंत्र्य **श्रीधराये**तिवामकरंक्षालयेत् । **हृषीकेशाये**तिदक्षपादंप्रक्षाल्य **पद्मनाभाये**ति वामपादंप्रक्षालयेत् । **दामोदराये**तिमूर्धानंप्रोक्षेत् । **संकर्षणाये**तिऊर्ध्वोष्ठंप्रोक्षेत् । **वासुदेवाये**तिदक्षनासापुटंप्रोक्षेत् । **प्रद्युम्नाये**तिवामनासापुटंप्रोक्षेत् । अयंनासिकयोःस्पर्शोंगुष्ठतर्जनीभ्याम् । **अनिरुद्धाये**तिदक्षनेत्रस्पर्शः । **पुरुषोत्तमाये**तिवामनेत्रस्पर्शःअंगुष्ठानामिकाभ्याम् । **अधोक्षजाये**तिदक्षकर्णस्पर्शः । **नारसिंहाये**तिवामकर्णस्पर्शःअंगुष्ठकनिष्ठिकाभ्याम् । ताभ्यामेव **अच्युताये**तिनाभिस्पर्शः । **जनार्दनाये**तिहृदयस्पर्शस्तलेन । **उपेंद्राये**तिमूर्धस्पर्शःपाणिना । **हरय**इतिदक्षभुजस्पर्शः **श्रीकृष्णाये**तिवामभुजस्पर्शःअंगुल्यग्रैरिति । प्रणवपूर्वकाणामेवनाम्नांसर्वत्रोहः । केचनकेशवायस्वाहेत्याकारकाणिस्वाहांतान्येवनामानिप्रयुंजते । एवमाचमनविधावशक्तस्त्रिःपीत्वाकरप्रक्षाल्यदक्षकर्णस्पृशेत् । अन्येपिप्रकाराः—त्रैवर्णिकैर्गायत्रीमंत्रपादत्रयेणत्रिःप्राश्य व्याहृतित्रयेणवाहस्तंप्रक्षाल्यदक्षिणकर्णस्पर्शःकार्यइत्यादयोविस्तरभियानात्रसंगृहीताः इति आचमनविचारः ॥

---

तथाचूडोपक्रमे ( आ सू १।१७।३ ) 'पश्चात्करिष्यमाणोमातुरुपस्थे' इति। वृत्ति —'मातुरुपस्थेउत्सगे' इति । ब्रह्मयज्ञोपक्रमे ध सि.—वामजघोपरिमूलदेशेदक्षिणपादंनिधा०—यैवमुपस्थ कृत्वेत्यादिस्थलेषुद्रष्टव्य ।

पवित्रलक्षणम् । चंद्रोदयेऽत्रिः—'उभयानामिकाभ्यांतुधार्येदर्भपवित्रके' । मार्कंडेयः—चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् । एकैकन्यूनमुद्दिष्टवर्णेवर्णेयथाक्रमम्' । स्मृत्यर्थसारेतु—'सर्वेषावाभवेद्वाभ्यांपवित्रंयत्रकुत्रचित्' । भरद्वाजः—'अत्रोक्तसंख्यापिंजूलान्येकीकृत्यसमंयथा । मूलानिदक्षिणेहस्तेधृत्वाग्राण्यन्यपाणिना । दक्षहस्तेनतद्वाममनुवर्त्यप्रदक्षिणम । तथैवाग्रेणचावेष्ट्यकुर्याद्ग्रंथियथादृढाम्' । वृत्तग्रंथिलक्षणंहेमाद्रौगारुडे—'अर्धप्रदक्षिणीकृत्यशिखांपाशप्रवेशयेत् । वैष्णवेनैवमार्गेणवृत्तग्रथीपवित्रके' । वैष्णवोमार्गःपश्चाद्भागः । ब्रह्मग्रंथिरपितत्रैव—'सत्यज्यवैष्णवमार्गंब्राह्ममार्गविमिश्रितम् । सकृत्प्रदक्षिणीकृत्यब्रह्मग्रंथिःसउच्यते' । कर्तुरभिमुखप्रदेशोब्रह्ममार्गः । ब्राह्मे—'मंत्रविनाधृतंयत्तत्पवित्रमफलंभवेत् । तस्मात्पवित्रमंत्राभ्याधारयेदभिमंत्र्यच । पवित्रतेतुइत्यादिमंत्रद्वितयमस्तुतु । प्रणवस्त्वस्यमंत्रःस्यात्समस्ताव्याहृतीस्तुवा' । पृथ्वीचंद्रोदये—'धृतपवित्रकर्मांतेग्रंथिमुक्त्वातुतत्त्यजेत्' इति । हेमपवित्रप्रशंसा—सर्वाण्येवपवित्राणिकुशकाशमयानिच । तानिहेमपवित्रस्यकलांनार्हंतिषोडशीम्' इति । इदंचशास्त्रीयपचगुंजारूपमाषमानेनषोडशमाषमित ( अशीतिगुंजात्मक ) ब्रह्मग्रंथियुतधार्यनन्यूनाधिकमितिप्रमाणविदः ॥ इतिपवित्रलक्षणसंक्षेपः ॥

प्राणायामविचारः । माधवीयेबृहस्पतिः—'बद्धासनंनियम्यासून्स्मृत्वाचर्ष्यादिकततः । सनिमीलितदृङ्मौनीप्राणायामसमभ्यसेत्' । योगयाज्ञवल्क्यः—'कुंभकःपूरकोरेच्यःप्राणायामस्त्रिलक्षणः । नासिकाकृष्टउच्छ्वासोध्मातःपूरकउच्यते । कुंभकोनिश्चलश्वासोरिच्यमानस्तुरेचकः' इति । कृष्णभट्टीयेसंग्रहे—'दशप्रणवसंयुक्तागायत्रीशिरसासह । त्रिःपठेदायतप्राणःप्राणायामःसउच्यते' । सप्तव्याहृतीनामादौसप्तसावित्र्याआदावेकइत्यष्टप्रणवाः शिरसआदावंतेचैकैकइतिदशप्रणवाज्ञेयाः । सचेत्थम्—प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवतादैवीगायत्रीछंदः ॥

सप्तानांव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजगोतमात्रिवसिष्ठकश्यपाऋषयः अग्निवाय्वादित्यबृहस्पतिवरुणेंद्रविश्वेदेवादेवताः गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि ॥ गायत्र्याविश्वामित्रऋषिः सवितादेवता गायत्रीछंदः ॥ गायत्रीशिरसःप्रजापतिर्ऋषिः ब्रह्माग्निवाय्वादित्यादेवताः यजुश्छंदः । प्राणायामेविनियोगः । सर्वांगुलिभिस्तर्जनीमध्यमानामिकांगुलिभिर्वानासांधृत्वा दक्षिणेनवायुमाकृष्यरोधयेत् । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्य ॐ तत्सवितुर्वरेण्यं० प्रचोदयात् ॐ मापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् इतिसप्रणवसप्तव्याहृतिगायत्रीशिरस्त्रिःपठित्वावामनासयावायुविसृजेदितिप्राणायामः । विशेषविचारोऽन्यत्रमहानिबंधेषुद्रष्टव्यः । इतिप्राणायामः ॥

देवादिनमनम् । अयमत्रपारिजातधृतःक्रमः यथा—श्रीमन्महागणाधिपतयेनमः । लक्ष्मीनारायणाभ्यांनमः । उमामहेश्वराभ्यांनमः । वाणीहिरण्यगर्भाभ्यांनमः । शचीपुरंदराभ्यानमः । दुर्गायैनमः । क्षेत्रपालायनमः । वास्तुपुरुषायनमः । मातृभ्योनमः । पितृभ्योनमः । गुरुभ्योनमः । आचार्येभ्योनमः । इष्टदेवताभ्योनमः । कुलदेवताभ्योनमः । ग्रामदेवताभ्योनमः । स्थानदेवताभ्योनमः । आदित्यादिनवग्रहेभ्योनमः । सर्वेभ्योदेवेभ्योनमः । सर्वेभ्योब्राह्मणेभ्योनमः । एतत्कर्मप्रधानदेवताभ्योनमः । अविघ्नमस्तु । सुमुखश्चैकदंतश्चकपिलोगजकर्णकः । लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः । द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेच

[1] पारिजातेतुकलशाभिमंत्रणोत्तर—एवमेता समावाह्यकलशेदेवतास्ततः । एतान्मंत्रस्थितान्देवान्सपूज्यप्रार्थयेत्क्रमात् । 'तत —सर्वेषुकालेषुसमस्तदेशेष्वशेषकार्येषुतथेश्वरेश्वर । सर्वे स्वरूपैर्भगवाननादिमान्ममास्तुमांगल्यविवृद्धयेहरि ॥ स्मृतेसकलकल्याणभाजनयत्रजायते । पुरुषंतमजनित्यंव्रजामिशरणंहरिम् ॥ तदेवलग्नमित्यादिपाठ । क्वचिदन्यत्र—अभीक्षितार्थसिद्ध्यर्थंपूजितोय सुरासुरै । सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ इत्यधिकं । क्वचित्—लाभस्तेषांजयस्तेषांकुतस्तेषांपराजय । येषामिंदीवरश्यामोहृदयस्थोजनार्दन । इति। क्वचित्—अगजाननपद्मार्कंगजाननमहर्निशम् । अनेकदंतंभक्तानामेकदंतमुपास्महे । इति क्रमोत्क्रमविपर्यस्तानाअनेकपद्यानापाठक्रमोदृश्यतेसोप्यनादरणीय 'सर्वेषामप्येषांपद्यानांभगवत्प्रार्थनस्मरणनत्यादिभिर्मंगलांगसत्वात् इति ॥

प्रवेशेनिर्गमेतथा । संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजम् । प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधके । शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् । सरस्वतींप्रणौम्यादौसर्वकार्यार्थसिद्धये ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव । विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेऽङ्घ्रियुगंस्मरामि ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलम् । येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः । तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः । देवादिशंतुनःसिद्धिंब्रह्मेशानजनार्दना. ॥

देशकालनिर्देशविचारः । बृहन्नासः—'देशकालादिस्मरणंदेवतास्मरणंतथा । संकल्पेविधिवत्कार्यंनित्यधर्मस्यहेतव' इति । मयूखेब्रह्माण्डभविष्ययोः—'मासपक्षतिथीनांचनिमित्तानांचसर्वशः । उल्लेखनमकुर्वाणोनतस्यफलभाग्भवेत्' । निमित्तानांसंक्रमार्धोदयादीनाम् । सिंहस्थपद्धतौसंग्रहे—'अब्दायनर्तुमासांश्चपक्षतिंऋक्षवारकम् । योगंश्चकरणंचेतिसंकल्पोयमुदाहृतः' । संकल्पेप्रायेणसंवत्सरादयश्चाद्रमानेनवाच्या. । एतच्चनिर्णयसिंधावार्ष्टिषेणः—'स्मरेत्सर्वत्रकर्मादौचाद्रंसंवत्सरंसदा । नान्यंयस्माद्वत्सरादौप्रवृत्तिस्तस्यकीर्तिता' इति । तत्रादौक्रियमाणकर्मसंकल्पारंभेदेशकालयोर्निर्देशं प्रथममुपतिष्ठतइतिसविचार्यते—अयंचागमेषुसर्वत्रदेशकालौनिर्दिश्येतिसंक्षेपेणैवास्त्युल्लिखितस्तत्रतत्रेतिस्पष्टप्रतिपत्तयेयमुपक्रम. । निर्देशेतावत्पूर्वंदेशपरामर्शोऽनंतरंचकालोत्कीर्तनंकर्तव्यमितिसश्रीचीनःपंथा । तथाहि 'देशकालविभागवित्' 'देशः काल पृथग्द्रव्यं' इत्यादिप्रामाण्यजातमप्यस्यैवपरिपोषकमितितदनुकूलोवाक्योपन्यासइत्थम्—श्रीमत्यस्मिन्ब्रह्माण्डेभूर्लोकेजंबूद्वीपेभारतवर्षेदक्षि

१ हेमाद्रिमहासंकल्पेवाक्यबाहुल्येप्ययमेवक्रमोंगीकृत प्रयुंजतेचेवंशिवकाञ्च्यादिक्षेत्रेषुदाक्षिणात्याइति देशकालनिर्देशवाक्यव्यवस्थापरिचयार्थंकृतोऽयमुपन्यासः । पारंपर्यक्रमपाठेदेशकालबोधकवाक्यानाव्यामिश्रभावेपियथाकथंचिद्देशकालनिर्देशोभवत्येवेतिनाग्रहोनव्यादरे ।

णापथेरामक्षेत्रेदंडकारण्येदेशेसंधौवर्तमानेगोदावर्यांदक्षिणेतीरे ( इतिदेशान्साधारणान्विशेषरूपांश्चसप्तम्यंतानुक्त्वा ) श्रीमद्भगवतोमहापुरुषस्य विष्णोराज्ञयाप्रवर्तमानस्यब्रह्मणोद्वितीयेपरार्धेश्वेतवाराहकल्पेवैवस्वतमन्वंतरेऽष्टाविंशतितमेयुगचतुष्कगतकलिप्रथमचरणेबौद्धावतारे १८३७ सप्तत्रिंशदधिकाष्टादशशतमितेशालिवाहनशाकेचांद्रमानेनराक्षसनामसंवत्सरेऽमुकायनर्तुमासपक्षतिथिवारनक्षत्रयोगकरणेषु चंद्रसूर्यगुरुषुतत्तद्राशिस्थितेषुसत्सु ( इत्यादीन्सप्तम्यन्तकालानर्धोदयादिनिमित्तेषुतानपिनिर्दिश्य ) एवंगुणविशेषणविशिष्टायांशुभतिथौपरमेश्वराज्ञारूपसकलशास्त्रश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं अमुकगोत्रस्यममामुकफलावाप्तयेमुककर्मकरिष्ये इतिसंकल्पयेत् । यदाचानेकदिनसाध्यःप्रयोगस्तदाप्रयोगाधिकरणीभूतानांतिथ्यादीनांसर्वेषामपिकालानामुच्चारणंकार्यमितिमयूखे । अथवाद्यप्रभृतिदिनद्वयेत्र्यादिषुदिनेष्वित्युच्चारः । यदित्वव्यवहितेव्यवहितेवादिनांतरेकरिष्यमाणस्यकर्मणःपूर्वेद्युःकेनचित्कारणेनसंकल्पःप्रसक्तस्तदाद्यपदरहितपक्षांतरकालकीर्तनांतेऽद्यतनदिनाद्द्वितीयेहनीत्यादिस्वेष्टसंख्यंदिनमुक्त्वातत्रत्यतिथ्याद्यभिधानादिप्राग्वत्कुर्यादितिहिरण्यकेशिसूत्रव्याख्या । विशेषविचारोत्रतराजसंकल्पप्रकरणेज्ञेयः ॥

**कर्मसंकल्पविचारः** । सचविहितेषुकेवलादृष्टार्थेषुसर्वकर्मस्वावश्यकः । तथाच**प्रयोगपारिजातेमार्कंडेयः**—'संकल्पयचयथाकुर्यात्स्नानदानव्रतादिकम् । अन्यथापुण्यकर्माणिनिष्फलानिभवंतिवै' इति । यथा यथावत् । अयंदेशकालोत्कीर्तनांतेकार्यः । सचनित्यनैमित्तिककाम्यकर्मभेदेनत्रिविधः । तत्रनित्यनैमित्तिकयो.कर्मणो.—ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थममुककर्मकरिष्येइति, काम्ययोस्तयोस्तु—ममोपात्तदुरितक्षयपूर्वकंश्रीपरमेश्वरप्रीतिद्वारामुकफलसिद्ध्यर्थममुककर्मकरिष्यइति, केवलकाम्येतु—ममामुकप्रीतिद्वारेतित्रिविधोज्ञेयः । सकामनिष्कामभेदेनायं

प्रयोगपारिजातेसंस्कारकांडेसविस्तरंविवृतोस्तीतिनेहप्रपंच्यते । यद्यप्यहरहःस्नानादौविध्यभावान्मासादेर्नांगत्वं तथापियत्रयस्यमासादेरंगत्वं
तत्रतस्योल्लेखआवश्यकः । यत्तुकेचिदहरह'कर्तव्येपुसंध्यादौदेशकालोच्चारणंनकुर्वंति कुर्वंतिचहोमपूजादिपुतत्रहेयोपादेयविपयेमूलंनविद्मः ।
सर्वत्रसंकल्पवाक्यातेसाक्षतकुशोदकंताम्रपात्रेणहस्तेनवैशान्यांजलादौप्रक्षिपेन्नभूमौ । अत्रव्रतराजेविशेप.—'संकल्पवाक्येविधिवाक्योपात्तधा-
तोरेवतद्युत्तमपुरुपस्यप्रयोगोयथास्यात्तादृश, कर्मणोविशेपनामसत्वेतत्सहितंचवाक्यंप्रयोज्यम्—यथाग्निहोत्रंहोष्यामि, दर्शपूर्णमासाभ्यांयक्ष्ये,
संध्यामुपासिष्यइति । यथावादेवपूजांकरिष्ये, ब्रह्मयज्ञंकरिष्यइत्यादिच । नतुसंध्योपासनंकरिष्ये, ब्रह्मयज्ञेनयक्ष्यइत्यादि । एवंसर्वत्र । एतच्चत्रि
स्थलीसेतौप्रघट्टकेस्पष्टम् । यत्रतुमंत्रंजपेत्, मंत्रजपंकुर्यात्, कार्यंचयमतर्पणं, यमंसंतर्पयेद्बुधइत्युभयथापिविधिर्दृश्यतेतत्रमत्रंजपिष्यामि, मंत्र-
जपंकरिष्यइतिवा, यमंतर्पयिष्यामि, यमतर्पणंकरिष्यइतिवायथेष्टंवाच्यम् । यत्रत्वाम्नातंसंकल्पवाक्यमस्तितत्रतदेववाच्यम् । यदातुनियुक्तः
करोतितदाकरिष्येकरिष्यामीत्येवंद्विविधप्रयोगवतिधातौप्रयुज्यमानेकरिष्यामीतिपरस्मैपदमेववदेत् क्रियाफलस्यकर्तृगामित्वात् । होष्ये—आच-
रिष्ये—भोजयिष्यइत्याधुनिकाःप्रयोगास्त्वसाधवएव । आद्ययोःपरस्मैपदित्वात् । अंत्यस्यणिजंतत्वेनोभयपदित्वेपिनिगरणचलनेतिसूत्रेणपरस्मै-
पदनियमात् । स्मार्तकर्मसुयजमानकर्तृकसांगप्रधानप्रयोगसंकल्पोत्तरमाचार्यादिकर्तृकः स्वस्वकर्मसंकल्पप्रधानदेवताग्निग्रहस्थापनादिपुपुनःसंक-
ल्पश्चशिष्टाचारप्रमाणक· । प्रथमसंकल्पेकथितस्यदेशकालादे.प्रयोगमध्येऽवांतरसंकल्पेपुनरुच्चारणप्राप्तौप्रागुक्तविशेषणवतिदेशेकालेचामुककर्मक-
रिष्यइतिवाच्यमितिवृपोत्सर्गेभट्टाः । इत्यलमतिविस्तरेण ॥

प्रसंगादत्रपारिजातधृतःशारीरकभाष्यानुवृत्त्यासंकल्पप्रकारः । 'जन्माद्यस्ययतः' इतिसूत्रे 'यतोवाइमानी' त्यादिविषयव्याख्याने ब्रह्मणःसकाशादेवप्रपंचजातमुत्पन्नं यथामृदःसकाशादुत्पन्नोघटःस्वोपादानंमृदमत्यक्त्वाजीवति प्रलीयमानोपिमृद्येवप्रलीयते एवंब्रह्मणिजातजगदपिब्रह्मात्यक्त्वाजीवति, प्रलीयमानचब्रह्मण्येवप्रलीयतइत्युक्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणिसमन्वयादिकंप्रतिपाद्य ब्रह्मबुद्ध्यैवकर्माणिकर्तव्यानीत्युक्तम् । श्रुत्यंतरमपि 'एपएवासाधुकर्मकारयतितंयमधोनिनीपते एपएवसाधुकर्मकारयतितयमेभ्योलोकेभ्यउन्निनीषते' इति । भणितंचभगवताभगवद्गीतायाम्—'यत्करोपियदश्नासियज्जुहोपिददासियत् । यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणम्' इति। उक्तंचकूर्मपुराणे—'ब्रह्मण्याधायकर्माणिनिःसंगःकामवर्जितः । प्रसन्नेनैवमनसाकुर्वाणोयातितत्पदम् । ब्रह्मणादीयतेदेयंब्रह्मणासंप्रदीयते । ब्रह्मैवदीयतेचेतिंब्रह्मार्पणमिदंपरम् । नाहंकर्तासर्वमेतद्ब्रह्मैवकुरुतेतथा । एतद्ब्रह्मार्पणप्रोक्तमृषिभिस्तत्त्वदर्शिभिः । प्रीणातुभगवानीशःकर्मणानेनशाश्वतः । इतियत्कुरुतेबुद्ध्याब्रह्मार्पणमिदंपरम् । यद्वाफलानांसंन्यासंप्रकुर्यात्परमेश्वरे । कर्मणामेतदप्याहुर्ब्रह्मार्पणमिदंपरम् । कार्यमित्येवयत्कर्मनियतंसंगवर्जितम् । क्रियतेविदुपाकार्यतद्भवेदपिमोक्षदम् । अथवायदिकर्माणिकुर्यान्नित्यान्यपिद्विजः । अकृत्वाफलसंन्यासंवध्यतेतत्फलेनतु । तस्मात्सर्वप्रयत्नेनत्यक्त्वाकर्माणितत्फलम् । अविद्वानपिकुर्वीतकर्मणाप्नोतितत्फलम्' इति । अपिचब्रह्मार्पणबुद्ध्याकर्मकरणेफलबाहुल्यमपिभवति । तदुक्तंव्यासेन—'वासुदेवेमनोयस्यजपहोमार्चनादिपु । तस्यांतरायोमैत्रेयदेवेन्द्रत्वादिकंफलम्' इति । तस्माच्चतुर्विधपुरुपार्थसार्थोपिपरमेश्वरप्रीत्यैवभवति । ततश्चपरमेश्वरप्रीत्यर्थप्रातःसंध्यामुपासिष्ये' 'ज्योतिष्टोमेनयक्ष्ये' इतिस्वाभीष्टदेवताप्रीत्युद्देशेनसंकल्पःकार्यइत्यलमतिविस्तरेण । प्रकृतेप्येवमात्माधिकारसद्दशंकर्मादौसंकल्पंकुर्यादिति । इतिसंकल्पनिर्णयः ॥

ऋषिदैवतच्छंदऊहविचारः । तत्रप्रयोगपारिजातेव्यासः—‘आर्षछंदोदैवतंचविनियोगस्तथैवच । ब्राह्मणेनप्रयत्नेनवेदितव्यंविपश्चिता ॥ अविदित्वातुयःकुर्याद्याजनाध्यापनंजपम् । होममंतर्जलादीनितस्यचाल्पफलंभवेत् ॥ मंत्रार्थज्ञोजपन्जप्यंकुर्वन्नध्ययनंद्विजः । स्वर्गलोकमवाप्नोति नरकंतुविपर्यये’ इति । तथाचंद्रिकायांव्यासः—‘ब्राह्मणंविनियोगचछंदआर्षचदैवतम् । अज्ञात्वापंचयोमंत्रेनसतत्फलमश्नुते’ इति । अत्रप्रथमवाक्ये ‘आर्षछंदोदैवतच’ इति ऋषिच्छंदोदेवतेतिक्रमोगृहीतः । उत्तरवाक्येतु ‘छंदआर्षंचदैवतं’ इति छंदर्षिदेवतेत्येवक्रमःस्वीकृतः । सर्वानुक्रमपरिभाषारंभेतु—‘ऋषिदैवतच्छंदांस्यनुक्रमिष्याम ’ इति ऋषिदेवताछंदइतिक्रमउपात्तः । एवचर्ष्यादिपाठक्रमेऊहत्रैविध्येप्राप्ते त्रिषुकेनपक्षेणभाव्यमितिविचारे क्वतोऽस्ति निर्णयआचाररत्नकारेण । सचेत्थम्—‘यत्तुसर्वानुक्रमे—ऋषिदैवतच्छंदांस्यनुक्रमिष्यामोनह्येतज्ज्ञानमृतेश्रौतस्मार्तकर्मप्रसिद्धिरिति तदृग्वेदिपरम् । कुतः ।—‘अथऋग्वेदाम्नायेशाकलके—इत्युपक्रमात्’ इति । तेनशाकलशाखाध्येतृभिराश्वलायनैरयमेवपारिभाषिक क्रमोङ्गीकार्यइतिसिद्धम् । एवंसत्येव ‘प्रणवस्यपरब्रह्मपरमात्मागायत्री’ ‘गायत्र्याविश्वामित्र.सवितागायत्री’ इत्यादिशिष्टादृतपाठक्रमः संगच्छते । आदृतश्चायमेवक्रमोहेमाद्रिपूर्तकमलाकरादिभि प्राचीननिबधकारै. सर्वत्रमहानिबधेषुतदनुयायिभिरपिस्वस्वप्रणीतग्रंथेषुच अन्यच्च—‘अविदित्वातुयःकुर्यात्० तस्यचाल्पफलंभवेत्’ इतिनिर्दिष्टप्रयोगपारिजातधृतव्यासवचनेनेदमपिज्ञापितभवति यच्छंदऋष्याद्युपबृंहितमंत्राणापाठेफलभूयस्त्वं, यत्रतुप्राचोपिकचनस्वस्तिवाचनादावृष्याद्यूहमतरापिमत्रानलीलिखन्प्रयुंजतिचाधुनिकाअपितथातत्रफलाल्पत्वमात्रंनपुनःकर्मणोवैयर्थ्यमितिसर्वमवदातम् । इत्यृषिदैवतच्छदऊहक्रमविचार. ॥

एवंसंतिवहुशोऽन्यथात्वेनपरिणताःप्रायोगिकाविपयाविवेचनीयास्तानत्रानवकाशात्स्थलसंकोचाच्च यत्रकापियथावसरंयथामतिविवेचयिष्यामः। तथाप्राचीनानेकनिवधप्रमाणप्रमाणितः स्वस्तिवाचनप्रयोगोऽग्निमुखप्रयोगश्चापरेप्येवंभूताविविधाःप्रयोगा महामहिमभिर्विद्वद्भिर्मीमांसिताः संतिवहुलायासेनसंगृहीतास्तानपिसर्वेपांपरिचयायप्रसगमनुसृत्यप्रकाशयिष्यामइत्यलमतिविस्तरेणेतिशम्।

विद्वदेकान्तवशंवदः पणशीकरोपाह्वो वासुदेवशर्मा।

श्रीगणेशायनमः ॥ नमःश्रीवेदपुरुषाय ॥ श्रीरामंसपरीवारंगणेशंचसरस्वतीम् । आश्वलायनंतच्छिष्यान्प्रणम्यपितरंगुरुम् ॥ १ ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः । प्रयोगरत्नंकुरुतेकाश्यांशिष्टेष्टतुष्टये ॥ २ ॥ ग्रंथेऽस्मिन्गुणगणवत्त्वमुच्यतेचेत्त्वंग्रंथंगुणगणवंतमाहकोन । तत्संतःशिरसिकृतांजलिस्तुयाचेशोध्यंतत्सदसदिहोच्यतेमयायत् ॥ ३ ॥ ॥ अथ संस्काराः ॥ तेचाष्टाचत्वारिंशत् । तथाचगौतमः—गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानिचत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगःपंचानांयज्ञानामनुष्ठानम् ,अष्टकापार्वणःश्राद्धंश्रावण्याग्रहायणीचैत्रीआश्वयुजीतिसप्तपाकसंस्थाः, अग्न्याधेयमग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधःसौत्रामणीतिसप्तहविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोतिरात्रोप्तोर्यामइतिसप्तसोमयज्ञसंस्थाइत्येतेचत्वारिंशत्संस्काराः । अष्टावात्मगुणाः दयासर्वभूतेषुक्षांतिरनसूयाशौचमनालस्यंमांगल्यमकार्पण्यमस्पृहेति । यस्यैतेचत्वारिंशत्संस्कारा अष्टावात्मगुणाश्चसब्रह्मणासायुज्यमाप्नोतीति । पार्वणःपार्वणस्थालीपाकः । श्राद्धममावास्यादि । श्रावणीतत्रकर्तव्यंश्रवणाकर्म । आग्रहायणीतत्रकर्तव्यंप्रत्यवरोहणम् । चैत्रीतत्रकर्तव्यःशूलगवः । आश्वयुजीतत्रकर्तव्यमाश्वयुजीकर्मेतिहरदत्तोव्याचख्यौ । अंगिरसातु—पंचविंशतिसंस्काराउक्ताः—पंचविंशतिसंस्कारैःसंस्कृतायेद्विजातयः । तेपवित्राश्चयोग्याःस्युःश्राद्धादिषुसुयं

१ अंगिराः—चित्रकर्मयथानेकैरंगैरुन्मील्यतेशनैः । ब्राह्मण्यमपितद्वत्स्यात्संस्कारैर्विधिपूर्वकैः । स्वेस्वेगृह्येयथाप्रोक्तास्तथासंस्कृतयोऽखिलाः । कर्तव्याभूतिकामेननान्यथासिद्धिमृच्छति । इति ।

त्रिताः । आदिशब्दाद्याजनादौ । गर्भाधानंपुंसवनंसीमंतोवलिरेवच । वलिर्विष्णुवलिः । जातकृत्यंनामकर्मनिष्क्रमोऽन्नाशनंपरम् । चौलकर्मोपनयनंतद्व्रतानांचतुष्टयम् । तच्छब्देनप्रसिद्धत्वाद्वेदग्रहणं । तद्व्रतानांवेदव्रतानामित्यर्थः । स्नानोद्वाहौचाग्रयणमष्टकाचयथातथम् । श्रावण्यामाश्वयुज्यांचमार्गशीर्ष्यांचपार्वणम् । उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चनित्यशः । संस्कारानियताह्येतेब्राह्मणस्यविशेषतइति । श्रावण्यांश्रवणाकर्मादीत्यादिपूर्ववद्व्याख्येयम् । नियतानित्याः । एतेषांपंचविंशतीनांनैमित्तिकवार्षिकमासिकनित्यभेदेनचातुर्विध्यमाहाश्वलायनः—नैमित्तिकाःषोडशोक्ताःसमुद्वाहावसानकाः । सप्तैवाग्रयणाद्याश्चसंस्कारावार्षिकामताः । मासिकंपार्वणंप्रोक्तमशक्तानांतुवार्षिकम् । महायज्ञास्तुनित्याःस्युःसंध्यावच्चाग्निहोत्रवदिति । अत्रगर्भाधानाद्याउपनयनांताएवसर्वेषांनियताःनतुस्नानाद्याः । तेनब्रह्मचर्यादेवप्रव्रजेदितिनविरुध्यते । एतेचद्विजानामेवसमंत्रकाः । यदाहयाज्ञवल्क्यः—ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः । निषेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रियाइति । वैएवार्थः । अत्रतेषामेवमंत्रतःक्रियाइतिवदन्शूद्रस्यामंत्रकाःक्रियाइतिसूचयति । अतएवसंस्कारानधिकृत्ययमः—शूद्रोप्येवंविधःकार्योविनामंत्रेणसंस्कृतइति । इतिसंस्काराः॥ ॥ अथस्वस्तिवाचनम् ॥ तद्यत्रकर्तव्यंतदुच्यते । व्यासः—संपूज्यगंधमाल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् । धर्मकर्मणिमांगल्येसंग्रामेऽद्भुतदर्शने[1] ॥ गृह्यपरिशिष्टे—अथस्वस्ति

१ यमः—पुण्याहवाचनंदैवेब्राह्मणस्यविधीयते । एतदेवनिरोंकारंकुर्यात्क्षत्रियवैश्ययोः ॥ कश्यपः—लोकेभूतिकर्मसुतदादीन्येववाक्यानिस्युर्यथापुण्याह सुसमृद्धमिति । भूतिकर्मसुसपत्करकर्मसु स्वस्तिवाचनमितियावदितिहेमाद्रिः ।

वाचनमृद्धिपूर्तेषु । ऋद्धिर्विवाहांताअपत्यसंस्काराः, प्रतिष्ठोद्यापनेपूर्तं तत्कर्मणश्चाद्यंतयोःकुर्यादिति । आश्वलायनस्मृतिः—वैदिकेतांत्रिकेचादौततःपुण्याहइष्यते ॥ शौनकः—पुण्याहवाचनविधिंवक्ष्यामोऽथयथाविधि । प्रयोक्तुःकर्मणामादावंतेचोदयसिद्धयइति । तच्चप्रयोगांतर्गतमितिकेचित् । वहवस्तुप्रयोगाद्बहिर्भूतमिति । आद्यपक्षेकर्मप्रयोगसंकल्पंकृत्वाकार्यम् द्वितीयेतुतत्कृत्वाकर्मसंकल्पः ॥ ॥ अथप्रयोगःप्रयोगपारिजातानुसारेणोच्यते । यजमानःकृताभ्यंगादिःस्वलंकृतोदर्भपा

---

१ नित्यनैमित्तिककाम्यक्रियागमलकर्पणम् । क्रियास्नानतथापष्ठपोढास्नानप्रकीर्तितमिति । तेनात्रस्नानवारुणमेवग्राह्यनतुमंत्रस्नानादिगौणमपि । यद्यपिवारुणस्यपट्भेदाउक्तास्तथाप्यत्रक्रियांगस्नानंग्राह्य । तच्चधर्मक्रियाकर्तुंयत्पूर्वंस्नानतत्क्रियाग । धर्मतत्त्वप्रकाशे—धर्मक्रियांकर्तुकामःपूर्वंस्नानंसमाचरेत् । क्रियांगतत्समुद्दिष्टस्नानंवेदपरैर्द्विजैरिति । स्मृतिमुक्तावल्या—धर्मक्रियांकर्तुकाम स्नानंकर्मांगमाचरेदित्यपि । तच्चतिलामलकादिनाभ्यंगस्नानमितिशिष्टा. । निर्णयसिंधावपि—तिलस्नानसदापुण्यकुर्यादामलकै.श्रितमिति । आमलकमिश्रितमित्यर्थः । प्रयोगदीपिकायांतु—शिरःस्नातस्तुकुर्वीतदैवपित्र्यमथापिवा । प्राङ्मुखोदङ्मुखोवापिश्मश्रुकर्मचकारयेदितिवचनाच्छिर'स्नानश्मश्रुकर्मणीकार्ये । तत्रादौश्मश्रुकर्मतत' शिरःस्नानमित्युक्त । अभ्यंगस्नानप्रकृत्यमदनपारिजातेकात्यायनः—मागल्यंशस्यतेस्नानवृद्धिपूर्तोत्तरेपुच । स्नेहमंत्रसमायुक्तंमध्याह्नात्प्राक्तदिष्यतइति । वृद्धिपूर्तोत्सवेपुचेतिसिंधौपाठः । अत्रस्नेहस्तैल । नच—सोमवारेतथाभ्यगंवर्जयेत्तुसदाबुधैरितिप्रचेतादिवाक्येनकर्मांगाभ्यगस्नानेतिथ्यादिनिषेधोइतिवाच्य । समलापहस्नानएवनिषेधोननित्यनैमित्तिककाम्यबाधकइतिपीयूपधारायाभट्टभास्करोक्ते' । तेनतिथ्यादिनिषेधोभोगार्थस्नानपरः संगलेष्वभ्यगेनदोषइतिसिंधुः ।

णिःशुचिर्भूत्वामंगलसंभारंसंभृत्यस्वलंकृतेगृहेगोमयोपलिप्तभूमौसोत्तरच्छदे[1]भद्रासनउदङ्मुखउपविश्यस्वदक्षिणपार्श्वेसंस्कार्य मुदङ्मुखमुपवेश्य रंगवल्लिकायुक्तेभूतलेप्रस्थपरिमितस्याशक्त्यान्यूनस्यवाधान्यस्योपरिदक्षिणोत्तरयोःसुवर्णरजतताम्रमृन्मयान्यतमकलशद्वयमव्रणंमनोहरमलंकृतंशुद्धपुण्यजलपूरितंसपल्लवंसफलंनिधायसूत्रवेष्टितोत्तरकलशेपंचरत्नानिनिक्षिप्यतदुपरिसिततंडुलपूरितंसफलंपात्रंनिधाय तत्पश्चिमदेशेप्रशस्तान्प्रतिवचनसमर्थांस्तद्दिवसेश्राद्धादिष्वभुक्तवतोनिषिद्धप्रतिग्रहनिवृत्तान्शुचीन्सोत्तरीयान्दर्भपवित्रपाणीन्युग्मान्ब्राह्मणान्प्राङ्मुखानासनउपवेश्यगंधपुष्पादिभिरभ्यर्च्ययथाचारं सुमुखश्चेत्यादिभिर्गणपतिंस्मृत्वाषोडशोपचारैरभ्यर्च्य उत्तरकलशेदेवताआवाहयेत्। तद्यथा। कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः। मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः। कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा। ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः। अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः। पुष्टिःशांतिश्चगायत्रीसावित्रीचसरस्वती। आयांतुयजमानस्यदुरितक्षयकारकाः। सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः। आयांतुममशांत्यर्थंदुरितक्षयकारकाः। एवमेताःसमावाह्यकलशेदेवतास्ततः। एतान्मंत्रस्थितान्देवान्संपूज्यप्रार्थयेत्क्रमात्। ततः। सर्वेषुकालेषुसमस्तदेशेष्वशेषकार्येषुतथेश्वरेश्वरः। सर्वैःस्वरूपैःस्तुति

१ भद्रासनलक्षणं—श्रीपर्णीकाष्ठसंभूतमौदुंबरमथापिवा। त्रिंशदंगुलविस्तारमष्टांगुलसमुच्छ्रयम्। द्वात्रिंशदंगुलैर्वापिद्वाविंशत्यंगुलैस्तुवा। एवंविधंप्रकर्तव्यंभद्रासनमुदाहृत। धर्मप्रवृत्तौतु—अष्टत्रिंशांगुलंपीठमुन्नतंस्यात्षडंगुलं। तदष्टांगुलविस्तारंकुर्यादौदुंबरादिकमिति। स्नात्वाचैव शुचौदेशेपीठेयाज्ञियदारुजे। पीठेवस्त्रसमाच्छन्नेउपविश्येद्रदिङ्मुखः। इत्यनेनमांगलिकेपीठंवस्त्राच्छन्नंकार्यमितिप्रतीयते।

माननादिर्ममास्तुमांगल्यविवृद्धयेहरिः । यत्रयोगेश्वरःकृष्णः० । अनन्याश्चिंतयंतोमां० । स्मृतेसकलकल्याणं० । सर्वेष्वा रंभकार्येषु० । सर्वमंगलमांगल्ये० । तदेवलग्नमित्यादियथाचारंपठित्वा । लक्ष्मीनारायणौनत्वा ॐदुर्गायैनमइतिप्रणवादि चतुर्थ्यंतनमोंतनामभिर्दुर्गाक्षेत्रपालंवास्तुपुरुषंमातृःपितृनाचार्यानिष्टदेवताःकुलदेवताःग्रामदेवताःसर्वादेवताःसर्वान्ब्राह्मणा नितिप्रत्येकंसर्वान्नत्वाप्राणानायम्यदेशकालौसंकीर्त्यामुककर्मकर्तुमादौशुद्धिवृध्यभ्युदयसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंब्राह्म णैःसहस्वस्तिपुण्याहवाचनंकरिष्यइतिसंकल्पयेत्। ततःसर्वेब्राह्मणाःप्राङ्मुखास्तिष्ठेयुः। तद्दक्षिणतःकर्तोत्तरकलशंविभ्रदुदङ्मु खस्तिष्ठेत् । कर्तुर्दक्षिणपार्श्वेसंस्कार्यउदङ्मुखस्तिष्ठेत् । अथकर्ताआपइत्युक्त्वा शिवाआपःसंत्वितिविप्रान्वाचयित्वा, गंधाइत्युक्त्वा सुगंधाःसंत्वितिवाचयित्वा, सुमनसइत्युक्त्वा सौमनस्यमस्त्वितिवाचयित्वा, अक्षतमित्युक्त्वा अक्षतंचारि ष्टंचास्त्वितिवाचयित्वा, दक्षिणाइत्युक्त्वा स्वस्तिदक्षिणाःपांतुवहुदेयंचास्त्वितिवाचयित्वा, तंकलशंपूर्ववन्निधायदक्षिणजा नुंभूमौनिपात्योदङ्मुखःश्रद्धयेत्यादिसूक्तंजपेत् । ॐश्रद्धयाग्निःसमिंध्यतेश्रद्धयाहूयतेहविः । श्रद्धांभगस्यमूर्धनिवचसावेद यामसि ॥ प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः । प्रियंभोजेषुयज्वस्विदंमउदितंकृधि ॥ यथादेवाअसुरेषुश्रद्धामुग्रे षुचक्रिरे । एवंभोजेषुयज्वस्वस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानावायुगोपाउपासते । श्रद्धांहृदय्या१याकूत्याश्रद्ध याविंदतेवसु ॥ श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि । श्रद्धांसूर्यस्यनिम्रुचिश्रद्धेश्रद्धापयेहनः ॥ ५ ॥ इतिजपित्वा पुनस्तंकलशमादायोत्थायोदङ्मुखो मनःसमाधीयतामित्युक्त्वा समाहितमनसःस्मइतितैरुक्ते, प्रसीदंतुभवंतइत्युक्त्वा प्रस

न्नाःस्मइतितैरुक्तेसर्वैःसह । शांतिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । स्वस्तिशिवंकर्मास्तु । कर्मसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । इतिपंचदशवाक्यान्युक्त्वा स्वयंकर्मदेवतात्मकोभगवान्प्रजापतिःप्रीयतामित्युक्त्वा प्रीयतांभगवान्कर्मदेवतात्मकःप्रजापतिरितितैर्वाचयित्वा, पुण्याहंवाचयिष्येहमित्युक्त्वा वाच्यतामितितैरुक्ते । ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइंवसवनेषुशंससि । वृषेवंवाजीशिशुमतीरपित्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ इतिऋचंसर्वैःसहपठित्वाॐपुण्याहंभवंतोब्रुवंत्वितिस्वयंमंद्रस्वरेणोक्त्वाब्राह्मणैरोंपुण्याहंइतितथोक्ते पुनरेवंमध्यमस्वरेणोक्त्वातथैवतैरुक्ते पुनरेवमुच्चस्वरेणोक्त्वातथैवतैरुक्ते । ॐस्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः। स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ इत्यृचंसर्वैःसहपठित्वा स्वस्तिभवंतोब्रुवंत्वितिपूर्ववदुक्त्वा ॐस्वस्तीतितथैवतैःप्रत्युक्ते स्वस्त्यमुककर्मणेभवंतोब्रुवंत्वितिकरिष्यमाणकर्मनामपूर्ववदुक्त्वा अमुककर्मणेस्वस्तीतितैःपूर्ववदुक्ते । ॐऋध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं। यशोनपक्कंमधुगोष्वंतराभूतांशोअश्विनोःकाममप्राः॥ इत्यृचंसर्वैःसहपठित्वा ऋद्धिंभवंतोब्रुवंत्वितिपूर्ववदुक्ते ॐ ऋध्यतामितितैस्तथैवप्रत्युक्तेसामात्यःप्राङ्मुखउपविशेत् । ( इदंशौनकमते । गृह्यपरिशिष्टेतुस्वस्त्यमुककर्मणइत्युत्तरप्रत्युत्तरेनस्तः ) । ततोविप्राःप्राङ्मुखाउपविश्यतद्वृद्धिकलशोदकंविशालेताम्रादिपात्रेनिनीययजमानंसामात्यंमंत्रैरभिषिंचेयुः । तेचमंत्राः । तत्सवितुर्विश्वामित्रःसविता गायत्री ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनः

। अभि० ।
प्रचोदयात् । आपोहिष्ठेतितिनवर्चस्यांवरीपःसिंधुद्वीपआपोगायत्री । पंचमीवर्धमानासप्तमीप्रतिष्ठांत्येद्वेअनुष्टुभौ
प्रचोदयात् । आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री । पंचमीवर्धमानासप्तमीप्रतिष्ठांत्येद्वेअनुष्टुभौ । अभि० ।
ॐआपोहिष्ठामयोभुव० ॥ ९ ॥ आनोभद्राइतिदशर्चस्यराहूगणोगौतमोविश्वेदेवाः पंचाद्याःसप्तमीचजगत्यःषष्ठीविराट्स्था
नाशिष्टास्त्रिष्टुभः । ॐआनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतासउद्भिदः । देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षि
तारोदिवेदिवे । देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां । देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतु
जीवसे । तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं । अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ।
तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं । तमी
शानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं । पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये । स्वस्तिनइंद्रोवृद्ध
श्रवाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु । पृषदश्वामरुतःपृश्निमातरःशुभंयावा
नोविदथेषुजग्मयः । अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह । भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभि
र्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः । शतमिन्नुशरदोऽअंतिदेवायत्रानश्चक्राजरसंतनूनाम् । पुत्रासो
यत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः । अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः । विश्वेदेवाऽअदितिःपं
चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ अपनःशोशुचदघमित्यष्टर्चस्यकुत्सोग्निर्गायत्री । ॐ अपनःशोशुचदघमग्ने
शुशुग्ध्यारयिम् । अपनःशोशुचदघम् । सुक्षेत्रियासुगातुयावसूयाचयजामहे । अपनःशोशुचदघम् । प्रयद्भंदिष्ठएषांप्रास्मा

कांसश्चसूर्यः । अपनः० । प्रयत्तेऽअग्नेसूरयोजायेमहिप्रतेवयम् । अपनः० । प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ।
अपनः० । त्वंहिविश्वतोमुखविश्वतःपरिभूरसि । अपनः० । द्विषोनोविश्वतोमुखातिनावेवपारय । अपनः० । सनःसिंधुमि
वनावयातिपर्षास्वस्तये । अपनः० ॥ ८ ॥ एतोन्विंद्रमितितृचस्यांगिरसस्तिरश्चीइंद्रोनुष्टुप् । ॐ एतोन्विंद्रंस्तवामशुद्धंशुद्धे
नसाम्ना । शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु । इंद्रशुद्धोनऽआगहिशुद्धःशुद्धाभिरूतिभिः । शुद्धोरयिंनिधारयशुद्धोमम
द्धिसोम्यः । इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे । शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि । स्वादिष्ठयेतिदशर्चस्यमधुच्छं
दाःपवमानःसोमोगायत्री । ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इंद्रायपातवेसुतः । रक्षोहाविश्वचर्षणिरभियोनिमयो
हतं । द्रुणासधस्थमासदत् । वरिवोधातमोभवमंहिष्ठोवृत्रहंतमः । पर्षिराधोमघोनां । अभ्यर्षमहानांदेवानांवीतिमंधसा ।
अभिवाजमुतश्रवः । त्वामच्छाचरामसितदिदर्थंदिवेदिवे । इंदोत्वेनआशसः ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता । वारेणश
श्वतातना । तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश । स्वसारःपार्येदिवि । तमींहिन्वंत्यग्रुवोधमंतिवाकुरंदृतिं । त्रिधातुवा
रणंमधु । अभीइममघ्न्याउतश्रीणंतिधेनवःशिशुं । सोममिंद्रायपातवे । अस्येदिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते । शूरोमघा
चमंहते ॥ २ ॥ तरत्समंदीतिचतसृणामवत्सारःपवमानःसोमोगायत्री । ॐ तरत्समंदीधावतिधारासुतस्यांधसः । तरत्स
मंदीधावति । उस्रावेदवसूनांमर्तस्यदेव्यवसः । तरत्स० । ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे । तरत्स० । आययोस्त्रिंश
तंतनासहस्राणिचदद्महे । तरत्स० ॥ ४ ॥ शुचीवोहव्येतिमंत्रस्यवसिष्ठोमरुतस्त्रिष्टुप् । ॐ शुचीवोहव्यामरुतःशुचीनांशु

चिंहिनोम्यध्वरंशुचिंभ्यः । ऋतेनंसत्यमृतसापंआयन्छुचिंजन्मानः शुचंयः पावकाः । यदंतियच्चेतिद्वादशर्चस्यआद्यायावसिष्ठ
ऋषिः शिष्टानामेकादशानांपवित्रवसिष्ठावृषी पवमानःसोमोगायत्री यत्तेपवित्रमर्चिंपीतिद्वेअग्निदेवत्ये । उभाभ्यांदेवसवितरि
तिसवितृदेवत्या त्रिभिष्ट्वमित्यग्निसवितृदेवत्या पुनंतुमामितिवैश्वदेवी प्रप्यायस्वेतिपुरउष्णिक् पुनंतुमामितियःपावमानी
रिति पावमानीर्योअध्येतीतिचानुष्टुभः । ॐ यदंतियच्चदूरकेभयंविंदतिमामिह । पवमानवितज्जहि । पवमानःसोअद्यनः
पवित्रेणविचर्षणिः । यःपोतासपुनातुनः । यत्तेपवित्रमर्चिष्यग्नेविततमंतरा । ब्रह्मतेनपुनीहिनः । यत्तेपवित्रमर्चिवदग्नेतेनपु
नीहिनः । ब्रह्मसवैःपुनीहिनः । उभाभ्यांदेवसवितःपवित्रेणसवेनंच । मांपुनीहिविश्वतः ॥ १ ॥ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैः
सोमधामभिः । अग्नेदक्षैःपुनीहिनः । पुनंतुमांदेवजनाःपुनंतुवसवोधिया । विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा । प्रप्या
यस्वप्रस्यंदस्वसोमविश्वेभिरंशुभिः । देवेभ्यउत्तमंहविः । उपप्रियंपनिप्नतंयुवानमाहुतीवृधम् । अगन्मविभ्रतोनमः । अ
लाय्यस्यपरशुर्ननाशतमापवस्वदेवसोम । आखुंचिदेवदेवसोम । यःपावमानीरध्येत्यृषिभिःसंभृतंरसम् । सर्वंसपूतमश्नाति
स्वदितंमातरिश्वना । पावमानीर्योऽअध्येत्यृषिभिःसंभृतंरसं । तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकम् ॥२॥ अग्निःशुचिव्रततम
इत्यस्यविरूपोग्निर्गायत्री । ॐ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः । शुचीरोचतआहुतः ॥१॥ समुद्रज्येष्ठाइतिचतसृणां
वसिष्ठआपस्त्रिष्टुप् । ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिह
मामवंतु । याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ।

यासांराजावरुणोयातिमध्येंसत्यानृतेअवपश्यन्जनानाम् । मधुश्चुतःशुचयोयाःपावकास्ता० । यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ता०॥४॥ त्रायंतामितितृचस्यसप्तऋषयोविश्वेदेवाअनुष्टुप् । ॐ त्रायंतामिह देवास्त्रायंतांमरुतांगणः । त्रायंतांविश्वाभूतानियथायमरपाअसत् । आपइद्वाउभेषजीरापोअमीवचातनीः । आपःसर्वस्य भेषजीस्तास्तेकृण्वंतुभेषजम् । हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी । अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ ३॥ इमाआपःशिवतमाइत्यनेनतृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरित्येताभिश्चव्याहृतिभिः । ॐ इमाआपःशिवतमाइमाःसर्वस्य भेषजीः इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः । याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुम् । ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह । महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् । देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि । बलायश्रियैयशसेन्नाद्याय ॐभूर्भुवःस्वःअमृताभिषेकोस्तुशांतिःपुष्टिस्तुष्टिश्चास्त्वित्येतैर्मंत्रैःकुशाग्रैःसपल्लवैरभिषिंचेयुः । ततःसुवासिनीभिर्नीराजनंकार्यंयथाचारम् । ततोब्राह्मणानांवैदिकमंत्राशिषोग्राह्याः । कर्मांतेपिपुनरेवंकार्यं । इतिजयंतादिसंमतःप्रयोगपारिजातप्रोक्तःपुण्याहवाचनप्रयोगः ॥ ॥ अथहेमाद्रौदानकांडेबह्वृचगृह्यपरिशिष्टोक्तत्वेनोक्तः सकलसाधारणशिष्टाचारप्राप्तश्चपुण्याहवाचनप्रयोगः ॥ कृतमंगलस्नानःस्वलंकृतःकृताचमनःप्राङ्मुखोयजमानोवस्त्राच्छादितेपीठेउपविश्यपत्नींस्वदक्षिणतःप्राङ्मुखीमुपवेश्यसंस्कार्यंचतथैवोपवेश्य आचम्यप्राणानायम्य सुमुखश्चैकदंतश्चेत्यादि शुक्लांबरधरंदेवं० अभीप्सितार्थ० सर्वमंगल

मांगल्ये० सर्वदासर्वकार्येषु० तदेवलग्नं० यत्रयोगेश्वरःकृष्णो०सर्वेष्वारब्धकार्येष्वितिश्लोकान्पठित्वा। ॐ लक्ष्मीनारायणाभ्यांनमः। उमामहेश्वराभ्यांनमः। शचीपुरंदराभ्यांनमः। मातापितृभ्यांनमः। इष्टदेवताभ्योनमः। कुलदेवताभ्योनमः। सर्वेभ्योदेवेभ्योनमः। सर्वेभ्योब्राह्मणेभ्योनमः। देशकालौसंकीर्त्यामुकफलसिद्ध्यर्थंश्वोऽद्यवाऽमुककर्मकरिष्ये। तदंगतयादौपुण्याहवाचनादिकरिष्यइतिसंकल्पयेत्। यदातुप्रयोगाद्बहिर्भूतंपुण्याहवाचनाद्यंगंतदामुकफलसिद्ध्यर्थममुककर्मकर्तुमंगभूतमादौपुण्याहवाचनादिकरिष्यइतिप्रत्येकंसंकल्पः। प्रधानसंकल्पस्तुसर्वकृत्वातद्दिनएवश्वोवाकार्यः। ततोयजमानःषोडशोपचारैर्गणपतिमभ्यर्च्यप्रार्थयेच्च। ततःकर्तास्वपुरतः ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां। पिपृतांनोभरीम

---

१ आदौप्रधानसंकल्पस्तत.पुण्याहवाचनं। मातृपूजांतत कृत्वावृद्धिश्राद्धंततःस्मृतमितिसंस्कारगणपतिवचनादादौप्रधानसंकल्पकृत्वागणपतिपूजनादिसंकल्पकुर्यादिति। तथाचअमुककर्मकरिष्ये। तदंगत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये। तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्ये। गणानांत्वाशौनकोगृत्समदोगणपतिर्जगतीगणपत्यावाहनेवि०। गणानांत्वा०। ऋद्धिबुद्धिसहितसांगसपरिवारंगणपतिमावाहयामीत्यावाह्यमहागणपतयेनमइत्याद्यासनादिषोडशोपचारैः संपूज्यप्रार्थयेत्। नार्चितोहिगणाध्यक्षोयज्ञादौतुसुरोत्तम। तस्माद्विघ्नंसमुत्पन्नं मत्कोपजमिदंतवेतिपद्मपुराणलिंगात् नऋतेत्वत्क्रियतेइत्यादिमंत्रलिंगाच्चनिर्विघ्नतासिद्ध्यर्थमादौगणपति पूज्यइतिचिंतामणौ। २ अविदितार्षेयच्छंदोदैवतविदित्यादिपरिभाषातोयत्रकापिमंत्रप्रयोगेकेवलमंत्रपाठानर्थक्याद्दृष्यापुपन्यासआवश्यकएवेत्यत्रनिर्दिश्यते। यथा—महीद्यौ.काण्वोमेधातिथिर्भूमिर्गायत्री। ओषधयइत्यस्याथर्वणोभिषगोषधयोनुष्टुप्। आकलशेष्वित्यस्यकाश्यपोदेवल.पवमान सोमोगायत्री। इमंमेगंगइत्यस्यसि

भिः। इतिमंत्रावृत्त्यादक्षिणोत्तरतोभूमिंस्पृष्ट्वा। ॐओषधयः संवदंतेसोमेनसहराज्ञा। यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि। इतितथैवतंडुलपुंजौकृत्वा। ॐआकुलशेषुधावतिपवित्रेपरिषिच्यते। उक्थैर्यज्ञेषुवर्धते। इतिपुंजोपरिद्वौसलक्षणौधातुमयौमृन्मयौवाकलशौनिधाय ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या। असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया। इतितीर्थजलेनप्रत्येकंपूरयित्वा ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं। ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियंइति

---

धुक्षित्प्रैयमेधोनद्योजगती। गंधद्वारामित्यस्यानंदकर्दमचिक्लीतेदिरासुताःश्रीरनुष्टुप्। याओषधीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप्। अश्वत्थेवइत्यस्याथर्वणोभिषगोपधयोनुष्टुप्। स्योनापृथिविकाण्वोमेधातिथिर्भूमिर्गायत्री। याःफलिनीरित्यस्याथर्वणोभिपगोपधयोनुष्टुप्। सहिरत्नानीत्यस्य श्यावाश्वसवितागायत्री। हिरण्यरूपइत्यस्यशौनकोपांनपात्त्रिष्टुप्। युवासुवासाइत्यस्यविश्वामित्रोयूपस्त्रिष्टुप्। पूर्णादर्वीत्यस्यविश्वेदेवाःशतक्रतुरनुष्टुप्। भद्रंकर्णइत्यस्यगौतमोविश्वेदेवास्त्रिष्टुप्। द्रविणोदाइत्यस्यकुत्सोद्रविणोदाअग्निस्त्रिष्टुप्। सवितापश्चातादित्यस्यलुशोधानाकोविश्वेदेवास्त्रिष्टुप् नवोनवइत्यस्यसूर्यासावित्रीचंद्रमसस्त्रिष्टुप्। उच्चादिवीत्यस्यांगिरसोदिव्यःप्राजापत्योदक्षिणावातदातारोवात्रिष्टुप्। उद्गातेवेत्यस्यगृत्समदःशकुतःशकरी। स्वस्तयेवायुमित्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप्। ऋद्ध्यामस्तोममित्यस्यकाश्यपोभूतांशोश्विनौत्रिष्टुप्। श्रियेजातइत्यस्यकण्वःपवमानःसोमस्त्रिष्टुप्। भूमिप्रार्थनादौवि०। कर्मबाहुल्यादनवकाशाद्वासर्वेषांपठनाशक्तौयस्यवाक्यंसऋषिर्यातेनोच्यतेसादेवतायदक्षरपरिमाणंतच्छंदइति पारिभाषिकमृष्याद्युपयुंजीतनकेवलमंत्रोहःकार्यः। १ यद्यप्यत्रधान्यराशिरपेक्षितस्तथापि—सस्यंक्षेत्रगतंप्राहुःसतुषंधान्यमुच्यते। आमंवितुषमित्युक्तंस्विन्नमन्नमुदाहृतमितिवसिष्ठः। यद्वा धान्यमसिधिनुहिदेवानितितंडुलेष्वपिधान्यशब्दप्रयोगइतिचिंतामणिः तेनतंडुलग्रहणमनवद्यं।

गंधंकलशयोःप्रक्षिप्य । चंदनादिनातावनुलिप्यपुष्पमालाभूपितौकृत्वा ।( ॐ याओपधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुवभ्रूणामहंशतंधामानिसप्तचं । इतिसर्वौपधीःक्षिप्त्वा । ॐ कांडात्काडात्प्ररोहंतीपरुपःपरुपस्परिं । एवानोदूर्वेप्रतं-नुसहस्रेणशतेनच । इतिदूर्वाः । ॐ अश्वत्थेवोनिपदनंपर्णेवोवसतिष्कृता । गोभाजइत्किलासतयत्सनवथपूरुपं । इतिपंचपल्लवान् । ॐ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । इतिसप्तमृदः । ॐ याःफलिनीर्याअफलाअपुष्पा याश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः । इतिफलं । ॐ सहिरत्नानिदाशुपेसुवातिसविताभर्गः । तंभागंचित्रमीमहे । इतिकनककुलिशनीलपद्मरागमौक्तिकेतिपंचरत्नानि । ॐ हिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः । हिरण्ययात्परियोनेर्निषद्याहिरण्यदादददत्यन्नमस्मै । इतिहिरण्यं । ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः । तंधीरासःकवयउन्नयंतिस्वाध्यो १ नमसादेवयंतः । इतिवस्त्रेणसूत्रेणवाकलशौवेष्टयित्वा ) । ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइपमूर्जंशतक्रतो ॥ इतिसतंडुलाभ्यांसफलाभ्यांपूर्णपात्राभ्यांकलशयोराननेपिदध्यात् ॥ सर्वत्रप्रतिकलशंमंत्रावृत्तिरुत्तरसंस्थतार्चे ॥ ततस्तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ कलशेवरुणावाहनेविनियोगः ॥ ॐ तत्त्वायामि

---

१ अयधनुश्चिह्नातर्वर्तीभागःकाशीस्थपुस्तकात्सगृहीतः । क्वचिदत्रदूर्वापल्लवाद्याःप्रक्षपणेनोक्तास्तदाशयस्तुशांतिकेतेपामावश्यकताअन्यत्रमांगलिकेऐच्छिकमिति । २ कलशस्थापनं—पुण्याहवाचनेचैवय कुर्यात्कलशार्चनं । दक्षिणस्थ स्थिरश्चैवउत्तरस्थश्चरस्तथा । नचालयेद्दक्षिणस्थमुत्तरस्थंतुचालयेत् । अन्यथाधर्महानिःस्यादेपधर्मःसनातनइति । याम्यांदिशिस्थिरेकुंभेचरकुंभ.स्थिरोभवेत् । कुंभद्वयंशुभेतंत्रेह्यशुभेचैकउच्यते

मित्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीरितिउत्तरकलशेवरुणमा वाहयेत् चंदनादिनापूजयेच्च ॥ ततउत्तरकलशेदेवताआवाहयेदेवम् ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्र स्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्च सहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ सर्वेस मुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतु० ॥ ततस्तत्कलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदे वोभव ॥ अतिथिदेवोभवइति ॥ ततःअवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिना सुवर्ण पूर्णकलशंधारयित्वा आशिषःप्रार्थयते ॥ प्रार्थनामाह ॥ एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदा निचतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ गंधाःपांतु सौमंगल्यं चास्तु ॥ अक्षताःपांतु आयुष्यमस्तु ॥ पुष्पाणिपांतु सौश्रियमस्तु ॥ तांबूलानिपांतु ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु बहुदेयं

इतिस्मृतिवाक्यादेतच्छुभेकर्मणिकुंभद्वयज्ञेयं । यद्यपिविभ्रत्कुंभमपांपूर्णमितिगृह्यपरिशिष्टजयतशौनकादिभि. तथा सूत्रेणवेष्टितकुंभमित्याश्वलाय नस्मृतावप्यविशेषेणैककलशनिर्देशादेकवचनेनकलशद्वयाप्रतीतिस्तथाप्यत्रकुंभपदकलशद्वयोपलक्षणंसर्वसामंजस्यादितिसंस्कारकल्पद्रुमे । उत्तरक लशेदेवतावाहनेपिदक्षिणकलशेद्वित्वसंपादनार्थः विवाहहोमेसत्यामपिदृषदिउपलवत् । यदुक्तमशुभेचैकउच्यतइतितदशुभपरं । तेननिधनशांत्य गस्वस्तिवाचनादावेकएवकलशइतियाज्ञिकाः ।

चास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तंवहुपुत्रंचायुष्यंचास्तु ॥ ( अत्रसर्वत्रब्राह्मणैर
स्त्वितिप्रत्युत्तरंदेयं) ॥ यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्ततेतमहमोंकारमादिंकृत्वाऋग्यजुःसामा
शीर्वचनंवहूषिमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये॥ विप्राःवाच्यतामितिवदेयुः ॥ एवमुत्तरत्रापियथायोग्यं
प्रत्युत्तरंदेयं ॥ ततोयजमानः ॥ ॐ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशे
मदेवहितंयदायुः ॥ ॐ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारा
सतेदीर्घमायुः ॥ ॐ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानो
रासतांदीर्घमायुः॥ ॐ नवोनवोभवतिजायमानोह्नांकेतुरुपसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ आपउंदं
ॐ उच्चादिविदक्षिणावंतोऽअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाऽअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ आपउंदं
तुजीवसेदीर्घायुत्वायवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेऽ
अमृतत्वमश्यां ॥ ॐ यस्मैत्वंसुकृतेजातवेदऽउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥
संत्वासिंचामियजुषाप्रजामायुर्धनंच । भोब्राह्मणाःमनःसमाधीयतां । विप्राः समाहितमनसःस्मः । यजमानः प्रसीदंतु
भवंतः । विप्राः प्रसन्नाःस्मः । यजमानः शांतिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु ।

१ अत्रव्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानाब्राह्मणानामन समाधीयतामितीदवाक्य। कौस्तुभपारिजातकारादिभिरग्रहणादव द्ब्सुपेक्ष्यमेव।

आरोग्यमस्तु । शिवंकर्मास्तु । कर्मसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । वहिर्देशेऽरिष्टनिरसनमस्तु । यत्पापंतत्प्रतिहतमस्तु । मध्येयच्छ्रेयस्तदस्तु । उत्तरेकर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यंताम् । इष्टाःकामाःसंपद्यंताम् । तिथिकरणमुहूर्तनक्षत्रसंपदस्तु । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंताम् । तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदेवतेप्रीयेताम् । दुर्गापांचाल्यौप्रीयेताम् । अग्निपुरोगाविश्वेदेवाःप्रीयंताम् । इंद्रपुरोगामरुद्गणाःप्रीयंताम् । ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंताम् । विष्णुपुरोगाःसर्वेदेवाःप्रीयंताम् । माहेश्वरीपुरोगाउमामातरःप्रीयंताम् । वसिष्ठपुरोगाऋषिगणाःप्रीयंताम् । अरुंधतीपुरोगाएकपत्न्यःप्रीयंताम् । ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंताम् । ब्रह्मचब्राह्मणाश्चप्रीयंतां । श्रीसरस्वत्यौप्रीयेताम् । श्रद्धामेधेप्रीयेताम् । भगवतीकात्यायनीप्रीयताम् । भगवतीमाहेश्वरीप्रीयताम् । भगवतीपुष्टिकरीप्रीयताम् । भगवतीतुष्टिकरीप्रीयताम् । भगवतीऋद्धिकरीप्रीयताम् । भगवतीवृद्धिकरीप्रीयताम् । भगवंतौविघ्नविनायकौप्रीयेताम् । भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयताम् । हरिहरहिरण्यगर्भाःप्रीयंताम् । सर्वाग्रामदेवताःप्रीयंताम् । सर्वाःकुलदेवताःप्रीयंताम् । सर्वावास्तुदेवताःप्रीयंताम् । वहिःहताब्रह्मद्विषः । हताःपरिपंथिनः । हताअस्यकर्मणोविघ्नकर्तारः । शत्रवःपराभवंयांतु । शाम्यंतुघोराणि । शाम्यंतुपापानि । शाम्यंत्वीतयः । शुभानिवर्धंताम् । शिवाआपःसंतु । शिवाऋतवःसंतु । शिवाअग्नयःसंतु । शिवाआहुतयःसंतु । शिवाओषधयःसंतु ।

शिवावनस्पतयःसंतु । शिवाअतिथयःसंतुः । अहोरात्रेशिवेस्याताम् । निकामेनिकामेनःपर्जन्योवर्षतु । फलिन्योनओपधयःपच्यंताम् । योगक्षेमोनःकल्पताम् । शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंताम् । भगवान्नारायणःप्रीयताम् । भगवान्पर्जन्यःप्रीयताम् । प्रीयतांभगवान्स्वामीमहासेनः । पुण्याहकालान्वाचयिष्ये । वाच्यतामितिविप्राः ॥ ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेपुशंससि । वृषेवबाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद । याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते । यत्पुण्यंनक्षत्रं । तद्वट्कुर्वीतोपव्युषं । यदावैसूर्यउदेति । अथनक्षत्रंनैति । यावंतितत्रसूर्योगच्छेत् । यत्रजघन्यंपश्येत् । तावंतिकुर्वीतयत्कारीस्यात् । पुण्याहएवकुरुते । तानिवाएतानियमनक्षत्राणि । यान्येवदेवनक्षत्राणि । तेषुकुर्वीतयत्कारीस्यात् । पुण्याहएवकुरुते । मह्यंसहकुटुंविनेमहाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायामुककर्मणःपुण्याहंभवंतोब्रुवंत्वितित्रिर्वदेत् । ॐ पुण्याहमितित्रिर्वदेयुर्विप्राः । ॐ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः । बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः । आदित्यउदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंति ( स्वस्त्युद्यंति ) । स्वस्तिनइंद्रोवृद्धश्रवाः । स्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्ता

---

१ सहकुटुंविनेइत्यत्रसहशब्द.प्रशस्तवचन. इन्प्रत्ययस्तुप्रशस्तकुटुंवशब्दात् । अयमेवचसहशब्दस्यप्रशस्तार्थत्वेहेतु. इन्सहयोःसमानार्थकत्वादन्यतरवैयर्थ्यशंकानकार्या । प्रशस्तएवायंशिष्टाहृतपाठ. । २ असमंजसमन्त्रावृत्तिकरण ।

क्ष्योंअरिष्टनेमिः। स्वस्तिनोबृहस्पतिर्दधातु । अष्टौदेवावसवःसोम्यासः। चतस्रोदेवीरजराःश्रविष्ठाः । तेयज्ञंपांतुरजसः
पुरस्तात्। संवत्सरीणममृतंस्वस्ति । मह्यमित्यादिकर्मणइत्यंतंपूर्ववत् । अमुककर्मणेस्वस्तिभवंतोब्रुवंत्विति त्रिः। ॐ आयु
ष्मतेस्वस्तीतिप्रतिवचनंत्रिः। ॐ ऋध्यामस्तोमंसनुयामवाजमानोमंत्रैःसरथेहोपयातम् । यशोनपक्वंमधुगोष्वंतराभूतांशोअ
श्विनोःकाममप्राः । सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहं
परिभूयसर्वामृद्धिमाभ्नोत्सर्वामृद्धिमृध्नोतियएवंवेद । ऋध्यास्महव्यैर्नमसोपसद्य । मित्रंदेवंमित्रधेयंनोअस्तु । अनूराधा
न्हविर्षावर्धयंतः। शतंजीवेमशरदःसवीराः । त्रीणित्रीणिवैदेवानामृद्धानि । त्रीणिछंदांसित्रीणिसवनानि । त्रयइमे
लोकाः। ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति । मह्यमित्यादिअस्यकर्मणःऋद्धिंभवंतोब्रुवंत्विति त्रिः । ॐ ऋध्यतामिति
प्रतिवचनंत्रिः। ॐ श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति । श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमि
थामितद्रौ । श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद । यस्मिन्ब्रह्माभ्यज
यत्सर्वमेतत्। अमुंचलोकमिदमुंचसर्वम् । तन्नोनक्षत्रमभिजिद्विजित्य । श्रियंदधात्वहृणीयमानम् । अहेर्बुध्नियमंत्रंमे
गोपाय। यमृषयस्त्रयिविदाविदुः। ऋचःसामानियजूंषि । साहिश्रीरमृतासताम् । एतैर्मंत्रैर्नीराजनंकार्यं । मह्यमित्या
दिपूर्ववत्। अमुककर्मणःश्रीरस्त्वितिभवंतोब्रुवंत्विति त्रिर्ब्रूयात् । ॐ अस्तुश्रीरितित्रिर्विप्राः । वर्षशतंपूर्णमस्तु । गोत्रा
भिवृद्धिरस्तु। प्रजापतिःप्रीयताम् । ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः । शोचिर्वसानःपर्यायुरपां

श्रियोमिमीतेबृहतीरनूनाः । तदप्येपश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे । आविक्षितस्यकामप्रेर्विश्वेदेवाःसभा
सदइति ॥ ततउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्तेगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभिर्मंत्रैः । वास्तोष्प
तइतिचतसृणांमैत्रावरुणिर्वास्तोष्पतिस्त्रिष्टुप्कलशोदकसेचनेवि० । ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ।
यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे । वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो । अजरासस्ते
सख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व । वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या । पाहिक्षेमउतयोगेवरंनोयूयं
पातस्वस्तिभिःसदानः । अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवएधिनः । शिवंशिवंशिवम् । ततःकर्तुर्वा
मतःपत्नीमुपवेश्यपात्रपातितजलेनपल्लवदूर्वाभिरुदङ्मुखास्तिष्ठंतोविप्राअभिषिंचेयुः । तत्रमंत्राः । समुद्रज्येष्ठाइतिचतसृणां
वसिष्ठआपस्त्रिष्टुप् । अभिषेकेविनियोगः । ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभो
रराद्ताआपोदेवीरिहमामवंतु । याआपोदिव्याउतवास्त्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावका
स्ताआपोदे० । यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां । मधुश्चुतःशुचयोयाःपावकास्ता० । यासुराजावरु
णोयासुसोमोविश्वेदेवायासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ता० । त्रायंतामितितिसृणांसप्तऋषयआपोनुष्टुप् । अभि
षेकेवि० । त्रायंतामिहदेवास्त्रायंतांमरुतांगणः । त्रायंतांविश्वाभूतानियथायमरपाअसत् । आपइद्वाउभेषजीरापोअमीव
चातनीः । आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं । हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी । अनामयित्नुभ्यांत्वाता

भ्यांत्वोपस्पृशामसि । इमाआपइतितिसृणामैतरेयआपोनुष्टुब्जगत्यनुष्टुभः । अ० । इमाआपःशिवतमाइमाःसर्वस्यभेषजीः।
इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः। याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं। ताभिरद्भिरभिषिंचामित्वाम
हंराज्ञांत्वमधिराजोभवेह । महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् । देवस्यत्वासवितुः[1]
प्रसवेश्विनोर्वाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि । वलायश्रियैयशसेन्नाद्याय । इंद्रियंवाए
तदस्मिँल्लोकेयद्दधियद्दध्नाभिषिंचतींद्रियमेवास्मिंस्तद्दधातिरसोवाएषओषधिवनस्पतिषुयन्मधुयन्मध्वाभिषिंचतिरसमेवास्मिं
स्तद्दधातितेजोवाएतत्पशूनांयद्धृतंयद्धृतेनाभिषिंचतितेजएवास्मिंस्तद्दधात्यमृतंवाएतदस्मिँल्लोकेयदापोयदद्भिरभिषिंचत्यमृ
तत्वमेवास्मिंस्तद्दधातिसोभिषिक्तोभिषेक्त्रेब्राह्मणायहिरण्यंदद्यात्सहस्रंदद्यात्क्षेत्रंचतुष्पाद्दद्यादथाप्याहुरसंख्यातमेवापरिमितं
दद्यादपरिमितोवैक्षत्रियोपरिमितस्यावरुध्याइत्यथास्मैसुराकंसंहस्तआदधातिस्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इंद्रा
यपातवेसुतइतितांपिबेद्यदत्रशिष्टंरसिनःसुतस्ययदिंद्रोअपिबच्छचीभिः । इदंतदस्यमनसाशिवेनसोमंराजानमिहभक्षयामि ।
अभित्वावृषभासुतेसुतंसृजामिपीतये । तृंपाव्यश्नुहीमदमितियोहवावसोमपीथःसुरायांप्रविष्टःसहैवैतेनैंद्रेणमहाभिषेकेणाभि
षिक्तस्यक्षत्रियस्यभक्षितोभवतिनसुरातांपीत्वाभिमंत्रयेतापामसोमंशंनोभवेतितद्यथैवादःप्रियःपुत्रःपितरंप्रियावाजायापतिं
सुखंशिवमुपस्पृशत्याविस्रस एवंहैवैतेनैंद्रेणमहाभिषेकेणाभिषिक्तस्यक्षत्रियस्यसुरावासोमोवान्यद्वान्नाद्यंसुखंशिवमुपस्पृशत्या

[1] देवस्यत्वेत्यस्यैतरेयःसविताश्विनौपूषाचयजुः।

सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः । वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः । प्रद्यु
विस्रसः ॥ १ ॥ इतिब्राह्मणम् । आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा । वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः । ब्रह्म
म्नश्चानिरुद्धश्चभवंतुविजयायते । कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः । बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्च
णासहिताःसर्वेदिक्पालाःपांतुतेसदा । आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतुरा
मातरः । एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः । ऋषयोमुनयोगावोदेवमातरएवच । देवपत्न्योद्रुमानागादैत्याश्चा
हुकेतुश्चतर्पिताः । देवदानवगंधर्वायक्षराक्षसपन्नगाः । औषधानिचरत्नानिकालस्यावयवाश्चये । सरितःसागराःशैला
प्सरसांगणाः । अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच । इत्यादिपौराणिकान्श्लोकानपिपठंति । अभिषेकेतच्छं
स्तीर्थानिजलदानदाः। एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ ततआचारप्राप्तंवस्त्रादिदानंतत्परिधानंच । एवंबह्वृचपरिशि
योरितिमंत्रांते ॐ भूर्भुवःस्वःअमृताभिषेकोस्त्विवतिवदेयुः । इतिश्रीमद्विद्वन्मुकुटमाणिक्यश्रीरामेश्वरभट्टसुतनारायणभट्टविरचि
ष्टोक्तंशिष्टाचारप्राप्तंचैकीकृत्यपुण्याहवाचनमुक्तम् । ॥ ॥ ॥
तेप्रयोगरत्नेसर्वकर्मोपयोगीपुण्याहवाचनप्रयोगः ॥ ॥ गर्भाधानादिनामकर्मांतकर्माणिहित्वान्नप्राशनादिविवाहां
अथलोकानुसारेणानुकल्पपक्षमाश्रित्यांकुरार्पणप्रयोगः ॥ देशकालौस्मृत्वामुककर्मसाफल्यनिरंत
तापत्यसंस्कारेष्वन्येषुचनवागारप्रवेशादिशुभकर्मसुसद्योंकुरार्पणंकुर्यात् । तच्चैवं । इदमेवज्ञापकदेशानुसारेणशिष्टाचारप्रवृत्ते. ।

१ अत्रलोकानुसारेणेत्युक्तत्वात्क्वचिदनुष्ठानदृश्यतेनसर्वत्र ।

रथुभत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअंकुरार्पणंकरिष्येइतिसंकल्प्य । शुद्धभूमिंगोमयेनोपलिप्यरंगवल्ल्यादिभिरलंकृत्यतत्र
सिताक्षतान्प्रकीर्यकिंचिद्गंभीरंनववेणुपात्रंसूत्रेणावेष्ट्यतदेवपालिकात्वेनसंस्थाप्य वल्मीकमृदंह्रदपंकंशुष्कगोमयचूर्णंचतत्रप्र
क्षिप्य पालिकामूलेश्वेततंदुलैःपूरयित्वादूर्वांकुराश्वत्थशिरीषबिल्वपत्राणामुपरिशुभेमुहूर्तेतद्वेणुपात्रंसंस्थाप्य तत्रसितरक्तह
रिद्वर्णानिपुष्पाण्यवकीर्यमध्यादिपंचस्थानेषुपंचदेवताःपूजयेत् । तत्रब्रह्मजज्ञानंगोतमोवामदेवोब्रह्मात्रिष्टुप् । ब्रह्मावाहने
विनियोगः । ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः । सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ।
अनेनपालिकामध्येब्रह्माणमावाहयेत् । यतइंद्रेतिप्रगाथोभर्गइंद्रोबृहती । इंद्रावाहनेविनियोगः । ॐ यतइंद्रभयामहेततो
नोऽअभयंकृधि । मघवञ्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि । अनेनपूर्वभागेइंद्रमावाहयेत् ॥ नाकेसुपर्णभार्गवोवे
नोयमस्त्रिष्टुप् । यमावाहनेवि० । नाकेसुपर्णमुपयत्पतंतंहृदावेनंतोअभ्यचक्षतत्वा । हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौश
कुनंभुरण्युं । अनेनदक्षिणेयममावाहयेत् । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् । वरुणावाहने० । ॐ तत्त्वायामिब्रह्मणावंद
मानस्तदाशास्तेयजमानोहविर्भिः । अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः । अनेनपश्चिमेवरुणमावाहयेत् ।
सोमोधेनुंगोतमःसोमस्त्रिष्टुप् । सोमावाहनेवि० । ॐ सोमोधेनुंसोमोऽअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति । सादन्यंविदथ्यं
सभेयंपितृश्रवणंयोददाशदस्मै । अनेनोत्तरेसोममावाहयेत् । ततःब्रह्मणेनमआसनमित्यादिक्रमेणषोडशोपचारैःपंचदेवताः
सम्यगभ्यर्च्यपालिकापश्चिमतःप्राङ्मुखस्तिष्ठन्नुपतिष्ठेत् । दिशांपतीन्नमस्यामिसर्वकामफलप्रदान् । कुर्वंतुसफलंकर्मकुर्वंतु

सततंशुभमिति । ततःसिततंडुलांस्तोयेनप्रक्षाल्यप्राच्यादिचतुर्दिक्षुवीजप्रतिनिधित्वेनसमंत्रंवापयेत् । तत्र यतइंद्रेत्यादयश्चत्वारोमंत्राःप्रागुक्ताः ॥ इतिनारायणभट्टकृतेप्रयोगरत्नेसद्योंकुरार्पणप्रयोगः ॥ ॥ ॥

अथाभ्युंदयिकश्राद्धविधिः ॥ ॥ तच्चगर्भाधानादिगर्भसंस्कारेपुजातकर्मादिप्वपत्यसंस्कारेप्वग्न्याधानादिपुश्रौतकर्मसुश्रवणाकर्मादिषुवापीकूपतडागारामाद्युद्यापनादिपुदेवप्रतिष्ठायांवानप्रस्थाश्रमसंन्यासस्वीकारेतुलापुरुपादिमहादानादौनवगृहप्रवेशेमहानाम्न्यादिवेदव्रतेपुराजाभिपेकशांतिकपौष्टिकेपुसर्वेपुउपाकर्मोत्सर्जनयोरप्येकेनवीनयोर्वातयोरन्यत्राप्येवंविधेकार्यम् । इदमाभ्युदयिकश्राद्धंवक्ष्यमाणंवमातृपूजनमेकस्यानेकसंस्कारेप्वेककर्तृकेपुयुगपदुपस्थितेपुसर्वादौसकृदेवतंत्रेणकार्यंनतुप्रतिसंस्कारमावृत्त्या । यथादैवादकृतजातकर्मादितस्योपनयनकालेजातकर्माद्यनुष्ठानेदेशांतरगतस्यमृतवुद्ध्याकृतौर्ध्वदेहिकस्यागतस्यपुनर्जातकर्मादिसंस्काराणांयुगपदनुष्ठानेचकर्मनाशाजलस्पृष्टादीनांप्रायश्चित्ततयापुनःसंस्काराणांयुगपदनुष्ठानेवा । तदुक्तंब्रह्मपुराणे—गणशःक्रियमाणानांमातृभ्यःपूजनंसकृत् । सकृदेवभवेच्छ्राद्धमादौनपृथगादिष्विति । तत्रा

१ यज्ञोद्वाहप्रतिष्ठासुमेखलावधमोक्षयो. । पुत्रजन्मवृपोत्सर्गेवृद्धिश्राद्धसमाचरेत् । तेनवैदिकहोमागकेपुदर्शपूर्णमासादिपुचवचनविशेपितेपुकर्मसुवृद्धिश्राद्धमाचरणीयमितिहेमाद्रि । २ तुलापुरुपादीनामपियागसशब्दनाल्लोकपालानामावाहनमंत्रेपुचसर्वेपुममाध्वरपाहियज्ञरक्षेत्यादिशब्दप्रयोगात्सत्यपिदानरूपत्वेयागधर्मैर्भवितव्यमितितत्रापिवृद्धिश्राद्धकर्तव्य । एवमेवसहोमकेपुधान्यपर्वतादिष्वप्यनुसधेयमितिहेमाद्रि. । तदपिगणशःक्रियमाणसंस्कारेष्वाभ्युदयिकेनसाकसकृदेव ।

भ्युदयिकश्राद्धेकर्तव्येमानुष्योदैव्यश्चद्विविधामातरआदौपूज्याः । तत्रमानुष्योंमातरोष्टौमातृपितामहीप्रपितामह्यः । माता

१ मातृपूजनस्याकरणेदोषोभविष्यपुराणेहेमाद्रौ—अकृत्वामातृयज्ञंतुयःश्राद्धंपरिवेषयेत् । तास्तस्यक्रोधसंपन्नाहिंसांकुर्वंतिदारुणां । इति । मातृकापूजनविचारः—तत्रगौर्याद्याश्चतुर्दशषोडशवेत्युपस्थितौबहुत्रचतुर्दशपदसमभिव्याहारान्मातरोलोकमातरइतिद्वयंसर्वासांविशेषणं एतामातरोलोकमातरोभवंति एतामातरोवृद्धौपूज्याइत्यर्थः । एवमेवादित्यभाष्ये । परशुरामादीनांमतेप्येवं । हेमाद्रिरूपनारायणमदनरत्नादिकारास्तु—पूज्यास्तुषोडशैवैतंमातरोलोकमातरइतिपरिगणनातःपठंति । अतएवपद्धतिकारैर्निबंधकारैश्चद्वौपक्षावुपन्यस्तौ । वस्तुतस्तुचतुर्दशमातॄणामेवसत्वाच्चतुर्दशेत्येवपाठःश्रेयान् । अतएवअविच्छिन्नाध्ययनसंप्रदायसमागतपाठंसम्यग्जानंतःपरिशिष्टाध्येतारोपिवृद्धौपूज्याश्चतुर्दशेत्येवपठंति । वाजसनेयिभिश्चस्वगृह्येमातृपूजाविधेरनुक्तत्वात्—सर्वेषामपिपक्षाणांस्वगृह्योक्तविधीयते । स्वगृह्योक्तस्यचाभावेग्रहणंस्वेच्छयाभवेदितिसंग्रहवचनात्यद्यपिस्वेच्छयोक्तंतथापितैश्छंदोगपरिशिष्टोक्ताएवमातरःपूज्याः। कात्यायनसूत्रपरिशिष्टोक्तयोरेककर्तृत्वात्पारस्करमतस्याश्रयणीयत्वाच्च । तथाचस्मृतिसंग्रहः—नगृह्यादिस्मृतिर्येषांश्राद्धादावुपलभ्यते । कर्तुमर्हंतितेसर्वेपारस्करमुनीरितमिति । एतासांचप्रत्येकंदेवतात्वंगौरीत्यादिनाऽसमुदितानांचमातृत्वेनैकवादेवतात्वम् । अत्रकेचिन्मातरःसगणाधिपाइत्यत्रमातॄणांगौर्याद्यविशेषितानांपूज्यत्वावगमात्तासामेवमिलितानांदेवतात्वनचतुर्थ्यादिविशेषितानां । अश्रुतत्वात्तासां । यद्यपिगौरीपद्मेत्यादिनाविशेषिताएवमातरोदेवतात्वेनश्रूयंतेतथापितस्यवचनस्योद्देशमात्रपरत्वान्मिलितानामेवमातॄणांदेवतात्वमितिमन्यते । अन्येतुगौर्यादीनांप्रत्येकंदेवतात्वमाहुः । युक्ततरंचैतत् । अन्यथाबहुत्वविशिष्टमातॄणामेकदेवतात्वेवृद्धौपूज्याश्चतुर्दशेतिचतुर्दशसंख्यानुपपत्तेः दशोपचारैर्देवेशिप्रत्येकनामभेदतइतिरुद्रयामलेप्रत्येकंपूज्यत्वविधानानुपपत्तेश्च । तस्मात्प्रत्येकदेवतात्वम् । तत्रगौर्यादीनांप्रत्येकदेवतात्वपक्षेनियामकाभावेवाजसनेयिनआहुः । अत्रपूर्वमेवयुक्तमितिचिंतामणिरिति । अत्रायंनिष्कर्षः—यद्यपिब्राह्म्याद्याश्चतथासप्तदुर्गाक्षेत्रगणाधिपानितिवचनं तथागणेशेनाधिकाह्येतावृद्धौपूज्यास्तुषोडशेतिवचनेचगणपतिपूजनमुक्तंतथापितत्रक्रमाभावात् । आदौविना

महीमातुःपितामहीमातुःप्रपितामहीतिपट्पितृष्वसामातृष्वसाचेति । ब्रह्माण्याद्यास्तथासप्तदुर्गाक्षेत्रगणाधिपान् । ब्रह्माण्याद्याः—ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा । वाराहीचतथेंद्राणीचामुंडासप्तमातरः । दुर्गांक्षेत्राधिपतिंगणाधिपतिंचपूजयेत् । तथाकात्यायनः—कुड्यलग्नावसोर्धारापंचधाराघृतेनतु । कारयेत्सप्तवाधारानातिनीचानचोच्छ्रिताः । गौरीपद्माशचीमेधासावित्रीविजयाजया । देवसेनास्वधास्वाहामातरोलोकमातरः । धृतिःपुष्टिस्तथातुष्टिरात्मदेवतयासहेति । आत्मदेवतात्मकुलदेवता । आयुष्याणिचशांत्यर्थंजपेदत्रसमाहितः । आयुष्याणिआनोभद्राइत्यादीनि । ततःवृद्धिश्राद्धं नवदैवत्यंपार्वणत्रयात्मकम् । तत्रक्रममाहाश्वलायनाचार्यः—मातापितामहीचैवसंपूज्याप्रपितामही । पित्रादयस्त्रयश्चैव मातुःपित्रादयस्त्रयः । एतेनवार्चनीयाःस्युःपितरोऽभ्युदयेद्विजैरिति । यत्तुवृद्धवसिष्ठः—नांदीमुखेविवाहेचप्रपितामहपूर्वकम् । नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकमितिस्मृत्यर्थसारश्च । वृद्धमुख्यास्तुपितरोवृद्धिश्राद्धेषुभुंजतइति तच्छाखांतरविषयम् । आश्वलायनानांतु आनुलोम्येनमात्रादिक्रमेणैव आश्वलायनाचार्यवचनात् । यत्तुब्रह्मपुराणे—पितापितामहश्चैवतथैवप्रपितामहः । त्रयोह्यश्रुमुखाह्येतेपितरःसंप्रकीर्तिताः । तेभ्यःपूर्वेत्रयोयेचतेतुनांदीमुखाःस्मृताइति । तन्महालय

---

यक पूज्योह्यतेचकुलदेवतेतिवह्वृचपरिशिष्टानुरोधाद्बह्वृचानामादौगणपत्यादित्रय । वास्तुयागमकुर्वाणस्तवाहारोभविष्यतीतिवचनेनकेपाञ्चिदाचाराद्वास्तोष्पतिततोब्राह्म्यादिसप्तततोगौर्यादिषोडशमातॄरआवाह्यपूजयेदिति तेनसप्तविंशतिरितिसर्वमनवद्यम् । इतिसंस्कारगणपतिव्याख्या ।

१ कचिद्गौर्यादिक्रम कचिद्गणपत्यादिस्तेनद्विविध शिष्टाचारोत्रानुमीयते ।

प्रकरणपठितप्रौष्ठपदपौर्णमासीनिमित्तकश्राद्धविषयंतत्प्रकरणपाठादित्येवंहेमाद्र्यादयऊचिरे । इहचनांदीमुखसंज्ञकान्मात्रा
दीनुद्दिशेत् । विष्णुपुराणे—कन्याविवाहादीननुक्रम्य—नांदीमुखान्पितृनादौतर्पयेत्प्रयतोगृहीत्युक्तेः । ब्रह्मपुराणेच—
जन्माद्यनुक्रम्यपितृन्नांदीमुखान्नामतर्पयेद्विधिपूर्वकमित्युक्तेः । वृद्धपराशरेणतु—देवानामपिनांदीमुखविशेषणमुक्तमत्रनां
दीमुखेभ्योदेवेभ्यःप्रदक्षिणंकुशासनमिति । वृद्धिश्राद्धेचकालः—कर्माहात्पुर्वेद्युर्मातृपार्वणं कर्माहेपितृपार्वणं कर्मोत्तरा
हेमातामहपार्वणमिति । अस्यासंभवेपूर्वेद्युरेवपूर्वाह्णेमातृपार्वणंमध्याह्नेपैतृकंअपराह्णेमातामहानां । अस्याप्यसंभवेआह
वृद्धमनुः—अलाभेश्राद्धकालानांनांदीश्राद्धत्रयंवुधः । पूर्वेद्युरेवकुर्वीतपूर्वाह्णेमातृपूर्वकमिति । इदंचमहत्सुकर्मसु । अल्पे
षुतुकर्माहएवश्राद्धं । पुत्रजन्मनितुदिनेवारात्रौवाभुक्तवतोपवासिनावापुत्रजननानंतरमेवकार्यम् । अत्रसंकल्पादौविशेषः
संग्रहे—शुभायप्रथमांतेनवृद्धौसंकल्पमाचरेत् । नषष्ठ्यायदिवाकुर्यान्महादोषोऽभिजायते । अनस्मद्धद्धशब्दानामरूपाणा
मगोत्रिणाम् । अनाम्नांचातिलाद्यैश्चनांदीश्राद्धंचसव्यवत् । कारिकाच—संवंधनामरूपाणिवर्जयेदत्रकर्मणि । अत्रसत्य
वसूविश्वेदेवौ । तत्स्थानेद्वौविप्रौमात्रादीनांचप्रत्येकंद्वौद्वौएवंविंशतिर्ब्राह्मणाः । यद्वामात्रादीनांत्रयाणांद्वौद्वावेवमष्टौ । अत्र
नापसव्यं तिलस्थानेयवाएव स्वधास्थानेस्वाहाशब्दः सव्यजानुनिपातनाभावः नाम्नान्नदानं प्राङ्मुखएवकुर्यात् प्रदक्षि
णमुपचारोऋजुदर्भैःक्रियेत्यादयोविशेषाग्रंथांतरतोज्ञेयाः । पिंडदानेकुलदेशाचारतोव्यवस्था । भविष्यपुराणे—पिंडनि
र्वपणंकुर्यान्नवाकुर्यान्नराधिप । वृद्धिश्राद्धेमहावाहोकुलधर्मानवेक्ष्यतु । पिंडदानपक्षेविशेषोवसिष्ठेनोक्तः—दधिकर्कंधुसंमि

श्रान्पिंडान्दद्याद्यथाक्रमम्। कर्कंधुर्बदरीफलम्। तथाएकैकस्मैपिंडद्वयंदेयम् ।—एकंनाम्नापरंतूष्णींदद्यात्पिंडद्वयंबुधइति चतुर्विंशतिमतात् । अन्येचबहवोविशेषाग्रंथांतरतोज्ञेयाः । दाक्षिणात्यानांविस्तृतवृद्धिश्राद्धाचाराभावान्नेहोच्यंते ॥ ॥ अथाभ्युदयिकेकर्तृनिर्णयःसायणीये ।—नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः । अतऊर्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकम्। द्वितीयपाणिग्रहणादौवरएवकुर्यादित्यर्थः । कात्यायनः—स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु । पिंडानोद्वहनात्तेषां तस्याभावेतुतत्क्रमात् । तेषांसुतानांओद्वहनात्प्रथमविवाहपर्यंतंपितास्वपितृभ्यःपिंडान्तदुपलक्षितंवृद्धिश्राद्धंकुर्यात् । तस्य पितुरभावेतुतस्यसंस्कार्यस्यपितृणांयःक्रमस्तेनक्रमेणपितृव्याचार्यमातुलादिःश्राद्धंदद्यान्नस्वपितृभ्यइतिहेमाद्रिणाव्याख्यात म् । जीवत्पितृकस्तुपितुर्मात्रादिभ्योवृद्धिश्राद्धंकुर्यात् । वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति । येभ्यएवपितादद्यात्तेभ्योद द्यात्स्वयंसुतः।एतत्साग्निकविषयमित्येके । विष्णुः—पितरिजीवतियःश्राद्धंकुर्यात्सयेषांपिताकुर्यात्तेषांकुर्यात्पितरिपितामहे चयेषाप्रपितामहः पितरिपितामहेप्रपितामहेचनैवदद्यादिति । आश्वलायनगृह्यपरिशिष्टेतु—जीवत्पितासुतसंस्कारेषुमातृ मातामहयोःकुर्यात्तस्यांजीवत्यांमातामहस्यैवकुर्यादिति ॥ ॥ अथास्यशिष्टप्रचुराचारपरिगृहीतःसंकल्पविधिनाप्रयोगः ॥ उपनयनादिमहत्सुकर्मसुपुर्वेद्युर्जातकर्माद्यल्पकर्मसुतदहरेवनांदीश्राद्धंकुर्यात् । तत्रादौकर्ताकृतमांगलिकस्नानोधौतवासाः कृतस्वस्त्ययनोनादीश्राद्धपूर्वांगंमातृकापूजनंकुर्यात् । तच्चेत्थं । गोमयोपलिप्तेरंगवल्ल्यादिभिरलंकृतेश्राद्धस्थलेप्रतिमास्व क्षतपुंजेषुद्विजातिषुवायथालाभंसंकल्पपूर्वकंमातृपितामहीप्रपितामहीमातामहीमातृपितामहीमातृप्रपितामहीपितृष्वसृमातृ

ष्वसाख्याअष्टौमानुषमातॄर्यथासंभवं । यद्वापूर्वोक्ताविनायकाद्यागौर्यादिषोडशमातॄः ब्राह्म्यादिसप्तमातॄः दुर्गांक्षेत्रपालं गणाधिपंचप्रत्येकंकांडानुसमयेनपदार्थानुसमयेनवाप्रणवादिनमोंतनाममंत्रैरावाहनादिभिरभ्यर्चयेत् । यद्वा ॐगौर्यादिषोडशमातृभ्योनमः ब्राह्म्यादिसप्तमातृभ्योनमइतिसंक्षेपेणसमुदितरूपेणार्चयेत् । ततः ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतासउद्भिदः । देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्तताम् । देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे ॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं । अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं । तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं । पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये । स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु । पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः । अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह । भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः । शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनां । पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः । अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः । विश्वेदेवाअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वं । ॐ शतंजीवशरदोवर्धमानःशतंहेमंतान्छतमुवसंतान् । शतमिंद्राग्नीसविताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः । आहार्षत्वा

विंदंत्वापुनरागाःपुनर्नव । सर्वांगसर्वैंतेचक्षुःसर्वमायुश्चतेविदं । त्यमूषुवाजिनंदेवजूतंसहावानंतुरुतारंरथानां । अरिष्टने
मिंपृतनाजमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम । इंद्रस्येवरातिमाजोहुवानाःस्वस्तयेनावमिवारुहेम । उर्वीनपृथ्वीवहुलेगभीरेमा
वामेतौमापरेतौरिषाम । सद्यश्चिद्यःशवसापंचकृष्टीःसूर्यइवज्योतिपापस्ततान । सहस्रसाःशतसाअस्यरंहिर्नस्मावरंतेयुवतिं
नगर्यां । महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः । दुराधर्षंवरुणस्य । नहितेषाममाचननाध्वसुवारणेषु । ईशेरिपुरघशंसः ।
यस्मैपुत्रासोअदितेःप्रजीवसेमर्त्याय । ज्योतिर्यच्छंत्यजस्रं । तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनः
स्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजं । शंनोअस्तुद्विपदेशंचतुष्पदे । ॐ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओष
धीभ्यः । नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि । इतिसूक्तानिपठित्वानांदीश्राद्धसंकल्पंकुर्यात् । तत्रोपवी
तीप्राङ्मुखस्तिथ्यादिसंकीर्त्य । सत्यवसुसंज्ञकाविश्वेदेवाःनांदीमुखाः । मातृपितामहीप्रपितामह्यः नांदीमुख्यः । पितृ
पितामहप्रपितामहाः नांदीमुखाः । मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिताः नांदीमुखाः । एतानुद्दिश्यसं
कल्पविधानेननांदीश्राद्धंकरिष्यइतिसंकल्प्यलक्षणलक्षितान्विंशतिसंख्याकानष्टसंख्याकान्वाब्राह्मणान्पूर्वेद्युः सद्योवादैवपू
र्वकंनिमंत्र्य कृताभ्यंगस्नानान्पूर्वाह्णेपरिचारकैराकार्य संवुद्ध्योक्त्यातेषांपादान्प्रक्षाल्यप्राङ्मुखानुपवेश्यषष्ठीविभक्त्योक्त्वा
ऋजुदर्भयुग्मान्यासनंप्रदायापःप्रदायक्षणंदत्वाद्वितीययामंत्रकमावाह्यगंधशुक्लमाल्यधूपदीपाच्छादनाभरणानिप्रथमयाद्वि
र्दत्वामधुरद्रव्यसहितमनम्लमन्नंपरिविष्यपृथिवीतेपात्रमित्यादुक्त्वाचतुर्थ्योक्त्यास्वाहाहव्यंनममेति सर्वत्रत्यक्त्वातृप्ते

षु—उपास्मैगायतेतिपंचानांकाश्यपोसितःसोमोगायत्रीजपेवि० । ॐ उपास्मैगायतानरःपवमानायेंदवे । अभिदेवाँऽइयक्षते । अभितेमधुनापयोथर्वाणोअशिश्रयुः । देवंदेवायदेवयु । सनःपवस्वशंगवेशंजनायशमर्वते । शंराजन्नोषधीभ्यः । बभ्रवे नुस्वतवसेरुणायदिविस्पृशे । सोमायगाथमर्चत । हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन । मधावाधावतामधु । एताःपंचर्चः श्रावयित्वातैरुत्तरापोशनादौकृतेहस्तशुद्ध्यादिकंकृत्वाद्राक्षामलकेतन्निष्क्रयंवादक्षिणांदत्वा । मातापितामहीचैवतथैवप्रपितामही । पितापितामहश्चैवतथैवप्रपितामहः । मातामहस्तत्पिताचप्रमातामहकादयः । एतेभवंतुसुप्रीताःप्रयच्छंतुचमंगलमित्युक्त्वा कृतांजलिःसंप्रार्थ्यप्रणिपत्यब्राह्मणान्विसृज्याचम्यगौर्यादीर्विसर्जयेत् ॥ ॥ ॥ ॥ ॥

अथातोपिसंक्षिप्तःशिष्टैःक्रियमाणोवृद्धिश्राद्धप्रयोगः ॥ पूर्ववद्गौर्यादीनांब्राह्म्यादीनांचपूजांकृत्वा सदूर्वांकुरानक्षतान्जलंचादाय सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यंस्वाहानमः [इयंचवृद्धिः] । मातृपितामहीप्रपितामह्यःनांदीमुख्यःभूर्भुवःस्वःइदंवःपाद्यंस्वा० । पितृपितामहप्रपितामहाःनांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यंस्वा० । मातामहमातुःपितामहमातुःप्रपितामहाःसपत्नीकाःनांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यमित्युक्त्वासर्वत्रपात्रेसदूर्वाक्षतजलंक्षिपेत् । एवमेवपुनःसत्यादीन्विश्वान्देवान्मात्रादीःपित्रादीन्मातामहादींश्चत्रीन्संबुद्ध्योक्त्वापूर्ववद्व्याहृतिभिरिदमासनगंधाद्युपचारकल्पनंस्वाहानममेतिदूर्वाक्षतगंधपुष्पजलानिप्रत्येकंपात्रेनिक्षिपेत् । ततोविनायकाद्याःगौर्यादिषोडशमातरोब्राह्म्यादिसप्तमातरश्चभूर्भुवःस्वरिदंदास्यमानंवायुग्मब्राह्मणभोजनपर्याप्तमन्नंयथाशक्तिसोपस्करममृतरूपेणस्वाहानममेतिदूर्वादीन्निक्षिपेत् । एवंविश्वे

भ्योदेवेभ्योमात्रादिभ्यःपित्रादिभ्योमातामहादिभ्यःसपत्नीकेभ्यःसंवुद्ध्यादद्यात् । अन्नासंभवेअन्नपदस्थानेइदंदास्यमानंसोपकरमाममितिवदेत् । तच्चचतुर्गुणंद्विगुणंसमंवाशक्त्यासंकल्पयेत् । आमासंभवेपियुग्मब्राह्मणभोजनपर्याप्ताष्टगुणंचतुर्गुणंद्विगुणंसमंवाहिरण्यंहिरण्यप्रतिनिधिभूतंद्रव्यंवेतिवदन्शक्त्यासंकल्पयेत् । एवंदशभ्यःसंकल्पयेत् । ततःपूर्ववदुपास्मै इत्यादिपंचर्चःश्रावयित्वा कृतस्यवृद्धिश्राद्धस्यसंपूर्णतासिद्ध्यर्थेद्राक्षामलकेतत्प्रतिनिधित्वेनद्रव्यंवादक्षिणांसंप्रददेनममेत्युक्त्वा प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । जपेविनियोगः । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणामितिमंत्रंजप्त्वा अनेननांदीश्राद्धेननांदीमुखदेवताःप्रीयंतांवृद्धिरस्तु । मातापितामहीचैवेतिउक्तश्लोकद्वयंजपेत् । ततआचारतःकिंचिद्द्रव्यंगृहीत्वा इळामग्नइतिवसिष्ठइंद्रस्त्रिष्टुप् । देवतासंतुष्टतासिद्ध्यर्थेद्रव्यनाणकेनशब्दकरणेविनि० । ॐ इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध । स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मेइतिमंत्रंजपन्संकल्पपात्रेसंघट्टनेनशब्दंकुर्यादिति । ततोमातृकाविसर्जयेत् । जीवन्मातृकस्यनमातृपार्वणम् । जीवन्मातामहस्यनमातामहपार्वणम् । द्वारलोपात् । जीवत्पितृकस्तुयेभ्यःपितादद्यात्तेभ्योदद्यादित्युक्तमेव ॥ ॥

इतिश्रीरामेश्वरभट्टसुतश्रीनारायणभट्टविरचितेप्रयोगरत्नेवृद्धिश्राद्धप्रयोगसहितोनिर्णयः ॥ ॥ ॥

अथकौतुकबंधप्रयोगः ॥ सचप्रचुराचाराभावात्संक्षेपतःसूक्तादिमात्रंगृहीत्वालिख्यते ॥ अत्रशौनकः ॥ अथकौतुकबंधस्य

१ पात्राध प्रहरेदिळामितिपठन्द्रव्येणकुर्वन्स्वनमितिप्रयोगचूडामणौ ।

प्रयोगोऽत्रनिगद्यते। विवाहादिशुभेकार्येरात्र्यांवापिदिवातथा। सांकुरेपालिकायुक्तेस्थंडिलेव्रीहिपूरिते। सहाक्षतेनकांस्येनसो
दकुंभंनिधायच। आचार्योदर्भमयकूर्चे[विष्टरे]उदकुंभंनिधायसाक्षतकांस्यपात्रेपंचगुणीकृतंकार्पाससूत्रंनिधायतत्समीपेप्राङ्मु
खंयजमानमुपवेश्यसकुशहस्तैर्ऋत्विग्भिःसहकुंभोदकेनतत्सूत्रंमंत्रैरभिषिंचेत्॥ तेचमंत्राः।'तत्सवितुर्विश्वामित्रःसविता गाय
त्रीसूत्रप्रोक्षणेविनियोगःएवंसर्वत्र॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि। धियोयोनःप्रचोदयात्॥१॥ अग्निमीळेमधुच्छंदा
अग्निर्गायत्री। ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं। होतारंरत्नधातमं ॥ १ ॥ इषेत्वेतिमंत्रस्यश्रेष्ठतमाऋषिःकर्मणो
देवतात्र्यैकोत्तरशतस्तोमजपेविनियोगः। यद्वाइषेत्वेतिमंत्रस्यउपायवऋषिःकर्मणोदेवताअनुष्टुप्छंदः। सूत्रप्रोक्षणेवि०।
ॐ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणे। आप्यायध्वमघ्न्यादेवभागमूर्जस्वतीपयस्वतीत्यन
मीवाअयक्ष्मामावस्तेनईशतमाघशंसोरुद्रस्यहेतिःपरिणोवृणक्तु। ध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि। अग्नआया
हीतिमंत्रस्यगृणानऋषिः हव्यदातृदेवतागायत्रीच्छंदःसूत्रप्रोक्ष०। ॐ अग्नआयाहिवीतयेगृणानोहव्यदातये। निहोता
सत्सिबर्हिषि॥ १ ॥ शंनोदेवीतिमंत्रस्याभीष्टऋषिः आपोदेवता गायत्रीच्छंदः। सूत्रप्रोक्ष०। ॐ शंनोदेवीरभिष्टयऽ
आपोभवंतुपीतये। शंयोरभिस्रवंतुनः ॥ १ ॥ आपोहिष्ठेतिनवर्चस्यांवरीपःसिंधुद्वीपआपोगायत्री। पंचमीवर्धमानासप्त
मीप्रतिष्ठांत्येद्वेअनुष्टुभौ। सूत्रप्रोक्ष०। ॐ आपोहिष्ठामयोभु०॥९॥ एतोन्विंद्रमितितृचस्यांगिरसस्तिरश्चीइंद्रोनुष्टुप्। सूत्रप्रो
क्ष०॥ ॐ एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना। शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु। इंद्रशुद्धोनआगहिशुद्धःशुद्धा

भिरूतिभिः । शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः । इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे । शुद्धोवृत्राणिजिघ्नसेशुद्धोवा
जंसिपाससि ॥३॥ ऋतंचेतितृचस्याघमर्षणोभाववृत्तमनुष्टुप् । सूत्रप्रो० । ॐ ऋतंचसत्यंचाभीद्धात्० ॥३॥ प्रशर्धायश्यावा
श्वोमरुतोजगती । सूत्रप्रोक्ष० । प्रशर्धायमारुतायस्वभानवइमावाचमनजापर्वतच्युते । धर्मस्तुभेदिवआपृष्टयज्वनेद्युम्न
श्रवसेमहिंनृम्णमर्चत ॥ १ ॥ स्वस्तिनोमिमीतेतिस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् । सूत्रप्रो० । ॐ स्वस्तिनोमिमीतामश्विना
भगःस्वस्तिदेव्यदितिरनर्वणः । स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना । स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधु
च्छंदाःपवमानःसोमोगायत्री । सूत्रप्रो० । ॐ स्वादिष्ठयामदिष्ठया० ॥१०॥ रक्षोहणमितिपंचविंशत्यृचस्यसूक्तस्यभरद्वाजःपायू
रक्षोहाग्निस्त्रिष्टुप् । अंत्याश्चतस्रोनुष्टुभः । ॐ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म । शिशानोअग्निःक्रतुभिः
समिद्धःसनोदिवासरिषःपातुनक्तं । अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः । आजिह्वयामूरदेवान्रभस्वक्रव्या
दोवृक्त्व्यपिधत्स्वासन्।उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच।उतांतरिक्षेपरियाहिराजन्जम्भैःसंधेह्यभियातुधानान्।
यज्ञैरिषूःसंनममानोऽअग्नेवाचाशल्याँऽअशनिभिर्दिहानः। ताभिर्विध्यहृदयेयातुधानान्प्रतीचोबाहून्प्रतिभङ्ध्येषां। अग्नेत्वचं
यातुधानस्याभिंधिहिंस्राशनिर्हरसाहंत्वेनं। प्रपर्वाणिजातवेदःशृणीहिक्रव्यात्क्रविष्णुर्विचिनोतुवृक्णं॥१॥यत्रेदानींपश्यसिजात
वेदस्तिष्ठंतमग्नउतवाचरंतं। यद्वांतरिक्षेपथिभिःपतंतंतमस्ताविध्यशर्वाशिशानः। उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभि
र्यातुधानात्। अग्नेपूर्वोनिजहिशोशुचानआमादःक्ष्विंकास्तमदंत्वेनीः । इहप्रब्रूहियतमःसोअग्नेयोयातुधानोयइदंकृणोति ।

तमारभस्वसमिधायविष्ठनृचक्षसश्चक्षुपेरंधयैनं । तीक्ष्णेनाग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः । हिंस्रंरक्षांस्यभिशोशुं
चानंमात्वादभन्यातुधानानृचक्षः । नृचक्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिशृणीह्यग्रा । तस्याग्नेपृष्टीर्हरसाशृणीहित्रेधामूलं
यातुधानस्यवृश्च ॥ २ ॥ त्रिर्यातुधानःप्रसितिंतएत्वृतंयोऽअग्नेअनृतेनहंति । तमर्चिषास्फूर्जयन्जातवेदःसमक्षमेनंगृणतेनि
वृंग्धि । तदग्नेचक्षुःप्रतिधेहिरेभेशफारुजंयेनपश्यसियातुधानं । अथर्ववज्ज्योतिषादैव्येनसत्यंधूर्वंतमचितंन्योष । यदग्नेअद्य
मिथुनाशपातोयद्वाचस्तृष्टंजनयंतरेभाः । मन्योर्मनसःशरव्या१जायतेयातयाविध्यहृदयेयातुधानान् । पराशृणीहितपसा
यातुधानान्पराग्नेरक्षोहरसाशृणीहि । परार्चिषामूरदेवाञ्छृणीहिपरासुतृपोअभिशोशुचानः । पराद्यदेवावृजिनंशृणंतुप्रत्यगे
नंशपथायंतुतृष्टाः। वाचास्तेनंशरवऋच्छंतुमर्मन्विश्वस्यैतुप्रसितिंयातुधानः॥३॥ यःपौरुषेयेणक्रविषासमंक्तेयोऽअश्व्येनपशुना
यातुधानः । योअघ्न्यायाभरतिक्षीरमग्नेतेषांशीर्षाणिहरसापिवृश्च । संवत्सरीणंपयऽउस्रियायास्तस्यमाशीद्यातुधानोनृचक्षः ।
पीयूषमग्नेयतमस्तितृप्सात्तंप्रत्यंचमर्चिषाविध्यमर्मन् । विषंगवांयातुधानाःपिबंत्वावृश्च्यंतामदितयेदुरेवाः । परैनान्देवःसवि
तादंदातुपराभागमोषधीनांजयंतां । सनादग्नेमृणसियातुधानान्नत्वारक्षांसिपृतनासुजिग्युः । अनुदहसहमूरान्क्रव्यादोमाते
हेत्यामुक्षतदैव्यायाः । त्वंनोअग्नेअधरादुदक्तात्त्वंपश्चादुतरक्षापुरस्तात् । प्रतितेतेअजरासस्तपिष्ठाऽअघशंसंशोशुचतोदहंतु
॥ ४ ॥ पश्चात्पुरस्तादधरादुदक्तात्कविःकाव्येनपरिपाहिराजन् । सखेसखायमजरोजरिम्णेग्नेमर्ताऽअमर्त्यस्त्वंनः । परित्वाग्ने
पुरंवयंविप्रंसहस्यधीमहि । धृषद्वर्णंदिवेदिवेहंतारंभंगुरावताम् । विषेणभंगुरावतःप्रतिष्मरक्षसोदह । अग्नेतिग्मेनशोचि

षातपुरग्राभिर्ऋष्टिभिः । प्रत्यग्नेमिथुनादहयातुधानाकिमीदिनां । संत्वांशिशामिजागृह्यदंधंविप्रमन्मभिः । प्रत्यग्नेहरसा
हरःशृणीहिविश्वतःप्रति । यातुधानस्यरक्षसोवलंविरुजवीर्यं ॥२५॥ रात्रीव्यरुयदित्यष्टर्चस्यसूक्तस्य सौभरिःकुशिकोरात्रिर्वा
भारद्वाजीरात्रिस्तवोगायत्री । सूत्रम्प्रो० । रात्रीव्यरुयदायतीपुरुत्रादेव्या१क्षभिः । विश्वाऽअधिश्रियोधित । ओर्वप्राऽअ
मर्त्यानिवतोदेव्यू१द्वतः । ज्योतिषावाधतेतमः । निरुस्वसारमस्कृतोपसंदेव्यायती । अपेदुहासतेतमः । सानोअद्ययस्यांव
यंनितेयामंनविक्ष्महि । वृक्षेनवसतिंवयः । निग्रामासोऽअविक्षितनिपद्वंतोनिपक्षिणः । निश्येनासश्चिदर्थिनः । यावयावृक्यं१
वृकंयवयस्तेनमूर्म्ये । अथानःसुतराभव । उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित । उषऋणेवयातय । उपतेगाऽइवाकरंवृणो
ष्वदुहितर्दिवः । रात्रिस्तोमंनजिग्युषे ॥ ८ ॥ कृणुष्वेतिपंचदशर्चस्यसूक्तस्यवामदेवोरक्षोहाग्निस्त्रिष्टुप् । सूत्रम्प्रो० । कृणुष्व
पाजःप्रसितिंनपृथ्वीयाहिराजेवामवाँऽइभेन । तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः । तवभ्रमासऽआशुयापतंत्य
नुस्पृशधृषताशोशुचानः । तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः । प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअ
स्याअदब्धः । योनोदूरेऽअघशंसोयोऽअंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् । उदग्नेतिष्ठप्रत्यातनुष्वन्य१मित्राँऽओषतात्तिग्महेते ।
योनोऽअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कं । ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने । अवस्थिरात
नुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥१॥ सतेजानातिसुमतिंयविष्ठयऽईवतेब्रह्मणेगातुमैरत् । विश्वान्यस्मैसुदिनानिरा
योद्युम्नान्यर्योविदुरोऽअभिद्यौत् । सेदग्नेऽअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायऽउक्थैः । पिप्रीषतिस्वऽआयुषिदुरोणे

विश्वेदस्मैसुदिनासासदिष्टिः । अर्चामितेसुमतिंघोष्यर्वाक्संतेवावाताजरतामियंगीः । स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्रा
णिधारयेरनुद्यून् । इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् । क्रीळंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानां ।
यस्त्वास्वश्वःसुहिरण्योऽअग्नऽउपयातिवसुमतारथेन । तस्यत्राताभवसितस्यसखायस्तऽआतिथ्यमानुषग्जुजोषत् ॥२॥ महोरु
जामिबंधुतावचोभिस्तन्मापितुर्गोतमादन्वियाय । त्वंनोऽअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः । अस्वप्नजस्तरणयः
सुशेवाऽअतंद्रासोऽवृकाअश्रमिष्ठाः । तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूर । येपायवोमामतेयंतेऽअग्नेपश्यंतोऽअंधंदुरि
तादरक्षन् । ररक्षतान्त्सुकृतोविश्ववेदादिप्संतऽइद्रिपवोनाहदेभुः । त्वयावयंसधन्य१स्त्वोतास्तवप्रणीत्यश्यामवाजान् ।
उभाशंसासूदयसत्यतातेनुष्ठुयाकृणुह्यह्रयाण । अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय । दहाशसोरक्षसःपाह्य१
स्मान्द्रुहोनिदोमित्रमहोऽअवद्यात् ॥ १५ ॥ तरत्समंदीतिचतुर्णामवत्सारःपवमानःसोमोगायत्री । सूत्रप्रो० । ॐ तरत्सम
दीधावतिधारासुतस्यांधसः । तरत्समंदीधावति । उस्रावेदवसूनांमर्तस्यदेव्यवसः । तरत्स० । ध्वस्रयोःपुरुषंत्योरासहस्रा
णिदद्महे । तरत्स० । आययोस्त्रिंशतंतनासहस्राणिचदद्महे । तरत्सम० ॥ ४ ॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनाराय
णःपुरुषोनुष्टुवंत्यात्रिष्टुप् । सूत्रप्रो० । ॐ सहस्रशीर्षा० ॥ १६ ॥ विष्णोर्नुकमितिऋचस्यऔचथ्योदीर्घतमाविष्णुस्त्रि
ष्टुप् । सूत्रप्रो० । ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि । योऽअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधो
रुगायः । प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः । यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा । प्रवि

ष्णवेशूषमेतुमन्मगिरिक्षितऽउरुगायायवृष्णे । यऽइदंदीर्घंप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिः । यस्यत्रीपूर्णामधुना
पदान्यक्षीयमाणास्वधयामदंति । यऽउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा । तदस्यप्रियमभिपाथोअश्यांन
रोयत्रदेवयवोमदंति । उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सः । तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगा
ऽअयासः । अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ १ ॥ अतोदेवाइतिषळर्चस्यकाण्वोमेधातिथिर्विष्णुर्गायत्री ।
सूत्रप्रो० ॥ ॐ अतोदेवाऽअवंतुनोय० ॥ ६ ॥ परोमात्रयेतिसप्तर्चस्यमैत्रावरुणिर्वसिष्ठोविष्णुस्त्रिष्टुप् ॥ सूत्रप्रो० ॥ ॐ परो
मात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति । उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्से । नतेविष्णोजायमानोन
जातोदेवमहिम्नःपरमंतमाप । उदस्तभ्नानाकमृष्वंबृहंतंदाधर्थप्राचींककुभंपृथिव्याः । इरावतीधेनुमतीहिभूतंसूयवसिनीमनु
षेदशस्या । व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैः । उरुंयज्ञायचक्रथुरुलोकंजनयंतासूर्यमुषासमग्निम् ।
दासस्यचिद्वृषशिप्रस्यमायाजघ्नथुर्नरापृतनाज्येषु । इंद्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टं । शतंवर्चिनःसहस्रं
चसाकंहथोअप्रत्यसुरस्यवीरान् । इयंमनीषाबृहतीबृहंतोरुक्रमातवसावर्धयंती । ररेवांस्तोमंविदथेषुविष्णोपिन्वतमिषोवृजने
ष्विंद्र । वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं । वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानः ॥ ७ ॥
हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यानंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतु
र्थीबृहती पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभोंऽत्याप्रस्तारपंक्तिः ॥ सूत्रप्रो० ॥ ॐ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ।

चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह । तामआवहजातवेदोलक्ष्मीमनपगामिनीं । यस्यांहिरण्यंविंदेयंगामश्वंपुरुगानहम् ।
अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् । श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् । कांसोस्मितांहिरण्यप्राकारामार्द्राज्वलंतींतृ
प्तांतर्पयंतीम् । पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् । चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् । तांपद्मि
नींमींशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणे । आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः । तस्यफलानितपसा
नुदंतुमायांतरायाश्चबाह्याऽअलक्ष्मीः । उपैतुमांदेवसखःकीर्तिश्चमणिनासह । प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ।
क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं । अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् । गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ।
ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं । मनसःकाममाकूतिंवाचःसत्यमशीमहि । पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ।
कर्दमेनप्रजाभूतामयिसंभवकर्दम । श्रियंवासयमेकुलेमातरंपद्ममालिनीं । आपःस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे । निच
देवींमातरंश्रियंवासयमेकुले । आर्द्रांयःकरिणींयष्टिंसुवर्णांहेममालिनीं । सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह । आर्द्रांपु
ष्करिणींपुष्टिंपिंगलांपद्ममालिनीं । चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह । तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ।
यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहं । यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं । सूक्तंपंचदशर्चंचश्रीकामः
सततंजपेत् ॥ १६ ॥ ॐ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति । दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ।
येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषुधीराः । यदपूर्वंयक्षमंतःप्रजानांतन्मेम० । यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्यो

तिरंतरमृतंप्रजासु । यस्मान्नऽऋतेकिंचनकर्मक्रियतेतन्मे० । यनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं । येनयज्ञस्तायतेसप्तहोतातन्मे० । यस्मिन्नृचःसामयजूंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः । यस्मिंश्चित्तंसर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु । सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेभीशुभिर्वाजिनऽइव । हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मे०॥६॥विहिहोत्रेतिपंचर्चस्यवामदेवोगौतमोवायुरनुष्टुप् ॥ सूत्रप्रो० ॥ विहिहोत्राअवीताविपोनरायोअर्यः । वायवाचंद्रेणरथेनयाहिसुतस्यपीतये । निर्युवाणोअशस्तीर्नियुत्वाँइंद्रसारथिः । वायवाचंद्रे० ॥ अनुकृष्णेवसुधितीयेमातेविश्वपेशसा ॥ वायवाचंद्रे० ॥ वहंतुत्वामनोयुजोयुक्तासोनवतिर्नव । वायवा० ॥ वायोशतंहरीणांयुवस्वपोष्याणां । उतवातेसहस्रिणोरथआयातुपाजसा ॥५॥ मुंचामित्वेतिपंचर्चस्यप्राजापत्योयक्ष्मनाशनइंद्रस्त्रिष्टुबंत्यानुष्टुप् ॥ सूत्रप्रो०॥ मुंचामित्वाहविषाजीवनायकमज्ञातयक्ष्मादुतराजयक्ष्मात् । ग्राहिर्जग्राहयदिवैतदेनंतस्याइंद्राग्नीप्रमुमुक्तमेनम् । यदिक्षितायुर्यदिवापरेतोयदिमृत्योरंतिकंनीतएव । तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय । सहस्राक्षेणशतशारदेनशतायुषाहविषाहार्षमेनं । शतंयथेमंशरदोनयातींद्रोविश्वस्यदुरितस्यपारं । शतंजीवशरदोवर्धमानःशतंहेमंतान्छतमुवसंतान् । शतमिंद्राग्नीसविताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः । आहार्षंत्वाविदंत्वापुनरागाःपुनर्नव । सर्वांगसर्वंतेचक्षुःसर्वमायुश्चतेविदं ॥५॥ स्योनापृथिवीमेधातिथिर्भूमिर्गायत्री ॥ सूत्रप्रोक्ष० ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः ॥ द्रविणोदाआंगिरसःकुत्सोद्रविणोदाअग्निस्त्रिष्टुप् ॥ सूत्रप्रो० ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् । द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदी

र्घमायुः । सवितापश्चाताद्धानाकोलुशोविश्वेदेवाजगती ॥ सूत्रप्रोक्ष० ॥ ॐ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्स
विताधरात्तात् । सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः । नवोनवोभवतिसूर्यासावित्रीचंद्रमास्त्रिष्टुप् ॥
सूत्रप्रो० ॥ ॐ नवोनवोभवतिजायमानोह्नांकेतुरुपसामेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः । विद्युन्न
यापतंतीतिपुरुरवाउर्वशीत्रिष्टुप् ॥ सूत्रप्रो० ॥ ॐ विद्युन्नयापतंतीदविद्योद्भरंतीमेऽअप्याकाम्यानि । जनिष्ठोअपोनर्यस्सुजातः
प्रोर्वशींतिरतदीर्घमायुः । उलूकयातुंवसिष्ठइंद्रस्त्रिष्टुप् ॥ सूत्रप्रो० ॥ ॐ उलूकयातुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं ।
सुपर्णयातुमुतगृध्रयातुंदृषदेवप्रमृणरक्षइंद्र ॥ पिशंगभृष्टिंदैवोदासिःपुरूरवाइंद्रोगायत्री ॥ सूत्रप्रो० ॥ ॐ पिशंगभृष्टिमंभृणं
पिशाचिमिंद्रसंमृण । सर्वरक्षोनिवर्हय । एतैःसर्वैर्मंत्रैःसूत्रमभिषिच्य । जातवेदसेमारीचःकश्यपोजातवेदाअग्निस्त्रिष्टुप् ।
ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः । इतिगंधेनसूत्रंवि
लिप्य । विश्वेत्तातेभार्गवोनेमइंद्रोजगती । ॐ विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते । पारावतंयत्पुरुसंभृतं
वस्वपावृणोःशरभायऋषिवंधवे । इत्यनेनपुंसोदक्षिणहस्तेवध्नीयात् । श्रियेजातःकाण्वःपवमानःसोमस्त्रिष्टुप् । ॐ श्रियेजा
तःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति । श्रियंवसानाऽअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ । इतिस्त्रियावामह
स्तेवध्नीयात् । ततआचार्यऋत्विजश्चयजमानस्यमंत्रैरक्षांकुर्युः ॥ तेचमंत्राः ॥ शतंजीवेतिद्वयोःप्राजापत्योयक्ष्मनाशनइंद्र
स्त्रिष्टुप् अंत्यानुष्टुप् । ॐ शतंजीवशरदोवर्धमानःशतंहेमंतान्छतमुवसंतान् । शतमिंद्राग्नीसविताबृहस्पतिःशतायुषाह

विषेमंपुनर्दुः । आहार्पत्वाविंदंत्वापुनरागाः पुनर्नव । सर्वांगसर्वंतेचक्षुःसर्वमायुश्चतेविदम् ॥ येयज्ञेनेत्यष्टर्चस्यसूक्तस्यमानवो नाभानेदिष्ठोविश्वेदेवाआद्याश्चतस्रोजगत्यः पंचम्यनुष्टुप् षष्ठीबृहती सप्तमीसतोबृहत्यष्टम्यनुष्टुप् । ॐ येयज्ञेनदाक्षिणयासमं क्ताइंद्रस्यसख्यममृतत्वमानश । तेभ्योभद्रमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः । यउदाजन्पितरोगोमयंवस्वृतेना भिंदन्परिवत्सरेवलम् । दीर्घायुत्वमंगिरसोवो० । यऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि । सुप्रजास्त्वमंगिरसो० । अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन । सुब्रह्मण्यमंगिरसो० । विरूपासइदृषयस्तइद्गंभीरवेपसः । तेअंगि रसःसूनवस्तेअग्नेःपरिजज्ञिरे ॥ १ ॥ येअग्नेःपरिजज्ञिरेविरूपासोदिवस्परि । नवग्वोनुदशग्वोअंगिरस्तमःसचादेवेषुमंहते । इंद्रेणयुजानिःसृजंतवाघतोव्रजंगोमंतमश्विनं । सहस्रंमेददतोअष्टकर्ण्यः श्रवोदेवेष्वक्रत । प्रनूनंजायतामयंमनुस्तोकमेवरो हतु । यःसहस्रंशताश्वंसद्योदानायमंहते ॥ ८ ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् । ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् । उर्वारु कमिवबंधनान्मृत्योर्मुक्षीयमामृतात् । एतैर्मंत्रैरक्षायांकृतायांयजमानःकृतकर्मसाद्गुण्यार्थमाचार्यायर्त्विग्भ्यश्चयथाशक्तिद क्षिणांदद्यात् अन्येभ्योपिभूयसींदक्षिणांदद्यादिति ॥ इतिश्रीमद्भट्टरामेश्वरसुतनारायणभट्टकृतेप्रयोगरत्नेकौतुकबंधप्रयोगः ॥ अथग्रहयज्ञः ॥ सचनित्यनैमित्तिककाम्यभेदेनत्रेधा। अयनविषुवोपरागादिपुनित्यः। गर्भाधानादिकर्मप्रारंभेपुनैमित्तिकः। विपदपगमसंपदादिकामनासुकाम्यः । अत्रमूलान्याकरतोज्ञेयानि । ग्रहरूपादिज्ञात्वाकर्मकार्यमन्यथाविफलम् । तदाहा श्वलायनाचार्यः—रूपवर्णायुधस्थानमंडलासनवाहनान् । समित्कुंडोपहारांश्चपुष्परत्नाकृतीरपि । गायत्रीमूलमंत्रांश्चना

ममंत्राश्चकेवलान् । अधिप्रत्यधिदेवानांमंत्रांश्चर्ष्यादिसंयुतान् । तत्तन्मूर्तींश्चजानीयाद्धोष्यन्नर्चन्नवग्रहान् । अज्ञात्वैवपुमा निष्ठातत्फलंनैवविंदति । दुःखंचाप्नोतिसुमहद्यत्नादिष्ट्वाप्यवित्पुमानिति । गायत्रीग्रहगायत्री साप्रयोगेवक्ष्यते । वर्णादयश्च मंडपकुंडादिचकाम्येयथोक्तंकार्यम् । नित्यनैमित्तिकयोस्त्वनित्यम् । नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपमितिमात्स्योक्तेः । कुंडेवास्थंडिलेपिवेतिआचार्योक्तेश्च ॥ ॥ मंडपलक्षणंहेमाद्रौमत्स्यपुराणे—गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः । रुद्रायत नभूमौवाचतुरस्रमुदक्प्लवम् । दशहस्तानथाष्टौवाहस्तान्कुर्याद्विधानतः । तस्यद्वाराणिचत्वारिकर्तव्यानिविचक्षणैः ॥ ॥ कुंडंचस्कंदपुराणे—नवग्रहमखेकुंडंहस्तमात्रंसमंततः । चतुरस्रमधोहस्तंयोनिवक्रंसमेखलम् । चतुरंगुलविस्तारामेखलात द्वदुच्छ्रिता ॥ मात्स्ये—वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलिविस्तृता । कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता । गजो ष्ठसदृशीतद्वदायताछिद्रसंयुता । मेखलोपरिसर्वत्रअश्वत्थदलसंनिभा । गजोष्ठतुल्याश्वत्थदलतुल्यावेतिविकल्पः । साच योनिःपश्चिमतःकार्या । पश्चिमेमध्यभागेतुयोनिंकुर्याद्विधानतइतिगर्गोक्तेः ॥ मात्स्ये—मानहीनाधिकंकुंडमनेकभयदं भवेत् । तस्यचोत्तरपूर्वेतुस्थंडिलंहस्तमात्रकम् । त्रिवप्रंचतुरस्रंचवितस्त्युच्छ्रायसंमितम् । स्थंडिलंवेदिः । वप्रामेखलाः । द्व्यंगुलोच्छ्रितोवप्रःप्रथमःसमुदाहृतः । अंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि । द्व्यंगुलस्तत्रविस्तारःसर्वेषांकथितोबुधैरिति । अन्यत्सर्ववर्णदेशनामादिप्रयोगेस्पष्टीभविष्यति ॥ ॥ अथग्रहयज्ञप्रयोगः ॥ यजमानःस्नात्वानित्यकर्मनिर्वर्त्यमौहूर्ति

१ अयमाश्वलायनगृह्यपरिशिष्टोक्तोग्रहमख.स्मार्ताग्निमतामाश्वलायनानामेवविहितोनेतरेषाम् ।

कोक्तेशुभेकालेदेशकालौसंकीर्त्यअयनादिनित्यकालेपुसंकल्पयेत् । ग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्य इति । गर्भाधानादिनिमित्तेषुअमुककर्मकर्तुमादावादित्यादिग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्य विपदपगमादिकामनायांतुअमुककामनासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइति । त्यनैमित्तिकयोःप्रतिपदोक्तवस्तूनितदभावेऽनुकल्परूपाणिवायथाशक्तिसंपादयेत् । काम्येतुप्रतिनिध्यभावात्प्रतिपदोक्तव स्तून्येव । ततआचार्यादिवरणम् । तत्रविधिज्ञंस्वशाखाविदंसाचारमेकंअस्मिन्ग्रहमखेत्वमाचार्यकंकुर्विंतिपाणिनातत्पाणि मुपस्पृश्य । आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः । तथात्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रतेतिवृणुयात् । अन्यानप्यार्त्विज्यं कुर्विंतिप्रत्येकंवृणुयात् । तेचहोमानुसारेणचत्वारोष्टौपोडशवा । तेचकारिष्यामीत्युक्त्वाआचामेयुः । ततोयजमानस्तान्य थाशक्त्यर्चयेत् । ततआचार्यःकर्मसंकल्पपूर्वकंगृहादुत्तरतऐशानेवाकृतायांचतुर्दिक्षुहस्तमात्रावरायांचतुस्त्रिद्व्यंगुलप्रमाण त्रिभूमिकायांग्रहवेद्यांशुक्लव्रीहितंडुलैःसकर्णिकमष्टदलमंबुजमुल्लिख्यकर्णिकायांदलेषुचवर्तुलादिग्रहपीठानितत्तद्वर्णकाक्षतैर्य थोपपन्नैर्वाकुर्यात् । तानीत्थं । मध्येरक्ताक्षतैर्वर्तुलं । आग्नेयदलेशुक्लाक्षतैश्चतुरस्रं । दक्षिणदलेरक्ताक्षतैस्त्रिकोणं । ईशानदले हरिताक्षतैर्बाणाकारं । उत्तरदलेपीताक्षतैर्दीर्घचतुरस्रं । पूर्वदलेशुक्लाक्षतैःपंचकोणं । पश्चिमदलेकृष्णाक्षतैश्चापाकारं । नैर्ऋ त्यदलेकृष्णाक्षतैःशूर्पाकारं । वायव्यदलेचित्राक्षतैर्ध्वजाकारमिति । ततउदीच्यांरंगवल्लिकारंजितपद्मोपरिमहीद्यौःकाण्वो

१ त्वमाचार्यकंकुर्वित्येववरणेसिद्धेस्वस्याचार्यादीनामपिगोत्रोच्चारपूर्वकमेतत्कुर्वंतिसांप्रदायविदः । तद्विस्तरस्त्वन्यत्रज्ञेय. ।

मेधातिथिर्भूमिर्गायत्री । ॐ महीद्यौःपृथिवीचनइमंयज्ञंमिक्षतां । पिपृतांनोभरीमभिः । इतिभूमिंस्पृष्ट्वा । ओषधयइत्य
स्याथर्वणोभिषगोषधयोनुष्टुप् । ॐ ओषधयःसंवदंतेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि । इतिव्रीही
नोप्य । आकलशेष्वित्यस्यकाश्यपोदेवलःपवमानःसोमोगायत्री । ॐ आकुलशेषुधावतिपवित्रेपरिषिच्यते । उक्थैर्यज्ञेषु
वर्धते । इतिधृतधान्यपीठेनवमव्रणमकालकंतैजसंमृन्मयंवानुलिप्तमलंकृतंशुभमभिषेककुंभंनिधाय । इमंमेगंगइत्यस्यसिंधु
क्षित्प्रैयमेधोनदीस्तुतिर्जगती । ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या । असिक्न्यामरुद्वृधेवितस्तयार्जीकीये
शृणुह्यासुषोमया । अनेनपुण्यजलेनपूरयित्वा नवसूत्रेणवस्त्रयुग्मेनवावेष्ट्यहयगजवल्मीकह्रदगोष्ठराजद्वारचतुष्पथमृदः
उद्धृतासिवराहेणकृष्णेनशतबाहुना। मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं । इतिकुंभेनिक्षिप्य। रुवतिभीमइत्यस्यवैश्वामित्रोरे
णुःपवमानःसोमोजगती। ॐ रुवतिभीमोवृषभस्तविष्ययाशृंगेशिशानोहरिणीविचक्षणः। आयोनिंसोमःसुकृतंनिषीदतिगव्य
यीत्वग्भवतिनिर्णिग्व्ययी। अनेनन्यग्रोधाश्वत्थप्लक्षजंबूचूतवृक्षत्वचः। प्रवोयज्ञेष्वित्यस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् । ॐ प्रवो
यज्ञेषुदेवयंतोअर्चन्द्यावानमोभिःपृथिवीइषध्यै । येषांब्रह्माण्यसमानिविप्राविष्वग्वियंतिवनिनोनशाखाः । अनेनतेषांपल्ल
वान्निक्षिप्य । आप्यायस्वेत्यस्यराहूगणोगोतमःसोमोगायत्री । ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसं
गथे । अनेनगोक्षीरं । दधिक्राव्णइत्यस्यगोतमोवामदेवोदधिक्रावानुष्टुप् । ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ।
सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् । अनेनदधि। ॐ शुक्रमसिज्योतिरसितेजोसि। इतिघृतं। गंधद्वारामित्यस्यानंदकर्दम

चिक्लीतेंदिरासुताःश्रीरनुष्टुप् । ॐ गंधद्वारांदुराधर्षानित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं । अनेन
गोमयम् । गायत्र्याविश्वामित्रःसवितागायत्री । ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् । अनया
गोमूत्रंचनिक्षिप्य । सहिरत्नानीत्यस्यश्यावाश्वःसवितागायत्री । ॐ सहिरत्नानिदाशुषेसुवातिसविताभर्गः । तंभागंचित्रमी
महे । अनेननवरत्नानि ( हीरकमौक्तिकपद्मरागनीलमरकतगोमेदपुष्परागवैदूर्यप्रवालाख्यानि ) । याओषधीरित्यस्याथर्व
णोभिषगोपधयोनुष्टुप् । ॐ याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुबभ्रूणामहंशतंधामानिसप्तच । अनेनशतौषधानि
तदभावेदशमूलानितदभावेसुवर्णवा । ॐ गंधद्वारांदुराधर्षानित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियमि
तिगंधंनिक्षिप्य । ॐ कांडात्कांडात्प्ररोहंतीपरुषःपरुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनचेतिदूर्वाः । ॐ याःफलिनीर्या
अफलाअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः । इतिफलं । ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत । वस्नेव
विक्रीणावहाइषमूर्जंशतक्रतोइतिपूर्णपात्रम् । सर्वेसमुद्राः० । गंगेचयमुनेचेति० । ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमं
सचतापरुष्ण्या । असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमयाइत्येतैर्मंत्रैः । आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषः
सिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौ । ॐ आपोहिष्ठामयोभुवः० ॥ ९॥ अनेनसूक्तेनउदकुंभं
पूरयेत् । नहितेक्षत्रमित्याद्येकविंशत्यृचामाजीगर्तिःशुनःशेपोवरुणआद्यादशत्रिष्टुभःशिष्टागायत्र्यःआभिः । ॐ नहितेक्षत्रं
नसहोनमन्युंवयश्चनामीपतयंतऽआपुः । नेमाऽअपोऽअनिमिषंचरंतीर्नयेवातस्यप्रमिनंत्यभ्वं । अबुध्नेराजावरुणोवनस्योर्ध्वं

स्तूपंददतेपूतदक्षः। नीचीनाःस्थुरुपरिबुध्नएषामस्मेऽअंतर्निहिताःकेतवःस्युः। उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ। अपदेपादाप्रतिधातवेऽकरुतापवक्ताहृदयाविधश्चित्। शतंतेराजन्भिषजःसहस्रमुर्वीगंभीरासुमतिष्टेऽअस्तु । बाधस्वदूरेनिर्ऋतिंपराचैःकृतंचिदेनःप्रमुमुग्ध्यस्मत्। अमीयऋक्षानिहितासउच्चानक्तंददृश्रेकुहचिद्दिवेयुः । अदब्धानिवरुणस्यव्रतानिविचाकशच्चंद्रमानक्तमेति। तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः। अहेळमानोवरुणेहबोध्युरुशंसमानऽआयुःप्रमोषीः। तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदऽआविचष्टे । शुनःशेपोयमह्वद्गृभीतःसोऽअस्मान्राजावरुणोमुमोक्तु। शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः । अवैनंराजावरुणःससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान्। अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः। क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि । उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय। अथावयमादित्यव्रतेतवानागसोऽअदितयेस्याम। यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं। मिनीमसिद्यविद्यवि। मानोवधायहत्नवेजिहीळानस्यरीरधः। माहृणानस्यमन्यवे। विमृळीकायतेमनोरथीरश्वंनसंदितं। गीर्भिर्वरुणसीमहि । पराहिमेविमन्यवःपतंतिवस्यइष्टये । वयोनवसतीरुप । कदाक्षत्रश्रियंनरमावरुणंकरामहे । मृळीकायोरुचक्षसं। तदित्समानमाशातेवेनंतानप्रयुच्छतः। धृतव्रतायदाशुषे। वेदायोवीनांपदमंतरिक्षेणपततां। वेदनावःसमुद्रियः। वेदमासोधृतव्रतोद्वादशप्रजावतः। वेदायउपजायते। वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः। वेदायेऽअध्यासते । निषसादधृतव्रतोवरुणःपस्त्या३स्वा । साम्राज्यायसुक्रतुः। स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाःपवमानःसोमोगायत्री । ॐस्वादिष्ठयामदिष्ठयापवस्वसोमधारया। इंद्राय

पार्तवेसुतः । रक्षोहाविश्वचर्षणिरभियोनिमयोंहतं । द्रुणासधस्थमासदत् । वरिवोधातमोभवमंहिष्ठोवृत्रहंतमः । पर्षिराधो मघोनां । अभ्यर्षमहानांदेवानांवीतिमंधसा । अभिवाजमुतश्रवः । त्वामच्छाचरामसितदिदर्थंदिवेदिवे । इंद्रोत्वेनंऽआ शसः ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता । वारेणशश्वतातना । तमीमण्वीःसमर्यऽआगृभ्णंतियोषणोदश । स्वसारःपा र्येदिवि । तमींहिन्वंत्यग्रुवोधमंतिबाकुरंदृतिं । त्रिधातुवारणंमधु । अभीइममघ्न्याऽउतश्रीणंतिधेनवःशिशुं । सोममिंद्राय पातवे । अस्येदिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते । शूरोमघाचमंहते ॥ २ ॥ अनेनसूक्तेनचतंकुंभमभिमंत्रयेत् । यद्वाकलशाभि मंत्रणेऽन्यंमंत्रविदंयुंजीत । ततःकर्मसंकल्प्यविधिवत्स्वस्तिवाचनंकृत्वाग्रहवेदिपद्मपीठेयथास्थानंयथामुखींग्रहप्रतिमांस्था पयित्वातद्दक्षिणवामपार्श्वयोरधिदेवताप्रत्यधिदेवतेतदभिमुख्यौस्थापयेत् । तदभावेपुष्पाक्षतादिष्वावाहयेत् । तत्रायंप्र कारः । व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतयऋषयः अग्निवायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुब्बृहत्य श्छंदांसिआदित्याद्यावाहनेवि० । ॐ भूरादित्यमावाहयामि । ॐ भुवआदित्यमा० । ॐ स्वरादित्यमा० । ॐ भूर्भुवःस्व रादित्यमा० । आकृष्णेनेत्यस्यहिरण्यस्तूपःसवितात्रिष्टुप् । आदित्यावाहनेविनियोगः । ॐ आकृष्णेनरजसावर्तमानोनिवे

---

१ पृथ्वीवद्रोदयेवर्णरूपगुणैर्युक्तान्व्याहृत्यावाहयेत्तुतानिति । कौर्मे—मंत्रेणावाहनकुर्यान्मत्रेणैवविसर्जनमिति । मत्रेणव्याहृतिभिरावाह नेविकल्प. । मदनरत्नस्तुआवाहनस्थापनयोर्भेदाद्व्याहृतिभिरावाहनंएतैर्मंत्रै·स्थापनमितितदाएवप्रयोग ॐ भूरादित्यमावाहयामिभुवआ० स्वरा० भूर्भुव० आकृष्णेन० आदित्यायनम.आदित्यंस्थापयामि । भट्टैरप्येवमितिप्रतापनारसिंहेसस्कारकाडे ।

शयन्नमृतंमर्त्यंच । हिरण्ययेनसविताथेनादेवोयातिभुवनानिपश्यन् । इत्यृचमुच्चार्य । भगवन्नादित्यग्रहाधिपतेकाश्य
पगोत्रकलिंगदेशेश्वरजपापुष्पोपमांगद्युतेद्विभुजपद्माभयहस्तासिंदूरवर्णांबरमाल्यानुलेपनज्वलन्माणिक्यखचितसर्वांगाभरण
भास्करतेजोनिधेत्रिलोकप्रकाशकत्रिदेवतामयमूर्तेनमस्तेसन्नद्धारुणध्वजपताकोपशोभितेनसप्ताश्वरथवानेनमेरुंप्रदक्षिणीकु
र्वन्नागच्छाग्निरुद्राभ्यांसहपद्मकर्णिकायांताम्रप्रतिमांप्राङ्मुखींवर्तुलपीठेधितिष्ठपूजार्थत्वामावाहयामीत्यादित्यमावाहयेत् ।
तद्दक्षिणपार्श्वे । ॐ भूरादित्याधिदेवतामग्निमावाहयामि । ॐ भुवआदित्याधिदेवतामग्निमा० । ॐ स्वरादित्याधिदेव
तामग्नि० । ॐ भूर्भुवःस्वरादित्याधिदेवतामग्निमा० । अग्निंदूतमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री । अग्न्यावाहनेवि० ।
ॐ अग्निंदूतवृणीमहेहोतारंविश्ववेदसं । अस्ययज्ञस्यसुक्रतुं । इमंमंत्रमुच्चार्य पिंगभ्रूश्मश्रुकेशंपिंगाक्षंत्रिनयनमरुणवर्णंछाग
स्थंसाक्षसूत्रं सप्तार्चिषंशक्तिधरंवरदहस्तद्वयमादित्याधिदेवतामग्निमावाहयामि । तद्वामपार्श्वे । ॐ भूरादित्यप्रत्यधिदेवतां
रुद्रमावा० । ॐ भुवआदित्यप्रत्यधिदेवतांरुद्रमावा० । ॐ स्वरादित्य० रुद्रं० । ॐ भूर्भुवःस्वरादित्य० । त्र्यंबकमित्यस्यव
सिष्ठोरुद्रोनुष्टुप् । रुद्रावाहनेविनि० । ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ।
इमंमंत्रमुच्चार्य त्रिलोचनंपंचवक्त्रंवृषारूढंकपालशूलखट्वांगधारिणंचंद्रमौलिनंसदाशिवमादित्यप्रत्यधिदेवतांरुद्रमा० । तद्द
क्षिणपूर्वदले ॐ भूःसोममा० ॐ भुवःसोम० । ॐ स्वःसोममा० । ॐ भूर्भुवःस्वःसोम० । आप्यायस्वेत्यस्यगौतमःसोमोगा
यत्री । सोमावाहनेविनि० । ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे । इमंमंत्रमुच्चार्य भगवन्सोम

द्विजाधिपतेसुधामयशरीरात्रिगोत्रयमुनादेशेश्वरगोक्षीरधवलांगकांतेद्विभुजगदावरदानांकितशुक्लांबरमाल्यानुलेपनसर्वांगा
मुक्तमौक्तिकाभरणरमणीयसमस्तलोकाप्यायकदेवतास्वाद्यमूर्तेनमस्तेसंनद्धधवलध्वजपताकोपशोभितेनदशश्वेताश्वरथवाह
नेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाद्भिरुमयाचसहपद्माग्नेयदलमध्येस्फटिकप्रतिमांप्रत्यङ्मुखींचतुरस्रपीठेधितिष्ठपूजार्थंत्वामावाह
यामि । तद्दक्षिणपार्श्वेपूर्ववद्व्यस्तसमस्तव्याहृत्युच्चारणानंतरं । अप्सुमइत्यस्यसिंधुद्वीपआपोगायत्री । अबावाहनेविनि० ।
ॐ अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा । अग्निंचविश्वशंभुवं । इमंमंत्रमुच्चार्य स्त्रीरूपधारिणीःश्वेतवर्णामकरवाहनाः
पाशकलशधारिणीर्मुक्ताभरणभूषिताःसोमाधिदेवताअपआवाहयामि । तद्वामपार्श्वेव्यस्तसमस्तव्याहृत्युच्चारणानंतरं । गौरी
र्मिमायेत्यस्यदीर्घतमाउमाजगती । उमावाहनेवि० । ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी । अष्टाप
दीनवपदीवभूवुषीसहस्राक्षरापरमेव्योमन् । इमंमंत्रमुच्चार्यअक्षसूत्रकमलदर्पणकमंडलुधारिणींत्रिदशपूजितांसोमप्रत्यधिदे
वतामुमामावा० । दक्षिणदलेपूर्ववत्प्रणवव्याहृत्युच्चारणानंतरं । अग्निर्मूर्धेत्यस्यविरूपोंगारकोगायत्री । अंगारकावाह
नेवि० । ॐ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं । अपांरेतांसिजिन्वति । इमंमंत्रमुच्चार्य भगवन्नंगारकाग्न्याकृतेभारद्वा
जगोत्रावंतिदेशेश्वरज्वालापुंजोपमांगद्युतेचतुर्भुजशक्तिशूलगदाखट्वांगधारिन्रक्तांबरमाल्यानुलेपनप्रवालाभरणभूषितसर्वा
गदुरालोकदीप्तेनमस्तेसन्नद्धरक्तध्वजपताकोपशोभितेनरक्तमेषरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छभूमिस्कंदाभ्यांसहपद्मद
क्षिणदलमध्येरक्तचंदनप्रतिमांदक्षिणामुखींत्रिकोणपीठेधितिष्ठपूजार्थंत्वामावा० । तद्दक्षिणपार्श्वेव्याहृत्युच्चारणानंतरं ।

स्योनापृथिवीत्यस्यमेधातिथिःपृथिवीगायत्री । भूम्यावाहनेवि० । ॐ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । इमंमंत्रमुच्चार्य शुक्लवर्णादिव्याभरणभूषितांचतुर्भुजांसौम्यवपुषंचंद्रांशुसदृशांबरांरत्नपात्रसस्यपात्रौषधिपात्रपद्मोपेतकरांचतुर्दिङ्नागपृष्ठगतामंगारकाधिदेवतांभूमिमावाहयामि । तद्वामपार्श्वेव्याहृत्युच्चारणानंतरं । कुमारश्चित्पितरमित्यस्यगृत्समदःस्कंदस्त्रिष्टुप् । स्कंदावाहनेवि० । ॐ कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयतं । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे । इमंमंत्रमुच्चार्य षण्मुखंशिखंडकविभूषितंरक्तांबरधरंमयूरवाहनंकुक्कुटघंटापताकाशक्त्युपेतंचतुर्भुजमंगारकप्रत्यधिदेवतांस्कंदमावाहयामि । ततःप्रागुत्तरदलेपूर्ववद्व्याहृत्युच्चारणानंतरं । उद्बुध्यध्वमित्यस्यबुधःसौम्यस्त्रिष्टुप् । बुधावाहनेविनि० । ॐ उद्बुध्यध्वंसमनसःसखायःसमग्निमिंध्वंबहवःसनीळाः । दधिक्रामग्निमुषसंचदेवीमिंद्रावतोवसेनिह्वयेवः । इमंमंत्रमुच्चार्य भगवन्सौम्यसौम्याकृतेसर्वज्ञानमयात्रिगोत्रमगधदेशेश्वरकुंकुमवर्णागद्युतेचतुर्भुजखड्गखेटकगदावरदानांकितपीतांबरमाल्यानुलेपनमरकताभरणालंकृतसर्वांगविबुधपतेनमस्तेसंनद्धपीतध्वजपताकोपशोभितेनचतुःसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छविष्णुपुरुषाभ्यांसहपद्मेशानदलमध्येसुवर्णप्रतिमामुदङ्मुखींबाणाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि । ततस्तत्पार्श्वयोरधिप्रत्यधिदेवतयोरावाहनं । व्याहृतीरुक्त्वा । इदंविष्णुरित्यस्यमेधातिथिर्विष्णुर्गायत्री । सहस्रशीर्षेत्यस्यनारायणःपुरुषोनुष्टुप् । विष्णुपुरुषावाहनेवि० । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूढमस्यपांसुरे । ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं । इमौमंत्रावुच्चार्य कौमोदकीपद्मशंखच

क्रोपेतांचतुर्भुजांसौम्याधिदेवतांविष्णुमावाहयामि । प्रत्यधिदेवतांपुरुषमावाहयामि । तदुत्तरदलेपूर्ववद्व्याहृत्यनंतरं ।
बृहस्पतइत्यस्यगृत्समदोबृहस्पतिस्त्रिष्टुप् । बृहस्पत्यावाहनेवि० । ॐ बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ।
यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं । इमंमंत्रमुच्चार्य भगवन्बृहस्पतेसमस्तदेवताचार्यांगिरसगोत्रसिंधुदे
शेश्वरदीप्तसुवर्णसदृशांगदीप्तचतुर्भुजदंडकमंडलवक्षसूत्रवरदानांकितपीतांबरमाल्यानुलेपनपुष्परागमयाभरणरमणीयसमस्त
विद्याधिपतेनमस्तेसन्नद्धपीतध्वजपताकोपशोभितेनपीताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छेंद्रब्रह्मभ्यांसहपद्मोत्तरदलम
ध्येसुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्रपीठेधितिष्ठपूजार्थत्वामावाहयामि । तद्दक्षिणपार्श्वेव्याहृत्युच्चारणानंतरं । इंद्रश्रेष्ठानी
त्यस्यगृत्समदइंद्रस्त्रिष्टुप् । इंद्रावाहनेवि० । ॐ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे । पोषंरयीणामरिष्टिंत
नूनांस्वाद्मानंवाचःसुदिनत्वमह्नाम् । इमंमंत्रमुच्चार्य चतुर्दंतगजारूढंवज्रांकुशधरंप्राचीपतिंनानाभरणभूषितंबृहस्पत्यधिदेव
तामिंद्रमावाहयामि । वामपार्श्वेव्याहृत्युच्चारणानंतरं । ब्रह्मणातेब्रह्मयुजेत्यस्यविश्वामित्रोब्रह्मात्रिष्टुप् । ब्रह्मावाहनेवि
नियो० । ॐ ब्रह्मणातेब्रह्मयुजायुनज्मिहरीसखायासधमादआशू । स्थिरंरथंसुखमिंद्राधितिष्ठन्प्रजानन्विद्वाँउपयाहिसोमं ।
इमंमंत्रमुच्चार्य पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधारिणंकृष्णाजिनवाससंपार्श्वस्थितहंसंबृहस्पतिप्रत्यधि
देवंब्रह्माणमावाहयामि । प्राग्दलेपूर्ववद्व्याहृत्यनंतरं शुक्रंतेअन्यदित्यस्यभरद्वाजःशुक्रस्त्रिष्टुप् । शुक्रावाहनेवि० । ॐ शुक्रं
तेऽअन्यद्यजतंतेऽअन्यद्विषुरूपेऽअहनीद्यौरिवासि । विश्वाहिमायाऽअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु । इमंमंत्रमु

च्चार्य । भगवन्भार्गवसमस्तदैत्यगुरोभार्गवगोत्रभोजकटदेशेश्वररजतोज्वलांगकांतेचतुर्भुजदंडकमंडल्वक्षसूत्रवरदानांकित शुक्लांबरमाल्यानुलेपनवस्त्राभरणभूषितसर्वांगसमस्तनीतिशास्त्रनिपुणमतेनमस्तेसंनद्धशुक्लध्वजपताकोपशोभितेनशुक्लाश्वसहितेनरथेनमेरुंप्रदक्षिणीकुर्वन्नागच्छेंद्राणींद्राभ्यांसहपद्मपूर्वदलमध्येरजतप्रतिमांप्राङ्मुखींपंचकोणपीठेधितिष्ठपूजार्थंत्वामावाहयामि । तद्दक्षिणपार्श्वेव्याहृत्युच्चारणानंतरं । इंद्राणीमास्वित्यस्यवृषाकपिरिंद्राणीपंक्तिः । इंद्राण्यावाहनेविनि० । ॐ इंद्राणीमासुनारिषुसुभगामहमश्रवं । नह्यस्याअपरंचनजरसामरतेपतिर्विश्वस्मादिंद्रउत्तरः । इमंमंत्रमुच्चार्य संतानमंजरीवरदानद्विभुजांशुक्राधिदेवतामिंद्राणीमावाहयामि । वामपार्श्वेपूर्व०तरं । इंद्रमिद्देवतातयइत्यस्यमेधातिथिरिंद्रःप्रगाथोबृहती । इंद्रावाहनेवि० । ॐ इंद्रमिद्देवतातयइंद्रंप्रयत्यध्वरे । इंद्रंसमीकेवनिनोहवामहइंद्रंधनस्यसातये । इमंमंत्रमुच्चार्यचतुर्दंतगजारूढंवज्रांकुशधरंप्राचीपतिंनानाभरणभूषितंभार्गवप्रत्यधिदेवतामिंद्रमावाहयामि । पश्चिमदलेपूर्ववद्व्याहृत्यनंतरं । शमग्निरिरिंविठिःशनैश्चरउष्णिक् । शनैश्चरावाहनेविनि० । ॐ शमग्निरग्निभिःकरच्छंनस्तपतुसूर्यः । शंवातोवात्वरपाऽअपस्रिधः । इमंमंत्रमुच्चार्ध भगवन्छनैश्चरभास्करतनयकाश्यपगोत्रसौराष्ट्रदेशेश्वरकज्जलनीलांगकांतेचतुर्भुजचापतूणीरकृपाणाभयांकितनीलांबरमाल्यानुलेपननीलरत्नभूषणालंकृतसर्वांगसमस्तभुवनभीषणामर्षमूर्तेनमस्तेसंनद्धनीलध्वजपताकोपशोभितेननीलगृध्ररथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छप्रजापतियमाभ्यांसहपद्मपश्चिमदलमध्येकालायसप्रतिमांप्रत्यङ्मुखींचापाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि । तद्दक्षिणपार्श्वेपूर्ववद्व्याहृत्यनंतरं । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । प्रजापत्या

वाहनेवि० । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयंस्यामपतयोरयीणां ।
इमंमंत्रमुच्चार्ययज्ञोपवीतिनंहंसस्थमेकवक्त्रमक्षमालास्रुवपुस्तककमंडलुसहितंचतुर्भुजंगनैश्चराधिदेवतांप्रजापतिमावाहयामि ।
वामपार्श्वेपूर्वव० नंतरं । यमायसोममित्यस्ययमोयमोनुष्टुप् । यमावाहनेविनि० । ॐ यमायसोमंसुनुतयमायजुहुताहविः ।
यमंहयज्ञोगच्छत्यग्निर्दूतोअरंकृतः । इमंमंत्रमुच्चार्य । ईषत्पीनंदंडहस्तंरक्तदृशंपाशधरंकृष्णवर्णंमहिषारूढंसर्वाभरणभूपितं
शनैश्चरप्रत्यधिदैवतंयममावाहयामि । प्रत्यग्दक्षिणदलाग्रेपूर्वं० नंतरं । कयानोवामदेवोराहुर्गायत्री राह्वावाहनेवि० ।
ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिंष्ठयावृता । इमंमंत्रमुच्चार्य । भगवन्राहोरविसोममर्दनसिंहिकानंदनपै
ठीनसगोत्रवर्बरदेशेश्वरकालमेघद्युतेव्याघ्रवदनचतुर्भुजखड्गचर्मशूलवरदानांकितकृष्णांवरमाल्यानुलेपनगोमेदकाभरणभूपि
तसर्वांगशौर्यनिधेनमस्तेसन्नद्धकृष्णध्वजपताकोपशोभितेनकृष्णसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छसर्पकालाभ्यांसहप
श्चनैर्ऋत्यदलमध्येसीसकप्रतिमांदक्षिणामुखींशूर्पाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि । तद्दक्षिणपार्श्वेपूर्ववद्व्याहृतीरुच्चार्य ।
आयंगौःसार्पराज्ञीसर्पागायत्री । सर्पावाहनेवि० । ॐ आयंगौःपृश्निरक्रमीदसंदन्मातरंपुरः । पितरंचप्रयन्त्स्वः । इमंमंत्र
मुक्त्वा । अक्षसूत्रधरान्कुंडिकाकारपुच्छयुक्तानेकभोगांस्त्रिभोगभूषणान्भीषणान्राह्वधिदेवताःसर्पानावाहयामि । वामपार्श्वे
पूर्ववद्व्याहृतीरुक्त्वा । परंमृत्योइत्यस्यसंकुसुकोमृत्युस्त्रिष्टुप् । मृत्य्वावाहनेविनि० । ॐ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतं
रोदेवयानात् । चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् । इमंमंत्रमुच्चार्य करालवदनंनित्यभीषणंपाशदंडधरंस

पंवृश्चिकरोमाणंराहुप्रत्यधिदेवतांकालमावाहयामि । प्रत्यगुत्तरदलेपूर्ववद्व्याहृतीरुक्त्वा । केतुंकृण्वन्नमधुच्छंदाःकेतुर्गायत्री । केत्वावाहनेवि० । ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे । समुषद्भिरजायथाः । इमंमंत्रमुच्चार्य । भगवन्केतोकामरूपजैमिनिगोत्रमध्यदेशेश्वरधूम्रवर्णध्वजाकृतेद्विभुजगदावरदानांकितचित्रांबरमाल्यानुलेपनवैडूर्यमयाभरणभूषितसर्वांगचित्रशक्तेनमस्तेसंनद्धचित्रध्वजपताकोपशोभितेनचित्रकपोतरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छब्रह्मचित्रगुप्ताभ्यांसहवायव्यदलमध्येकांस्यप्रतिमांदक्षिणामुखींध्वजाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि । तद्दक्षिणपार्श्वेपूर्ववद्व्याहृत्यनंतरं । ब्रह्मजज्ञानमित्यस्यनकुलोब्रह्मात्रिष्टुप् । ब्रह्मावाहनेवि० । ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः । सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः । इमंमंत्रमुच्चार्य । पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थितहंसंकेत्वधिदेवतांब्रह्माणमावाहयामि । वामपार्श्वेपूर्व० नंतरं । सचित्रमित्यस्यभरद्वाजश्चित्रगुप्तस्त्रिष्टुप् । चित्रगुप्तावाहनेवि० । ॐ सचित्रचित्रंचितयंतमस्मेचित्रक्षत्रचित्रतमंवयोधां । चंद्रंरयिंपुरुवीरंबृहंतंचंद्रचंद्राभिर्गृणतेयुवस्व । इमंमंत्रमुच्चार्य । उदीच्यवेषंसौम्यदर्शनंलेखनीपत्रोपेतद्विभुजंकेतुप्रत्यधिदेवतांचित्रगुप्तमावाहयामि । अथकर्मसाद्गुण्यकरदेवतावाहनंशुक्लतंडुलपीठेषुकुर्यात् । शनेर्वायुप्रदेशेव्याहृत्यनंतरं । आतूनइंद्रेत्यस्यकाण्वःकुसीदीविनायकोगायत्री । विनायकावाहने० । ॐ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय । महाहस्तीदक्षिणेन । इमंमंत्रमुक्त्वा । चतुर्भुजंत्रिनेत्रंगजाननंनागयज्ञोपवीतिनंचंद्रधरंदंताक्षमालापरशुमोदकोपेतंविनायकमावाहयामि । तद्दक्षिणतोव्याहृत्यनंतरं । जातवेदसेमारीचःक

श्यपोदुर्गात्रिष्टुप् । दुर्गावाहने० । ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्षदतिदुर्गाणिविश्वानावेव
सिंधुंदुरितात्यग्निः । इमंमंत्रमुक्त्वा । शक्तिवाणशूलखड्गचक्रचंद्रबिंबखेटकपालपरशुकंटकोपेतदशभुजांसिंहारूढांदुर्गाख्य
दैत्यासुहारिणींदुर्गामावाहयामि । तद्दक्षिणतोव्याहृत्यनंतरं । क्षेत्रस्यपतिनावामदेवःक्षेत्राधिपतिरनुष्टुप् । क्षेत्रपालावाह
नेवि० । ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि । गामश्वंपोपयित्वासनोमृळातीदृशे । इमंमंत्रमुक्त्वा । श्यामवर्णंत्रिलो
चनमूर्ध्वकेशंसुदंष्ट्रंभृकुटीकुटिलाननंनूपुरालंकृतांघ्रिंसर्पमेखलायुतसर्वांगमतिक्रुद्धंक्षुद्रघंटाववद्धंगुल्फावलंविकरोटिकामाला
धारिणमुरगकौपीनंचंद्रमौलिनंदक्षिणहस्तैःशूलव्यालखड्गडुंडुभीन्दधानंवामहस्तैःकपालघंटाचर्मचापान्दधानंभीमंदिग्वासस
मसितद्युतिंक्षेत्रपालमावाहयामि । तद्दक्षिणतोव्याहृत्यनंतरं । क्राणाशिशुरित्यस्यत्रितोवायुरुष्णिक् । वाय्वावाहनेवि० ।
ॐ क्राणाशिशुर्महीनांहिन्वन्नृतस्यदीधितिं । विश्वापरिंप्रियाभुवदधद्विता । इमंमंत्रमुक्त्वा । धावद्धरिणपृष्ठगतंध्वज
वरदानधारिणंधूम्रवर्णवायुमावाहयामि । तद्दक्षिणतोव्याहृत्यनंतरं । आदित्प्रत्नस्येत्यस्यवत्सोंतरिक्षंगायत्री । अंतरिक्षावा
हनेविनियोगः । ॐ आदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं । परोयदिध्यतेदिवा । इमंमंत्रमुक्त्वा । नीलोत्पलाभंनीलां
वरधारिणंचंद्रार्कोपेतंद्विभुजंपंढमाकाशमावाहयामि । तद्दक्षिणतोव्याहृत्यनंतरं । अश्विनावर्तिरित्यस्यराहूगणोगोतमोश्वि
नावुष्णिक् । अश्व्यावाहनेवि० । ॐ अश्विनावर्तिरस्मदागोमदस्राहिरण्यवत् । अर्वाग्रथंसमनसानियच्छतं । इमंमंत्रमुक्त्वा
र्य । प्रत्येकमोषधीपुस्तकोपेतदक्षिणवामहस्तावन्योन्यसंयुक्तदेहावेकस्यदक्षिणपार्श्वेऽपरस्यवामपार्श्वेरत्नभांडकरशुक्लांवरधा

रिनारीयुग्मोपेतौदेवभिषजावश्विनावावाहयामि ॥ अथक्रतुसंरक्षकदेवतावाहनंपूर्ववत्तंडुलपीठेषुकुर्यात् । तच्चेत्थं । तत्रप्रागद
लाग्रेपूर्ववद्व्याहृतीरुक्त्वा । इंद्रंवइत्यस्यमधुच्छंदाइंद्रोगायत्री । इंद्रावाहनेवि० । ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्मा
कमस्तुकेवलः । इमंमंत्रमुक्त्वा । स्वर्णवर्णसहस्राक्षंवज्रपाणिंशचीप्रियमिंद्रमावाहयामि । आग्नेयदलेव्याहृत्यनंतरं । अग्निमीळ
इत्यस्यमधुच्छंदाअग्निर्गायत्री । अग्न्यावाहनेवि० । ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं । होतारंरत्नधातमं । इमंमंत्रमु
क्त्वा । स्वर्णवर्णसप्तार्चिषंसप्तहस्तंशक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणिदधानंस्वाहाप्रियंमेषवाहनमग्निमावाहयामि ।
याम्यदलाग्रेव्याहृतीरुक्त्वा । यमायसोममित्यस्ययमोयमोनुष्टुप् । यमावाहनेवि० । ॐ यमायसोमंसुनुतयमायजुहुताहविः ।
यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः । इमंमंत्रमुक्त्वा । रक्तवर्णदंडधरंमहिषवाहमिलाप्रियंयममावाहयामि । नैर्ऋत्यदलाग्रे
व्याहृत्यनंतरं । मोषुणइत्यस्यघौरःकण्वोनिर्ऋतिर्गायत्री । निर्ऋत्यावाहनेवि० । ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ।
पदीष्टतृष्णयासह । इमंमंत्रमुक्त्वा । नीलवर्णंखड्गचर्मधरमूर्ध्वकेशंनरवाहनंकालिकाप्रियंनिर्ऋतिमावाहयामि । पश्चिमद
लाग्रेव्याहृत्यनंतरं । उदुत्तमंमुमुग्धिनइत्यस्यशुनःशेपोवरुणोगायत्री । वरुणावाहनेविनियोगः । ॐ उदुत्तमंमुमुग्धिनोवि
पाशंमध्यमंचृत । अवाधमानिजीवसे । इमंमंत्रमुक्त्वा । रक्तभूषणंनागपाशधरंमकरवाहनंपद्मिनीप्रियंवरुणमावाहयामि ।
वायव्यदलाग्रेव्याहृत्यनंतरं । तववायोव्यश्वोवायुर्गायत्री । वाय्वावाहनेविनि० । ॐ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत ।
अवांस्यावृणीमहे । इमंमंत्रमुक्त्वा । श्यामवर्णंहेमदंडधरंकृष्णमृगवाहनंजगत्प्राणरूपंमोहिनीप्रियंवायुमावाहयामि । उत्तर

। ॐ त्वंनःसोमविश्वतोवयोधास्त्वं
दलाग्रेऽभ्याहृत्यनंतरं । त्वंनःसोमविश्वतइत्यस्यगोतमःसोमोगायत्री । सोमावाहनेवि० । ॐ त्वंनःसोमविश्वतोवयोधास्त्वं
स्वर्विदाविशानुचक्षाः । त्वंनइंदऊतिभिःसजोषाःपाहिपश्चातादुतवापुरस्तात् । इमंमंत्रमुक्त्वा । स्वर्णवर्णनिधीश्वरंकुतपा
णिमश्ववाहनंचित्रिणीप्रियंकुबेरमावाहयामि । ऐशान्यदलाग्रेऽभ्याहृत्यनंतरं । कद्रुद्रायेत्यस्यकाण्वोरुद्रोगायत्री । ईशाना
वाहनेविनियोगः । ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे । वोचेमशंतमंहृदे । इमंमंत्रमुक्त्वा । शुद्धस्फटिकवर्णवरदाभ
यशूलाक्षसूत्रधरंवृषभवाहनंगौरीप्रियमीशानमावाहयामि । एवमेकचत्वारिंशद्देवताआवाह्य कलशेचवरुणंपूर्वोक्तवदावाह्य
नमोंतैश्चतुर्थ्यंतैःस्वस्वनामभिःक्रमेणपूर्वोक्तद्रव्यैःपुष्पसमर्पणपर्यंतांग्रहदेवतापूजांकृत्वाकर्मसाद्गुण्यदेवताःक्रतुसंरक्षकदेवता
वरुणंचमलयजगंधशतपत्रपुष्पैस्तथैवपूजयेत् ॥ ॥ अथहोमः ॥ सचसमिच्चर्वाज्यैःप्रतिद्रव्यंप्रतिग्रहमेकावराभिःसह
स्रपराभिराहुतिभिर्निमित्तशक्त्यनुसारेणप्रधानदशांशेनपार्श्वदेवतानांतदर्धेनेतरेषांस्वाहांतैर्नामभिस्तत्तन्मंत्रैर्वापाणिनैवसकृ
दवदानेनचरुहोमः । ततआचार्यःप्रत्यगग्नेरासीनःप्राणानायम्यपूर्ववत्संकल्प्याग्निमुखंवक्ष्यमाणप्रकारेणप्रागुक्तलक्षणेकुंडे
स्थंडिलेवोपलेपाद्यग्निप्रतिष्ठांतंकृत्वा ऋत्विगन्वारब्धःसमिद्द्वयमादायदेशकालौनिर्दिश्याद्ययक्ष्यमाणग्रहहोमेदेवतापरिग्रहा
र्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा प्रधानदेवतामादित्यमधिदेवतांअग्निंप्रत्यधिदे
वतांरुद्रमर्कसमिच्चर्वाज्यैः प्रधानदेवंसोममधिदेवतामपःप्रत्यधिदेवतांगौरींपलाशसमिच्चर्वाज्यैः प्रधानदेवतामंगारकंअधिदेव
तांभूमिंप्रत्यधिदेवतांस्कंदंखदिरसमिच्चर्वाज्यैः प्रधानदेवंबुधंअधिदेवंविष्णुंप्रत्यधिदेवंपुरुषंअपामार्गसमिच्चर्वाज्यैः प्रधान

देवंबृहस्पतिंअधिदेवंइंद्रंप्रत्यधिदेवंब्रह्माणंअश्वत्थसमिच्चर्वाज्यैः प्रधानदेवंशुक्रंअधिदेवामिंद्राणींप्रत्यधिदेवामिंद्रंउदुंबरसमिच्चर्वाज्यैः प्रधानदेवंशनिमधिदेवंप्रजापतिंप्रत्यधिदेवंयमंशमीसमिच्चर्वाज्यैः प्रधानदेवंराहुंअधिदेवंसर्पान्प्रत्यधिदेवंकालंदूर्वाचर्वाज्यैः प्रधानदेवंकेतुंअधिदेवंब्रह्माणंप्रत्यधिदेवंचित्रगुप्तंकुशचर्वाज्यैःविवक्षितसंख्याकैः प्रत्येकं (१०८।१००।२८।८) पार्श्वदेवताःप्रधानदशांशेन (२८।१०।८।४) कर्मसाद्गुण्यदेवताविनायकंदुर्गांक्षेत्रपालंवायुमाकाशमश्विनौक्रतुसंरक्षकदेवताः इंद्रमग्निंयमंनिर्ऋतिंवरुणंवायुंकुबेरमीशानंप्रधानविंशांशेन (८।५।४।२) अग्निंवायुंसूर्यंप्रजापतिंप्रभूततिलव्रीहिभिर्विवक्षितसंख्यया (१०८) सूर्यमाज्येन त्रयोदशवारंअग्निंचतुस्त्रिंशद्वारंरुद्रंद्वात्रिंशद्वारंशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वाभूर्भुवःस्वःस्वाहेत्यन्नावाधाय। प्रजापतयइदंनममेत्युद्देशत्यागौकुर्यात्। ततोबर्हिःसंनहनाद्याज्येदर्भाग्रद्वयप्रक्षेपांतंकृत्वालौकिकसिद्धान्नतिलव्रीहिभिःसहाज्यंत्रिःपर्यग्निकृत्वाज्यमुद्वास्यबर्हिषिनिधायस्रुवस्रुक्संमार्जनांतंकृत्वान्नंपात्रांतरेपृथक्कृत्यान्नावधिश्रित्यस्रुवेणाभिधार्योदगुद्वास्याज्याद्दक्षिणतोबर्हिष्यासाद्यप्रत्यभिधार्याग्न्यलंकरणाद्याज्यभागांतंकृत्वाक्रमेणादित्यादीशानांताभ्यएकचत्वारिंशद्देवताभ्यआवाहनोक्तैस्तत्तन्मंत्रैःसमिच्चर्वाज्यैःप्रागुक्तसंख्याकाआहुतीर्जुहुयात्। तत्रायंप्रकारः। समिधंमूलतोद्व्यंगुलंविहायमध्यमानामिकांगुष्ठैर्गृहीत्वाजुहुयात् चरुंग्राससमंपाणिनैव आज्यंस्रुवेणैवतदभावेश्वत्थपर्णेन। ततोव्यस्तसमस्तव्याहृतिभिःप्रभूततिलव्रीहीन्पाणिनाहुत्वा सूर्यपावकरुद्रानाज्येनजुहुयान्मंत्रैः। तेचमंत्राः। सूर्योनइतिपंचर्चस्यसूक्तस्यसौर्यश्चक्षुःसूर्योगायत्री। उदुत्यमितिमंत्रस्यकाण्वःप्रस्कण्वःसूर्योगायत्री। नमोमित्रस्येतिमंत्रस्यसूर्यपुत्रोभितपाः

सूर्योजगती । चित्रंदेवानामितिमंत्रस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् । उद्वेतिसुभगइतिपंचर्चस्यमैत्रावरुणोवसिष्ठःसूर्यस्त्रिष्टुप्
सूर्यप्रीत्यर्थेविहितहवनेविनियोगः । ॐ सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यःस्वाहा । ॐ जोषासवितर्य
स्यतेहरःशतंसवाँअर्हति । पाहिनोदिद्युतःपतंत्याःस्वाहा । ॐ चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः । चक्षुर्धातादधातुनः
स्वाहा । ॐ चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः । संचेदंविचपश्येमस्वाहा । ॐ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य । विपश्येम
नृचक्षसःस्वाहा । ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः । दृशेविश्वायसूर्यंस्वाहा । ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवाय
तदृतंसपर्यत । दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसतस्वाहा । ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ।
आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चस्वाहा । ॐ उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणां । चक्षु
र्मित्रस्यवरुणस्यदेवश्चर्मेवयःसमविव्यक्तमांसिस्वाहा । ॐ उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य । समानंचक्रंपर्या
विवृत्सन्यदेतशोवहतिधूर्षुयुक्तःस्वाहा । ॐ विभ्राजमानउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः । एषमेदेवःसविताचच्छंदयः
समानंनप्रमिनातिधामस्वाहा । ॐ दिवोरुक्मउरुचक्षाउदेतिदूरेअर्थस्तरणिर्भ्राजमानः । नूनंजनाःसूर्येणप्रसूताअयन्नर्थानि
कृणवन्नपांसिस्वाहा । ॐ यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः । प्रतिवांसूरउदितेविधेमनमोभिर्मित्रावरुणोत
हव्यैःस्वाहा । त्वमग्नेप्रथमइत्यष्टादशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपोग्निर्जगती अंत्याष्टमीषोळश्यस्त्रिष्टुभः । त्वमग्नेद्युभिरि
तिषोळशर्चस्यसूक्तस्यगृत्समदोग्निर्जगती । अग्निप्रीत्यर्थेविहितहवनेविनियोगः । ॐ त्वमग्नेप्रथमोअंगिराऋषिर्देवोदेवानाम

भवःशिवःसखा । तवव्रतेकवयोविद्मनापसोजायंतमरुतोभ्राजदृष्टयःस्वाहा । ॐ त्वमग्नेप्रथमोअंगिरस्तमःकविर्देवानांपरि
भूपसिव्रतं । विभुर्विश्वस्मैभुवनायमेधिरोद्विमाताशयुःकतिधाचिदायवेस्वाहा । ॐ त्वमग्नेप्रथमोमातरिश्वनआविर्भवसुक्र
तूयाविवस्वते । अरेजेतांरोदसीहोतृवूर्येसघ्नोभारमयजोमहोवसोस्वाहा । ॐ त्वमग्नेमनवेद्यामवाशयःपुरूरवसेसुकृतेसुकृत्तरः ।
श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनःस्वाहा । ॐ त्वमग्नेवृषभःपुष्टिवर्धनउद्यतस्रुचेभवसिश्रवाय्यः । यआहुतिंप
रिवेदावषट्कृतिमेकायुरग्रेविशआविवासतिस्वाहा । ॐ त्वमग्नेवृजिनवर्तनिंनरंसक्मन्पिपर्षिविदथेविचर्षणे । यःशूरसातापरि
तक्म्येधनेदभ्रेभिश्चित्समृताहंसिभूयसःस्वाहा । ॐ त्वंतमग्नेअमृतत्वउत्तमेमर्तंदधासिश्रवसेदिवेदिवे । यस्तातृषाणउभयाय
जन्मनेमयःकृणोषिप्रयआचसूरयेस्वाहा । ॐ त्वंनोअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवानः । ऋध्यामकर्मापसानवेनदेवैर्द्या
वापृथिवीप्रावतंनःस्वाहा । ॐ त्वंनोअग्नेपित्रोरुपस्थआदेवोदेवेष्वनवद्यजागृविः । तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसु
विश्वमोपिपेस्वाहा । ॐ त्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयं । संत्वारायःशतिनःसंसहस्रिणःसुवीरंयंतिव्रत
पामदाभ्यस्वाहा । ॐ त्वामग्नेप्रथममायुमायवेदेवाअकृण्वन्नहुषस्यविश्पतिं । इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममम
कस्यजायतेस्वाहा । ॐ त्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य । त्रातातोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रते
स्वाहा । ॐ त्वमग्नेयज्यवेपायुरंतरोनिषंगायचतुरक्षइध्यसे । योरातहव्योवृकायधायसेकीरेश्चिन्मंत्रंमनसावनोषितंस्वाहा ।
ॐ त्वमग्नउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् । आध्रस्यचित्प्रमतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरःस्वाहा

ॐ त्वमग्नेप्रयतदक्षिणंनरंवर्मेवस्यूतंपरिपासिविश्वतः । स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजतेसोपमादिवःस्वाहा । ॐ
इमामग्नेशरणिंमीमृषोनइममध्वानंयमगामदूरात् । आपिःपिताप्रमतिःसोम्यानांभृमिरस्यृषिकृन्मर्त्यानांस्वाहा । ॐ मनुष्व
दग्नेअंगिरस्वदंगिरोययातिवत्सदनेपूर्ववच्छुचे । अच्छयाह्यावहादैव्यंजनमासादयबर्हिषिपियक्षिचप्रियंस्वाहा । ॐ एतेनाग्नेब्र
ह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा । उतप्रणेष्यभिवस्योअस्मान्त्संनःसृजसुमत्यावाजवत्यास्वाहा । ॐ त्वमग्नेद्युभि
स्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिःस्वाहा । ॐ तवाग्नेहोत्रंतवपो
त्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः । तवप्रशास्त्रंत्वमध्वरीयसिब्रह्माचासिगृहपतिश्चनोदमेस्वाहा । ॐ त्वमग्नइंद्रोवृषभःसताम
सित्वंविष्णुरुरुगायोनमस्यः । त्वंब्रह्मारयिविद्ब्रह्मणस्पतेत्वंविधर्तःसचसेपुरंध्यास्वाहा । ॐ त्वमग्नेराजावरुणोधृतव्रतस्त्वंमि
त्रोभवसिदस्मईड्यः । त्वमर्यमासत्पतिर्यस्यसंभुजंत्वमंशोविदथेदेवभाजयुःस्वाहा । ॐ त्वमग्नेत्वष्टाविधतेसुवीर्यंतवग्नावोमि
त्रमहःसजात्यं । त्वमाशुहेमाररिषेस्वश्व्यंत्वंनरांशर्धोअसिपुरूवसुःस्वाहा । ॐ त्वमग्नेरुद्रोअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्ष
ईशिषे । त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मनास्वाहा । ॐ त्वमग्नेद्रविणोदाअरंकृतेत्वंदेवःसवितारत्नधाअसि ।
त्वंभगोनृपतेवस्वईशिषेत्वंपायुर्दमेयस्तेविधत्स्वाहा । ॐ त्वामग्नेदमआविश्पतिंविशस्त्वांराजानंसुविदत्रमृंजते । त्वंविश्वानि
स्वनीकपत्यसेत्वंसहस्राणिशतादशप्रतिस्वाहा । ॐत्वामग्नेपितरमिष्टिभिर्नरस्त्वांभ्रात्रायशम्यातनूरुचं । त्वंपुत्रोभवसियस्ते
विधत्त्वंसखासुशेवःपास्याधृषःस्वाहा । ॐ त्वमग्नऋभुराकेनमस्य१स्त्वंवाजस्यक्षुमतोरायईशिषे । त्वंविभास्यनुदक्षिदावनेत्वं

विशिक्षुरसियज्ञमातनिःस्वाहा । ॐ त्वमग्नेअदितिर्देवदाशुषेत्वंहोत्राभारतीवर्धसेगिरा । त्वमिळाशतहिमासिदक्षसेत्वंवृत्रहा
वसुपतेसरस्वतिस्वाहा । ॐ त्वमग्नेसुभृतउत्तमंवयस्तवस्पार्हेवर्णआसंदृशिश्रियः । त्वंवाजःप्रतरणोबृहन्नसित्वंरयिर्बहुलोवि
श्वतस्पृथुःस्वाहा । ॐ त्वामग्नआदित्यासआस्यं१ त्वांजिह्वांशुचयश्चक्रिरेकवे । त्वांरातिषाचोअध्वरेषुसश्चिरेत्वेदेवाहविर
दंत्याहुतंस्वाहा । ॐ त्वेअग्नेविश्वेअमृतासोअद्रुहआसादेवाहविरदंत्याहुतं । त्वयामर्तासःस्वदंतआसुतिंत्वंगर्भोवीरुधांजज्ञि
षेशुचिःस्वाहा । ॐ त्वंतान्त्संचप्रतिचासिमज्मनाग्नेसुजातप्रचदेवरिच्यसे । पृक्षोयदत्रमहिनावितेभुवदनुद्यावापृथिवीरोद
सीउभेस्वाहा । ॐ येस्तोतृभ्योगोअग्रामश्ववेशसमग्नेरातिमुपसृजंतिसूरयः । अस्मान्चतांश्चप्रहिनेषिवस्यआबृहद्वदेमविदथे
सुवीराःस्वाहा । कद्रुद्रायेतिषळर्चस्यसूक्तस्यघौरःकण्वोरुद्रोगायत्री तृतीयामैत्रावरुणी । इमारुद्रायतवसइत्येकादशर्चस्यसू
क्तस्यकुत्सोरुद्रोजगती अंत्येत्रिष्टुभौ । आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् । रुद्रप्रीत्यर्थेविहितहवनेविनि० ।
ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे । वोचेमशंतमंहृदेस्वाहा । ॐ यथानोअदितिःकरत्पश्वेनृभ्योयथागवे । यथातोकाय
रुद्रियंस्वाहा । ॐ यथानोमित्रोवरुणोयथारुद्रश्चिकेतति । यथाविश्वेसजोषसःस्वाहा । ॐ गाथपतिंमेधपतिंरुद्रंजलाषभेष
जं । तच्छंयोःसुम्नमीमहेस्वाहा । ॐ यःशुक्रइवसूर्योहिरण्यमिवरोचते । श्रेष्ठोदेवानांवसुःस्वाहा । ॐ शंनःकरत्यर्वतेसुगंमे
षायमेष्ये । नृभ्योनारिभ्योगवेस्वाहा । ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसद्द्विपदेचतुष्पदे
विश्वंपुष्टंग्रामेअस्मिन्ननातुरंस्वाहा । ॐ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते । यच्छंचयोश्चमनुरायेजेपिता

तदश्यामतवरुद्रप्रणीतिषुस्वाहा । ॐ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः । सुम्नायन्निद्विशोअस्माकमाचरा
रिष्टवीराजुहवामतेहविःस्वाहा । ॐ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे । आरेअस्मदैव्यंहेळोअस्यतुसुमतिमिद्व
यमस्यावृणीमहेस्वाहा । ॐ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे । हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्म
भ्यंयंसत्स्वाहा । ॐ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनं । रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनया
यमृळस्वाहा । ॐ मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितं । मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्र
रीरिषःस्वाहा । ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमि
त्त्वाहवामहेस्वाहा । ॐ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे । भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृ
णीमहेस्वाहा । ॐ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु । मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाःस्वा
हा । ॐ अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः
स्वाहा । ॐ आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः । अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिःस्वाहा ।
ॐ त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाअशीयभेषजेभिः । व्य१स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीःस्वाहा । ॐ श्रे
ष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसावज्रबाहो । पर्षिणःपारमंहसःस्वस्तिविश्वाअभीतीरपसोयुयोधिस्वाहा । ॐ मात्वारु
द्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती । उन्नोवीराँअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमिस्वाहा । ॐ हवीमभिर्हवं

तेयोहुविर्भिरवस्तोमेभीरुद्रंदिशीय । ऋदूदरःसुहवोमानोअस्यैवभ्रुःसुशिप्रोरीरधन्मनायैस्वाहा । ॐ उन्मांममंदवृषभोमरुत्वा न्त्वक्षीयसावयसानाधमानं । घृणीवच्छायामरपाअशीयाविवासेयंरुद्रस्यसुम्नंस्वाहा । ॐ क१स्यतेरुद्रमृळयाकुर्हस्तोयोअस्ति भेषजोजलाषः । अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाःस्वाहा । ॐ प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि । नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनामस्वाहा । ॐ स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः । ईशानादस्यभुवनस्यभूरेर्नवाउयोषद्रुद्रादसुर्य१स्वाहा । ॐ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं । अर्हन्निदंदयसेविश्वमभ्वंनवाओजीयोरुद्रत्वदस्तिस्वाहा । ॐ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं । मृळाजरित्रेरुद्रस्तवानोन्यंतेअस्मन्निवपंतुसेनाःस्वाहा । ॐ कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मेस्वाहा । ॐ यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु । यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मिस्वाहा । ॐ परिणोहेतीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिमहीगात् । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळस्वाहा । ॐ एवावभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि । हवनश्रुन्नोरुद्रेहवोधिबृहद्वदेमविदथेसुवीराःस्वाहा । एतैरेकोनाशीतिमंत्रैःप्रतिमंत्रंस्वाहांतैराज्यंहुत्वा घंटादिवादित्रशब्दैःवेद्यामाराधितैकचत्वारिंशद्देवताभ्योवरुणायचधूपदीपनैवेद्यतांबूलादीन्समर्प्य प्रसीदंतुभवंतइतितान्संप्रार्थ्यऋत्विगन्वारब्धश्चरुतिलंव्रीहिशेषेणस्विष्टकृतंहुत्वाइध्मसंनहनींरज्जुमग्नौप्रास्यप्रायश्चित्तादिहोमशेषंसमाप्ययजमानान्वारब्धआचार्यःपूर्णाहुतिंजुहुयात् । तत्प्रकारस्तुस्रुवेणाज्यंगृहीत्वास्रुचंसमविलांपूरयित्वातस्यांस्रुव

मूर्ध्वेविलंनिधायपुनरधोविलंनिक्षिप्यस्रुच्यग्रेकुसुमाक्षतान्निधायसव्यपाणिनास्रुक्स्रुवमूलेधृत्वादक्षिणपाणिनास्रुक्स्रुवंशंखमु
द्रयागृहीत्वातिष्ठन्समपादऋजुकायःस्रुवाग्रन्यस्तदृष्टिःप्रसन्नात्मा। समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवआपस्त्रिष्टुप् अं
त्याजगती। पूर्णाहुतिहोमेविनि०। ॐ समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासमममृतत्वमानट्। घृतस्यनामगुह्यंयदस्तिजिह्वादेवानां
ममृतस्यनाभिः। वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः। उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत्।
चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य। त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश। त्रिधाहितंपणिभि
र्गुह्यमानंगविदेवासोघृतमन्वविंदन्। इंद्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः। एताअर्षंतिहृद्यात्समुद्राच्छतव्रजारि
पुणानावचक्षे। घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसां ॥१॥ सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमा
नाः। एतेअर्षंत्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः। सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयंतियह्वाः। घृतस्यधा
राअरुषोनवाजीकाष्ठाभिंदन्नूर्मिभिःपिन्वमानः। अभिप्रवंतसमनेवयोषाःकल्याण्यः स्मयमानासोअग्निं। घृतस्यधाराःसमि
धोनसंतताजुषाणोहर्यतिजातवेदाः। कन्याइववहतुमेतवाउअंज्यंजानाअभिचाकशीमि। यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधा
राअभितत्पवंते। अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त। इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंते।
धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यंतरायुषि। अपामनीकेसमिथेयआभृतस्तमश्यामममधुमंतंतऊर्मिंस्वाहा। इतिपठ
न्यवपरिमितांधारांसंततांस्रुवाग्रेणसशेषंहुत्वाअग्नयइदंनममेतित्यक्त्वा।विज्योतिषेत्यस्यजारोवृशोऽग्निस्त्रिष्टुप् ॐ विज्योतिषा

बृहताभात्यग्निरार्विश्वानिकृणुतेमहित्वा । प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षेस्वाहाइत्यवशिष्टाज्यंहुत्वाअग्नय इदंनममेतित्यक्त्वाविश्वेभ्योदेवेभ्यःसंस्रावंहुत्वा पूर्णपात्रनिनयनोपस्थानपरिस्तरणविसर्जनपरिसमूहनपर्युक्षणाद्यर्चनपात्रोत्सर्जनादिकुर्यात् । अथमंडपैशानेपंचरंगैःस्वस्तिकंकृत्वाचतुष्पादंदीर्घचतुरस्रंसोत्तरच्छदंतत्रपीठंनिधायतत्रोदगग्रान्समूलान् हरितदर्भानास्तीर्यतत्रसामात्यंयजमानंप्राङ्मुखमुपवेश्याचार्यऋत्विग्भिःसहमंगलवाद्यैरभिषेककुंभोदकंपात्रांतरेआदायप्रत्यङ्मुखस्तिष्ठन्सपलाशयौदुंवर्यार्द्रयाशाखयासहिरण्यपवित्रयासकुशदूर्वापल्लवयाहस्तमंतर्धायोदकपृषद्भिरब्लिंगाभिर्वारुणीभिः पावमानीभिरन्याभिश्चशांतिपवित्रलिंगाभिर्ग्रहाभिषेकमंत्रैःसुरास्त्वामितिश्लोकैःश्रीसूक्तेनेमाआपःशिवतमाइतितृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरितिचव्याहृतिभिरभिषिंचेत् । तेचमंत्राः । आपोहिष्ठेतिनवर्चस्यसूक्तस्यांवरीषःसिंधुद्वीपआपोगायत्री पंचमीवर्धमानासप्तमीप्रतिष्ठांत्येद्वेअनुष्टुभौ । अभिषेकेवि० । ॐ आपोहिष्ठामयोभुव० ॥ ९ ॥ प्रसम्राजइत्यष्टर्चस्यसूक्तस्यात्रिर्वरुणस्त्रिष्टुप् । अभिषेकेविनि० । ॐ प्रसम्राजेबृहदर्चागभीरंब्रह्मप्रियंवरुणायश्रुताय । वियोजघानशमितेवचर्मोपस्तिरेपृथिवीं सूर्याय । वनेषुव्य१ंतरिक्षंततानवाजमर्वत्सुपयउस्रियासु । हृत्सुक्रतुंवरुणोअप्स्व१ग्निंदिविसूर्यमदधात्सोममद्रौ । नीचीनवारं वरुणःकवंधंप्रससर्जरोदसीअंतरिक्षं । तेनविश्वस्यभुवनस्यराजायवंनवृष्टिर्व्युनत्तिभूम । उनत्तिभूमिंपृथिवीमुतद्यांयदादुग्धं वरुणोवष्ट्यादित् । समभ्रेणवसतपर्वतासस्तविपीयंतःश्रथयंतवीराः । इमामूष्वासुरस्यश्रुतस्यमहींमायांवरुणस्यप्रवोचं । मानेनेवतस्थिवाँअंतरिक्षेवियोममेपृथिवींसूर्येण ॥१॥ इमामूनुकवितमस्यमायांमहीदेवस्यनकिरादधर्ष । एकंयदुद्नानपृणंत्येनीरासिं

चंतीरवनयःसमुद्रं । अयम्यंवरुणमित्र्यंवासखायंवासदमिद्भ्रातरंवा । वेशंवानित्यंवरुणारणंवायत्सीमागश्चकृमाशिश्रथस्तत् ।
कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म । सर्वाताविष्यशिथिरेवदेवाधातेस्यामवरुणप्रियासः । स्वादिष्ठयेतिदश
र्चस्यसूक्तस्यमधुच्छंदाःपवमानःसोमोगायत्री । अभि० । ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इंद्रायपातवेसुतः ।
रक्षोहाविश्वचर्षणिरभियोनिमयोहतं । द्रुणासधस्थमासदत् । वरिवोधातमोभवमंहिष्ठोवृत्रहंतमः । पर्षिराधोमघोनां । अ
भ्यर्षमहानांदेवानांवीतिमंधसा । अभिवाजमुतश्रवः । त्वामच्छाचरामसितदिदर्थंदिवेदिवे । इंदोत्वेनऽआशसः ॥१॥ पुनाति
तेपरिस्रुतंसोमंसूर्यस्यदुहिता । वारेणशश्वतातना । तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश । स्वसारःपार्येदिवि । तमीं
हिन्वंत्यग्रुवोधमंतिवाकुरंदृतिं । त्रिधातुवारणंमधु । अभीइममघ्न्याउतश्रीणंतिधेनवःशिशुं । सोममिंद्रायपातवे । अस्ये
दिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते । शूरोमघाचमंहते ॥२॥ शंनइंद्राग्नीतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् । अभिषे०
ॐ शंनइंद्राग्नीभवतामवोभिःशंनइंद्रावरुणारातहव्या । शमिंद्रासोमासुवितायशंयोःशंनइंद्रापूषणावाजसातौ । शंनोभगः
शमुनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः । शंनःसत्यस्यसुयमस्यशंसःशंनोअर्यमापुरुजातोअस्तु । शंनोधाताशमुधर्तानोअ
स्तुशंनउरूचीभवतुस्वधाभिः । शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसंतु । शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमि
त्रावरुणावश्विनाशं । शंनःसुकृतांसुकृतानिसंतुशंनइषिरोअभिवातुवातः । शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ।
शंनओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ १ ॥ शंनइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः । शंनोरुद्रो

रुद्रेभिर्जलाषः शंनस्त्वष्टाग्नाभिरिहशृणोतु । शंनः सोमोभवतुब्रह्मशंनः शंनोग्रावाणः शमुसंतुयज्ञाः । शंनः स्वरूणांमितयोभवं
तुशंनः प्रस्वः १ शम्वस्तुवेदिः । शंनः सूर्यउरुचक्षाउदेतुशंनश्चतस्रः प्रदिशोभवंतु । शंनः पर्वताध्रुवयोभवंतुशंनः सिंधवः शमु
संत्वापः शंनोअदितिर्भवतुव्रतेभिः शंनोभवंतुमरुतः स्वर्काः । शंनोविष्णुः शमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ।
शंनोदेवः सविताात्रायमाणः शंनोभवंतूषसोविभातीः । शंनः पर्जन्योभवतुप्रजाभ्यः शंनः क्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥ शंनो
देवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु । शमभिषाचः शमुरातिषाचः शंनोदिव्याः पार्थिवाः शंनोअप्याः । शंनः सत्य
स्यपतयोभवंतुशंनोअर्वतः शमुसंतुगावः । शंनऋभवः सुकृतः सुहस्ताः शंनोभवंतुपितरोहवेषु । शंनोअजएकपाद्देवोअस्तुशंनो
हिर्बुध्न्यः १ शंसमुद्रः । शंनोअपांनपात्पेरुरस्तुशंनः पृश्निर्भवतुदेवगोपा । आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः ।
शृण्वंतुनोदिव्याः पार्थिवासोगोजाताउतयेयज्ञियासः । येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राअमृताऋतज्ञाः । तेनोरासंता
मुरुगायमद्ययूयंपातः स्वस्तिभिः सदानः ॥३॥ पवित्रंतेविततमितिपंचर्चस्यांगिरसः पवमानः सोमोजगती । अभिषेकेविनियोगः ।
ॐ पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः । अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतस्तत्समाशत । तपोष्पवित्रं
विततंदिवस्पदेशोचंतोअस्यतंतवोव्यस्थिरन् । अवंत्यस्यपवीतारमाशवोदिवस्पृष्ठमधितिष्ठंतिचेतसा । अरूरुचदुषसः पृश्निर
ग्रियउक्षाबिभर्तिभुवनानिवाजयुः । मायाविनोममिरेअस्यमाययानृचक्षसः पितरोगर्भमादधुः । गंधर्वइत्थापदमस्यरक्षति
पातिदेवानांजनिमान्यद्भुतः । गृभ्णातिरिपुंनिधयानिधापतिः सुकृत्तमामधुनोभक्षमाशत । हविर्हविष्मोमहिसद्मदैव्यंनभो

वसानुःपरियास्यध्वरं। राजापवित्ररथोवाजमारुहःसहस्रभृष्टिर्जयसिश्रवोबृहत्॥१॥ अथग्रहमंत्राः॥ग्रहाणामादिरादित्योलो
करक्षणकारकः। विषमस्थानसंभूतांपीडांहरतुतेरविः। रोहिणीशःसुधामूर्तिःसुधागात्रःसुधाशनः। विषमस्थानसंभूतांपी
डांहरतुतेविधुः। भूमिपुत्रोमहातेजाजगतांभयकृत्सदा। वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः। उत्पातरूपोजगतांचंद्रपुत्रो
महाद्युतिः। सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः। देवमंत्रीविशालाक्षःसदालोकहितेरतः। अनेकशिष्यसंपूर्णःपीडांहरतुते
गुरुः। दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहामतिः। प्रभुस्ताराग्रहाणांचपीडांहरतुतेभृगुः। सूर्यपुत्रोदीर्घदेहोविशालाक्षःशिवप्रि
यः। मंदचारःप्रसन्नात्मापीडांहरतुतेशनिः। महाशिरामहावक्रोदीर्घदंष्ट्रोमहाबलः। अतनुश्चोर्ध्वकेशश्चपीडांहरतुतेतमः।
अनेकरूपवर्णैश्चशतशोथसहस्रशः। उत्पातरूपोजगतःपीडांहरतुतेशिखी॥ अथदेवमंत्राः॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णु
महेश्वराः। वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः। प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते। आखंडलोग्निर्भगवान्यमोवैनि
ऋतिस्तथा। वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः। ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा। कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः
श्रद्धाक्रियामतिः। बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः। एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः। आदित्यश्चंद्र
माभौमोबुधजीवसितार्कजाः। ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः। देवदानवगंधर्वायक्षराक्षसपन्नगाः। ऋषयोमनवो
गावोदेवमातरएवच। देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः। अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच। औषधानिच
रत्नानिकालस्यावयवाश्चये। सरितःसागराःशैलास्तीर्थानिजलदानदाः। एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये॥ एतैर्मंत्रैः

प्रतिमंत्रमभिषिच्यश्रीसूक्तेन हिरण्यवर्णांहरिणीमित्यादिनाइमाआपःशिवतमाइतितृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरिति
व्याहृतिभिश्चाभिषिंचेत् । एवमभिषिक्तोयजमानःश्वेताहतवस्त्रयुगंगंधमाल्याभरणंचविभृयात् । ततआचार्योदिक्षुविदिक्षु
चवलिमुत्क्षिप्यसुवासिनीभिर्नीराजनंकारयेत् । अथयजमानोग्रहदेवताभ्यश्चतुर्थ्यंतदेवतानामभिःपुष्पाणिसमर्प्याचार्येण
व्याहृत्युच्चारणपूर्वकंग्रहोद्वासनंकारयित्वातत्रमंत्रः ॐ भूर्भुवःस्वःउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे । उपप्रयंतुमरुतःसुदानव
इंद्रप्राशूर्भवासचा । ॐ अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु। अवतस्यविसर्जने । यांतुदेवगणाःसर्वेपूजामादायपार्थिवात् ।
इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच । ततोयजमानआचार्यप्रभृतिभ्योजपहोमफलंगृहीत्वातेभ्योदक्षिणांदद्यात् । गौःशंखोर
क्तोनड्वान्हिरण्यंपीतवासःश्वेताश्वःकृष्णागौःकलायसंहस्तीछागोवेतिग्रहक्रमेण । अत्रन्यूनदक्षिणावुधदक्षिणयाहिरण्येनस
माकार्याआद्यगवावा। एतदभावेसर्वेभ्योयथाशक्तिहिरण्यंवादद्यात् । आचार्यायद्विगुणं । अन्येभ्यश्चयथाशक्तिभूयसीं ।
ततःकांस्यपात्रगताज्ये। ॐ रूपंरूपंप्रतिरूपोवभूवतदस्यरूपंप्रतिचक्षणाय । इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशता
दश । इतिमंत्रेणसकुटुंबःस्वप्रतिरूपंप्रेक्ष्य । आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतम् । आज्यंसुराणामाहारआज्येदेवाःप्रति
ष्ठिताः । इतिमंत्रंपठित्वातदाज्यंसदक्षिणंब्राह्मणायदद्यात् । ततोभूरिदक्षिणांदत्वासंकल्प्यवा । एकस्याआहुतेरेकंशतस्यैकंस
हस्रस्यवाएकंयथाशक्तिवाब्राह्मणान्भोजयित्वातेभ्यःशांतिःपुष्टिस्तुष्टिश्चास्त्वित्याद्याशिषोगृहीत्वातान्संप्रार्थ्यप्रणिपत्य । य
स्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु । न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतमितिपठित्वा । प्रमादात्कुर्वतांकर्मप्रच्यवेता

ध्वरेषुयत् । स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिरित्युक्त्वा । न्यूनातिरिक्ताछिद्रत्वार्थंयथाशक्तिअच्युतानंतगोविंदेति नामत्रयजपंकृत्वाग्रहयज्ञफलंश्रीविष्णवेसमर्प्यस्वयंहृष्टमनावंधुभिःसहभुंजीत ॥ अयंचाश्वलायनगृह्यपरिशिष्टोक्तोग्रहमखः स्मार्ताग्निमतामाश्वलायनानामेव । वह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रचोदितम् । तस्यतावतिशास्त्रार्थेकृतेसर्वंकृतंभवेदितिवचनात् । एवमन्येषामपियदिस्वगृह्यादावुक्तःतदासएव । येपांतुस्वगृह्यादौनोक्तस्तैर्याज्ञवल्क्यादिस्मृत्युक्तोमत्स्यपुराणाद्युक्तो वानुष्ठेयःस्मृत्यादेःसाधारण्यादितिदिक् ॥ इतिश्रीमद्विद्वन्मुकुटमाणिक्यश्रीरामेश्वरभट्टसुरीसूनुनारा०नवग्रहमखप्रयोगः॥

अथविवाहोत्तरकर्तव्योपिस्थालीपाकःप्रथममुच्यते ॥ तत्रांगानामुक्तानामन्येष्वतिदेशेनप्राप्तेः। सचविवाहानंतरकर्तव्य गृहप्रवेशनीयहोमोत्तरभाविन्यांपौर्णमास्यामारंभणीयोनत्वमावास्यायां । चतुर्थीहोमात्प्रागपिपौर्णमासीचेत्तत्रारंभः। यदिचारंभकालेमलमासगुरुशुक्रास्तवाल्यवार्धकग्रहणपौपमासादिभवति तदापिप्रारंभःकार्यः । यानितुतत्रारंभनिषेधकानि । उपरागोधिमासश्चयदिप्रथमपर्वणि । तथामलिम्लुचेपौपेनान्वारंभणमिष्यते । गुरुभार्गवयोर्मौढ्येचंद्रसूर्यग्रहेतथेत्यादीनिसंग्रहकारादिवचनानितानिआलस्यादिनास्वकालानुपक्रांतस्थालीपाकादिप्रारंभविपयाणीतिप्रयोगपारिजातकारः । तं

---

१ अत्रस्मार्ताग्निमतामितिपदंप्रशसापरं । तथाहि गृहस्थेनशक्तिमतागृह्याग्निमताभाव्यं । किंचस्मार्ताग्निमता सायंप्रातर्होमादिनित्यकर्मरतेनापि सतिनिमित्तेशांतिकपौष्टिकादावकार्यः । नायंप्रयोगोगृह्येग्नौ । ग्रहानुकूल्यादिकामदर्शनात् । निरग्निविधुरब्रह्मचारिणामप्ययमेव ब्रह्मयज्ञवैश्वदेववत् । सर्वथागृह्याग्निशकानकार्या ।

थाचापरार्कस्थंगर्गवचनमुदाजहार । नामकर्मचदर्शेष्टिंयथाकालंसमाचरेत् । अतिपातेसतितयोःप्रशस्तेमासिपुण्यभइति । इतिस्थालीपाकप्रारंभकालः ॥ ॥ अथपर्वनिर्णयः ॥ पूर्णिमादर्शश्चपर्व । तत्रान्वाधानंप्रतिपदीष्टिरित्युत्सर्गः । तत्रपर्व

१ इष्टिकालनिर्णयः । पक्षाताउपवस्तव्याः पक्षाद्यायष्टव्याः । उपवासोऽन्वाधानाख्यकर्म । पर्वणोयश्चतुर्थांशआद्या प्रतिपदस्त्रयः । यागकालः सविज्ञेयःप्रातरुक्तोमनीषिभि' । प्रतिपत्तुर्यचरणेनयष्टव्यमितिस्थितिः । तत्रपर्वप्रतिपदो पूर्णत्वेसंदेहाभावः पर्वण्यन्वाधानस्योत्तरदिनेयागस्यय थोक्तकाललाभात् । पर्वणःखडत्वेतु पर्वापेक्षयाप्रतिपदोह्रासवृद्धिघटिकागणयित्वा तदर्धह्रासेपर्वणिवियोज्यवृद्धौसंयोज्यसंधिकालंज्ञात्वान्वाधा नादिकालोनिर्णेतव्यः । यत्रह्रासवृद्धीनस्तस्तत्रयथास्थित स्पष्टएवसंधिः । तत्रसंधिश्चतुर्विधःपूर्वाह्णसंधिर्मध्याह्नसंधिरपराह्णसंधीरात्रिसंधिश्चेति । द्वेधाविभक्तदिनस्यपूर्वार्धपूर्वाह्ण' अपरार्धमपराह्णः पूर्वाह्णापराह्णसंधिभूतोघटिकाद्वयात्मकोमुहूर्तोमध्याह्नआवर्तनापरपर्यायइतिकौस्तुभे । उभयस धिरेकपलात्मकएवमध्याह्नोनतुघटिकाद्वयात्मकइतिप्रायेणेदानींशिष्टाचारः । तत्रोक्तरीत्याह्रासवृद्ध्यर्थवियोजनसंयोजनेननिर्णीतःपर्वप्रतिपदोः संधिर्यदिपूर्वाह्णेमध्याह्नेवाभवतितदासंधिदिनात्पूर्वदिनेऽन्वाधानंसंधिदिनेयागः । यद्यपराह्णेरात्रौवासंधिस्तदासंधिदिनेऽन्वाधानंतत्परदिनेयागः । अथोदाहरणम्—पर्वसप्तदशघटीमितं प्रतिपदेकादशघटीमिता तत्रषट्घटीमितःप्रतिपत्क्षयस्तदर्धघटीत्रयपर्वणिवियोजितजातःसंधिश्चतुर्दशघटी मितः । अयंत्रिंशद्घटीमितेदिनमानेपूर्वाह्णसंधिः । अष्टाविंशतिघटीमितेतुदिनमानेऽयमेवमध्याह्नसंधिः । अत्रसंधिदिनेयागःपूर्वदिनेऽन्वाधानं । पर्व १४ प्रतिपत् १९ अत्रपंचघटिकावृद्धिः तदर्धसार्धघटीद्वयपर्वणिसंयोजितंजातःसंधिःसार्धषोडशघटीमितः अयमपराह्णसंधिः । अत्रसंधि दिनेऽन्वाधानंपरेद्युर्यागः ॥ ॥ अत्रबालबोधार्थंप्रकारांतरम्—सूर्योदयोत्तरंविद्यमानाःपर्वनाडिकाःप्रतिपन्नाडिकाश्चैकीकृताःसत्योयदि दिनमानतोन्यूनास्तदापूर्वाह्णसंधिः । यदिदिनमानसमानास्तदामध्याह्नसंधिः । यदिदिनमानाधिकास्तदापराह्णसंधिरिति । इत्थंसूर्योदयोत्तरम नुवर्तमानपर्वप्रतिपदोःक्षयवृद्धिभ्यामेवसंध्यवलोकनमिदानींसर्वत्रशिष्टाचारेषुप्रसिद्धम् । धर्मा० ।

चतुर्थांशःप्रतिपदश्चाद्यास्त्रयोंगाःसूर्योदयोत्तरमुहूर्तत्रयेविद्यमानोयागकालः । सूर्यास्तमानपर्यंतंयत्रपर्वाखंडंतत्रनसंदेहः । यदितुखंडंपर्वतत्रनिर्णयः । अह्नोमध्येततःपूर्वंवापर्वप्रतिपदोःसंधौतदहर्यागः पूर्वेद्युरन्वाधानं । मध्याह्नात्परेसंधौतदहरन्वाधानंपरेद्युर्यागइति । संधिश्चप्रतिपदोह्रासवृद्ध्योरर्धंपर्वणिप्रक्षिप्यज्ञेयः । इष्टेःपर्वणिसमाप्तौपुनरिष्टेःकर्तव्यतापत्तेः । साप्रतिपद्येवसमापनीयानपर्वमध्ये । अपराह्णसंधौपरेद्युःप्रतिपच्चतुर्थांशेपियागेनदोषः । चंद्रदर्शनदिनेइष्टिनिषेधवचनानिननिर्णायकानिसंभवेयोज्यानि । यातुपौर्णमासीसंगवादूर्ध्वमावर्तनात्पूर्वंसंधिमतीसासद्यस्कालेतितस्यामेवान्वाधानंयागश्च ॥ अथविकृतौनिर्णयः ॥ आवर्तनेततःपूर्वंवापर्वसंधौतदहरादौप्रकृतियागंकृत्वापश्चादाग्रयणादिविकृतिःकार्या । परसंधौतुविकृतियागएवसंधिदिने प्रकृतिस्तुतदुत्तरदिनइति ॥ ॥ अथस्थंडिलकरणादिनिर्णयः ॥ तत्रचौलादिहोमोलौकिकाग्नौ ।

---

१ स्मृतिसंग्रहे—वराहकूर्मनागाश्चवसंतिवसुधातले । पन्नगास्तत्रतिष्ठंतितदर्थंस्थंडिलंस्मृतमिति । इषुमात्रावरसर्वत स्थंडिलमितिसूत्र । इषोर्मंत्रेवमात्रायस्यतत् । चतसृष्वपिदिक्षुइषुप्रमाणमष्टादशांगुल । तेनद्विसप्तत्यंगुल परिधिरित्युक्त । शतपथब्राह्मणेइषुप्रमाणपंचप्रादेशाइषुर्भवतीति । तेनपंचाशदंगुल परिधिरित्युक्त । द्वादशांगुलमात्रोवैवितस्ति परिकीर्तित । अंगुष्ठस्यप्रदेशिन्याव्यास.प्रादेशउच्यते । दशांगुल प्रादेश इत्यर्थ । त्रिररत्निरिपु स्मृतइत्युक्तत्वात्तेनचतुर्विंशत्यंगुलमितारत्निपक्षेअरत्नित्रितयस्यद्विसप्तत्यं ७२ गुलानि । तेपुचतुर्धाविभाजितेष्वेकोभागोष्टादशां १८ गुलः । सार्धद्वाविंशत्यंगुलारत्निपक्षेसार्धसप्तषष्टि ६७॥ रंगुल. । तेपुचतुर्धाविभाजितेष्वेकोभागोयवोनसप्तदशांगुल. पंचप्रादेशाइषुर्भवतीतिप्रमाणेनदशांगुलमितप्रादेशेनपंचाश ५० दंगुलानि तेपुचतुर्धाकृतेष्वेकोभाग.सार्धद्वादश १२॥ गुल. । चतुर्विंशत्यंगुलयोररत्निस्तदर्धप्रादेशक

पार्वणस्थालीपाकश्रवणाकर्मादिहोमोगृह्याग्नौ । तत्रलौकिकाग्नौहोमेस्थंडिलकरणादिरग्निप्रतिष्ठापनांतोविधिर्नियतः । गृह्याग्निहोमेपिगृहप्रवेशवास्तुहोमशूलगवान्वष्टक्यादिषुनियतः । धार्यायतनेतदसंभवात् । यदापिसमिदादावग्निसमारोपस्तदा गृह्याग्निकर्तव्येपिस्थालीपाकादौनियतः । एतत्सर्वमभिप्रेत्य यत्रक्कचहोष्यन्स्यादितिगृह्योक्ताग्निप्रतिष्ठापनविधेर्विषयं प्रदर्शयितुमाहकारिकाकारः—प्रतिष्ठाप्याथलेखासुहोमायालंहविर्भुजम् । एतदंतंप्रकुर्वीतहोष्यन्संस्थापितेऽनलइति । अन्यथासंस्थापितेऽनलेहोष्यन्नितिव्यर्थस्यात् । एवंस्थंडिलकरणादिविषयंनिर्णीयस्थंडिलादिकुर्यात् । तत्रयजमानःकृतनित्यक्रियःशुचिःपरिहितधौतवासादर्भपाणिःपीठोपविष्टःप्राङ्मुखोवाग्यतोद्विराचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थममुककर्मकरिष्ये । तदंगहोमंकर्तुंस्थंडिलादिकरिष्ये । इतिसंकल्प्य । गोमयादिलिप्तेशुद्धेदेशेशुद्धमृदाईशान्यारंभमुदक्संस्थंचतुरंगुलोन्नतमंगुलोन्नतंवाचतुर्दिक्षुमिलित्वाद्विसप्तत्यंगुलपरिधिकंफलितमष्टादशांगुलविस्तृतंहोमानुसारेणतदधिकं

---

तिरित्यापस्तंबः । पारिजातेप्येवं । अंगुलस्थंडिलव्यासचतुर्विंशांशइतिचिंतामणिः । चौलकर्मादितश्चैवयावद्वैवाहिकंभवेत् । तावत्स्याल्लौकिकोवह्निरितिवेदविदोविदुरित्याश्वलायनः । गर्भपुंसवसीमंतबलिचौलचनिष्क्रुतिरित्यादि । सर्वाधानिनस्तुऔपासनाभावाद्वैतानिकाप्राप्तेश्चतेनगार्ह्यंलौकिक एवकार्यं । यत्तुनारायणवृत्तौसर्वाधानिनासीमंतोन्नयनादिगार्ह्यकर्मार्थंस्मार्ताग्निरुत्पादनीयइत्युक्तंतत्रमूलमन्वेष्यमितिशांतिमयूखे । चौलादिभ्योन्यत्रौपासनस्ययत्रक्कचिन्निहितस्यैववहिःशुद्ध्यर्थंस्मार्तमेवोपलेपनादिकरोति । अस्यापिदेशांतरनीयमानस्योपलेपनोल्लेखनादिकसर्वंकरोति केचिदेतन्नेच्छंतीतिजयंतः । १ स्थंडिलेकेवलमष्टादशांगुलविस्तृतेएवपश्चिमभागस्थरेखायांप्रादेशमात्रविस्तारोनस्यात् । तत्रैवव्यवस्था—दक्षिणेष्टा

वानतुततोन्यूनंमध्योन्नतंस्थंडिलंकुर्यात् । तद्गोमयेनप्रदक्षिणमुपलिप्यदक्षिणेष्टौप्रतीच्यांचतुःउदीच्यांद्वेप्राच्यामर्धमित्यंगुला नित्यक्त्वादक्षिणोपक्रमामुदक्संस्थांप्रादेशमात्रामेकांलेखांलिखित्वा तस्यादक्षिणोत्तरयोःप्रागायतेपूर्वरेखयाअसंसृष्टेप्रादेशसंमितेद्वेलेखेलिखित्वा तयोर्मध्येपरस्परमसंसृष्टाउदक्संस्थाःप्रागायताःप्रादेशसंमितास्तिस्रइतिपड्लेखायज्ञियशकलमूलेनदक्षिणहस्तेनोल्लिख्यलेखासुतच्छकलमुदगग्रंनिधायस्थंडिलमद्भिरभ्युक्ष्यशकलमाग्नेय्यांनिरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् ॥ ॥ अथकारिका ॥ उल्लिखेदुदगायामांतस्याउभयतोऽपरे । पूर्वायतेउदक्संस्थेअसंसृष्टेचपूर्वया । मध्येतिस्रउदक्संस्थाःपूर्वायामाअसंहताः । लिखितायेनशकलंयज्ञियंतन्निधायच । अद्भिरभ्युक्ष्यशकलमाग्नेयांनिरस्यापउपस्पृशेत् । ततस्तैजसेनासंभवेमृन्मयेनवापात्रयुग्मेनसंपुटीकृत्यसुवासिन्याश्रोत्रियागारात्स्वगृहाद्वासमृद्धंनिर्धूममग्निमाहृतंस्थंडिलादाग्नेय्यांनिधाय । जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् । एह्यग्नेराहूगणोगोतमोग्निस्त्रिष्टुप् । अग्न्यावाहनेविनियोगः । ॐ जुष्टोदमूना अतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् । विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि । एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः । अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् । इत्यक्षतैरावाह्याच्छादनंदूरीकृत्य । समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती अग्निप्रतिष्ठापनेविनियोगः । ॐभूर्भुवःस्वरित्यात्माभिमुखंपाणिभ्यांपड्लेखासुतत्तत्कर्मसु

---

वितिनियम प्राक्सस्थदक्षिणरेखाया । प्रतीच्याचतुरितिदक्षिणोपक्रमोदक्सस्थायाःप्रत्यग्रेखाया । एवमुदग्रेखायाव्यगुलत्यागउत्तरस्या । प्राच्यामर्धमितिप्राक्सस्थानापचाना इत्यनेनसर्वोपिक्लेशोनिरस्त स्यात् । अगुलस्थडिलव्यासचतुर्विंशाशइतिचिंतामणिमतेत्वापद्गोनुद्गमएवेतिज्ञेयम ।

विहितनामकममुकनामानमग्निंप्रतिष्ठापयामीत्यग्निंप्रतिष्ठाप्यपात्रेऽक्षतोदकंप्रास्यपात्रद्वयमेकीकृत्य । प्रोक्षितेंधनानिनिक्षिप्य
वेणुधमन्याप्रबोध्यध्यायेदेवम् । चत्वारिशृंगागोतमोवामदवोग्निस्त्रिष्टुप् । अग्निमूर्तिध्यानेविनियोगः । ॐ चत्वारिशृंगात्रयो
अस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांऽआविवेश । स्मृतिमंत्राश्च । अग्निरूपमहंवक्ष्ये
सिद्ध्यर्थंसर्वकर्मणां । यतस्तस्मिन्नविज्ञातेहोमोभवतिनिष्फलः । सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः । त्रिपात्प्रसन्नवदनः
सुखासीनःशुचिस्मितः । शिखाभिर्दीप्तमालाभिरूर्ध्वबाहुश्चसंयतः । स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा । बिभ्रद्दक्षि
णहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवम् । तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् । मेषारूढोजटाबद्धोगौरवर्णोमहौजसः । धूम्रध्वजो
लोहिताक्षःसप्तार्चिःसर्वकामदः । आत्माभिमुखमासीनएवंरूपोहुताशनः । ध्यायेत्सर्वार्थसिद्ध्यर्थंहोमेविगतकल्मषइति ।
ततोयदिसमिदादौसमारोपितोग्निस्तर्हि प्रत्यवरोहणंकार्यम् ॥ तच्चैवम् ॥ प्रत्यवरोहेत्यस्यहिरण्यगर्भोग्निस्त्रिष्टुप् । अग्निप्रत्य
वरोहणेविनियोगः । ॐ प्रत्यवरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् । प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमा
नायशंयोः । इतिमंत्रेणसमारोपिताग्निंसमिधंस्थापितेग्नौप्रक्षिपेदिति । एतदंतंसंस्थापितेग्नौहोमेकार्यं । नित्यधारितहोमेतु
नैतावत् । ततःपार्वणस्थालीपाकेप्रधानदिनात्पूर्वदिनेसद्यस्कालायांपौर्णमास्यामशक्तौप्रधानदिनएववाप्रातरौपासनंहुत्वा
न्वाधानंकुर्यात् । तच्चेत्थम् ॥ आचम्यप्राणानायम्यसमिद्द्वयंत्रयंवादायदेशकालौस्मृत्वा ममोपात्तदुरितक्षयद्वाराश्रीपरमे

१ नाप्रोक्षितमिधनमग्नावादध्यादितिवचनात्प्रोक्षितैरिंधनैरग्निंबोधयेदितिपारिजातेआपस्तंबः ।

श्वरप्रीत्यर्थंदर्शपूर्णमासाभ्यांस्थालीपाकाभ्यांयक्ष्ये । तत्रेदानींपौर्णमासस्थालीपाकेनयक्ष्ये । दर्शेतुपूर्वसंकल्पितेनदर्शस्थाली पाकेनयक्ष्यइतिविशेषः । तत्रदेवतापरिग्रहार्थमन्वाधानंकरिष्येइतिसंकल्प्यास्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजाप तिंप्रजापतिंचाघारदेवतेआज्येनाग्नीषोमौचक्षुषीआज्येन । अग्निमग्नीषोमौचप्रधानदेवतेचरुद्रव्येण । दर्शेतुअग्निमिंद्राग्नी चप्रधानदेवतेचरुद्रव्येणेतिविशेषः । शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रमयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजापतिं चैताःप्रायश्चित्तदेवताआज्येनज्ञाताज्ञातदोषनिवर्हणार्थंत्रिवारमग्निंमरुतश्चाज्येनविश्वान्देवान्संस्रावेणयक्ष्ये । अंगदेवताः प्रधानदेवताःसर्वाःसन्निहिताःसंतु । एवंसांगोपांगेनकर्मणाश्वोयक्ष्ये सद्यस्कालेतुसद्योयक्ष्यइतिसंकल्प्य तूष्णींसमस्तव्याहृ तिभिर्वासमिद्धोमंकुर्यात् । व्याहृतिपक्षेव्याहृतीनामित्यादिपूर्ववत् । अन्वाधानसमिद्धोमेविनियोगः । ॐ भूर्भुवःस्वःस्वा हेति प्रजापतयइदंनममेतित्यागः । तंचाग्निंधारयेत् । संकटेतुतुभ्यंताइत्यृचाज्याहुतिंहुत्वासमारोपयेत् । तद्यथा । तुभ्यं ताविरूपोग्निर्गायत्री । कृतान्वाधानाग्नेःसमारोपाधिकारार्थंप्रायश्चित्ताज्यहोमेविनियोगः । ॐ तुभ्यंताअंगिरस्तमविश्वाः सुक्षितयःपृथक् । अग्नेकामाययेमिरेस्वाहा । अग्नयइदं० ॥ ततस्त्रिभिस्त्रिभिःकुशदलैःसव्यंपाणिमधोदक्षिणंचोपरिकुर्वन् पूर्वदलाग्रैरुत्तरदलमूलैश्चत्रिसंधिंद्विगुणांरज्जुंकृत्वा पुनर्दक्षिणमधःसव्यंचोपरिकुर्वन्तथैवत्रिगुणयेत् । अंतेप्रदक्षिणंग्रंथिं दद्यात् । एवंषट्त्रिंशद्दर्भदलैरेकारज्जुर्भवति । ततस्तस्यामुदगग्रायांप्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधाय । तयाबर्हिर्द्विरा वेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यतदग्रशेषंपूर्ववेष्टितरज्ज्वधस्तान्निनीय परिस्तरणाद्यर्थंदर्भैःसहाग्न्यायतनात्पश्चाद्भागोपरिनि

दध्यात् । ततोन्ययाताद्दशैवकृतयारज्ज्वाउदगग्रयापालाशखादिरसंभवेशमीवटादियज्ञियवृक्षभवमरत्निमात्रंवितस्तिमात्रं वापंचदशदारुकमिध्मंप्रागग्रंसकृदावेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यपूर्ववन्निदध्यात् । अत्रेध्माबर्हिषोर्बंधनेकेचिन्मंत्रा विच्छंति । तत्रबर्हिषि । इंद्राण्यैसन्नहनं । पूषातेग्रंथिंबध्नातु । सतेमास्थात् । इति । इध्मे यत्कृष्णोरूपंकृत्वाप्राविशस्त्वंवन स्पतीन्[1]। ततस्त्वापंचदशधासंभरामिसुसंभृता । इत्येकविंशतिधेत्यत्रपंचदशधेत्यूहेन । अन्येत्वनूहमाहुः । अपरेतुमंत्रौने च्छंति । ततःपत्नीअग्न्यायतनालंकरणंकुर्यात् । ततोगंधादिभिःस्वशरीरेअलंकृत्यतद्दिनेकलहक्रयविक्रयप्रहासानृतबहुभाष णचौर्यादिव्यसनपर्यंकशयनदंतधावनकरंभकुलित्थकोद्रवचणकमसुरवृताकक्षारलवणकोरदूषकमधुमाषमांसमद्यपरान्नोपवा सतैलमैथुनानिवर्जयंतौ दधिघृतपयोमिश्रंहविष्यान्नंदिवैवसकृद्भुंजीयाताम् । श्राद्धकर्तातुश्राद्धशेषंमाषाद्यन्नंभुंजीत । व्रतलोपेव्रात्यैःसहसंवेशनेवाउपोष्यत्वमग्नेव्रतपाइत्यृचाज्याहुतिंजुहुयात् । त्वमग्नइत्यस्यवत्सोग्निर्गायत्री व्रतलोपजनितदोषप रिहारार्थमाज्यहोमेविनियोगः । ॐ त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा । त्वंयज्ञेष्वीड्यःस्वाहा । व्रतपायाग्नयइदं० । यद्वा निर्वापादिपूर्वकंव्रतपायाग्नयेपार्वणस्थालीपाकेनसमानतंत्रंचरुंप्रधानात्पूर्वंजुहुयात् । ततःप्रतिपदिप्रातरौपासनंहुत्वाग्निंपरि समुह्यपरिस्तृणीयात् । तच्चेत्थं । अग्न्यायतनादष्टांगुलपरिमितेदेशेऐशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनपाणिनात्रिः परिमृज्यपूर्वमुपरिनिहितदर्भैर्दशांगुलमितेदेशेप्राच्यादिषुपरिस्तृणीयात् । तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः अवाच्यामु

[1] करंभोदधिसक्तवः ।

दीच्याचप्रागग्राः पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणंउत्तरपरिस्तरणंतुतदग्रयोरधस्तात् । तेचदर्भाअनियतसंख्याएकैकस्यांदिशिचत्वारश्चत्वारइत्येवंषोडशवा । ततोग्नेर्दक्षिणतोब्रह्मासनार्थमुत्तरतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भानास्तृणीयात् । अग्नेरीशानीतस्त्रिरंभसापरिषिच्यउत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेण चरुस्थालीप्रोक्षण्यौदर्वीस्रुवौप्रणीताज्यपात्रेइध्माबर्हिषीशूर्पकृष्णाजिनेउलूखलमुसलेचेतिद्वेद्वेउदगपवर्गप्राक्संस्थंचन्युब्जान्यासादयेत्[1] । आज्यमात्रहोमेतुप्रोक्षणीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषीचेत्येतावतामेवासादनम् । ततःप्रोक्षणीपात्रमुत्तानंकृत्वातत्रानंतर्गर्भित साग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधायशुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वाइध्मंचविस्रस्यसर्वाणिपात्राणित्रिःप्रोक्षेत्[3] । उत्तानेनतुहस्तेन कर्तव्यंप्रोक्षणंभवेत् । अवाचीनेनहस्तेनकर्तव्यस्यादवोक्षणम् । मुष्टीकरोतियत्तोयमभ्युक्षणमितिस्मृतम् । ताअपःकिंचित्कमंडलौक्षिपेदित्येके । ततोयथोक्तलक्षणमीशानदिगवस्थितंब्रह्माणमस्मिन्कर्मणिब्रह्माणंत्वामहंवृणइतितत्पाणिंपाणिनागृहीत्वावृणुयात् । ततोब्रह्मावृतोस्मीत्युक्त्वाप्राङ्मुखोयज्ञोपवीत्याचम्यतीर्थेनप्रविश्यसमस्तपाण्यंगुष्ठोभूत्वाग्रेणाग्निंपरीत्यदक्षि

---

१ पात्रासादनाज्याधिश्रयणस्रुगादिमार्जनरज्जुप्रहरणानीच्छातइत्युक्तत्वात्कृताकृतानीतिज्ञापयति । पूर्णपात्रनिधानमाज्यस्योत्पवनंचनित्यमिति वृत्तिकृदाशयः । २ अनतर्गर्भिणसाग्रकौशद्विदलमेवच । प्रादेशमात्रविज्ञेयपवित्रयत्रकुत्रचित् । ३ प्रोक्तप्रोक्षणमुत्तलेनतदवाचीनेनचावोक्षण तिर्यक्स्यात्परिषेचनचविहितपर्युक्षणंमुष्टिनाइतिप्रयोगचूडामणि. । ४ तीर्थेनप्रविश्येत्यत्रतीर्थप्रणीतापश्चिमदेश. । भगवान्—तत्पाणिंपाणि

णतउदङ्मुखःस्थित्वाआसनार्थंदर्भेषुदक्षिणभागस्थमेकंदर्भमंगुष्ठानामिकाभ्यांगृहीत्वा निरस्तःपरावसुरितिनैर्ऋत्यांनिरस्यापः स्पृष्ट्वाइदमहमर्वावसोःसदनेसीदामीत्युक्त्वोदङ्मुखएववामोरूपरिदक्षिणपादंसंस्थाप्योपविश्यगंधाक्षतादिभिरर्चितःसन्ब्र ह्मांजलिकृतोजपेत् ॐ बृहस्पतिर्ब्रह्माब्रह्मसदनआशिष्यतेबृहस्पतेयज्ञंगोपाय(सयज्ञंपाहिसयज्ञपतिंपाहिसमांपाही)तिजपित्वा सदायज्ञमनाएववर्तेत । ततोयजमानःप्रणीतापात्रमग्नेःप्रत्यङ्निधायतत्रप्रागग्रेपवित्रेनिधायोत्पूताभिरद्भिस्तत्पात्रंपूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य ब्रह्मन्नपःप्रणेष्यामीतिपृच्छेत् । ततोब्रह्माभूर्भुवःस्वर्बृहस्पतिप्रसूतः ॐ प्रणयेत्यनुजानाति । कर्तापूर्ण पात्रंमुखसममुद्धृत्याग्नेरुत्तरतोदर्भेषुनिधायतेपवित्रेगृहीत्वान्यैर्दर्भैराच्छादयेत् । ततःप्रत्यगग्नेःकुशेषुशूर्पंनिधायतत्रप्रागग्रेप वित्रेनिधाय अग्नयेत्वाजुष्टंनिर्वपामि इतिमंत्रावृत्त्याव्रीहीणांयवानांवाचतुरश्चतुरोमुष्टीन्निरुप्याग्नीषोमाभ्यांत्वाजुष्टंनिर्वपा

---

नागृह्यब्रह्माणवरयेद्बुधः । द्वितीययाविभक्त्याथनामोद्दिश्यवृणेइति । उक्तोवृतोस्मीति वदन्नग्रेणाग्निपरीत्यच । ( परीत्येत्यग्निहोमकर्त्रोर्मध्येनद क्षिणेनपादेनदक्षिणाऽतिक्रम्येति सं० र० ) तस्मिन्नुदङ्मुखःस्थित्वादक्षिणेचासनेतृणम् । अंगुष्ठानामिकाभ्यांतुसमादायनिरस्यच । निरस्तइत्य नेनैवतत्प्रत्यग्दक्षिणांदिशम् । अपःस्पृष्ट्वेदमहमित्युपस्पृश्यतृणेतुसः । समस्तपाण्यंगुष्ठश्चदक्षिणेपर्युपस्थितः । अत्रवामोरूपर्यकस्थितदक्षिणपाद इतिव्याख्येयम् । अत्रोपवेशनानंतरंसमस्तपाण्यंगुष्ठत्वेनब्रह्मणइतिभगवन्मतेविशेषः । कृताकृतमिदं—निरासोपवेशब्रह्मजपप्रायश्चित्तहोमसं स्थाजपेतिपंचानामेवकर्मणांब्रह्मणोनियतत्वात् प्र० पा० । १ 'यज्ञंगोपायेत्येपजप.सर्वयज्ञतंत्रेपु' इति सूत्रात् यज्ञंगोपायेत्यंतएवायंमंत्रइति प्रमाणविदः । तदग्रिमश्चिह्नितोभागःप्रचुरप्रचारोप्यप्रामाणिकइतिहेयएव ।

मीतितथैवनिरुप्यतेपवित्रेव्रीहीणामुपरिनिधायोत्पूताभिरद्भिरग्नयेत्वाजुष्टंप्रोक्षामीतिनिर्वापसंख्ययोत्पूताभिरद्भिः प्रोक्षेत् । एवमग्नीषोमाभ्यांत्वाजुष्टंप्रोक्षामीतितथैवप्रोक्षेत् । दर्शेतुअग्नीषोमस्थानेइंद्राग्निभ्यांत्वेत्यादिनिर्वापेप्रोक्षणेचविशेषः । एवं नाममंत्रकहोमेनिर्वापःप्रोक्षणंचयथाप्रधानदैवतंदेवतानामग्रहणेनकार्यम् । समंत्रकहोमेतुश्रवणाकर्मादौतूष्णींचतुरश्चतुरो मुष्टीन्निर्वपेत्प्रोक्षेच्च । ततःपात्राणामुत्तरतःप्राग्ग्रीवमास्तीर्णेऊर्ध्वलोम्निकृष्णाजिनेनिहितेउलूखलेमुसलेनपत्न्यवहत्यशूर्पेणतु षादीन्संशोध्यत्रिःशुक्लीकुर्यात् । तांस्त्रिःप्रक्षालितान्पृथक्पात्रएकपात्रेवाअविदग्धमनवस्रावितमंतरूष्मपक्वंसुशृतंचरुंपचेत् । ततःपवित्रेआज्यपात्रेनिधायतत्पात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्य अग्नेरुत्तरतःस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तर णाद्बहिर्निरुह्यतेष्वाज्यपात्रमधिश्रित्यज्वलतादर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यपुनर्ज्वलता तेनैवदर्भोल्मुकेनचरुणासहाज्यंत्रिःपर्यग्निकृत्वातदुल्मुकमपास्यापःस्पृष्ट्वातत्रस्थमेवाज्यं । सवितुष्ट्वाहिरण्यस्तूपःसवितापुर उष्णिक् । आज्योत्पवनेविनियोगः । ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिरितिमंत्रेणैकश्रु त्योच्चारितेनैकवारंद्विस्तूष्णींउत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोरसंसृष्टगृहीताभ्यामुदगग्राभ्यांपवित्राभ्यांप्रागुत्पूय तेपवित्रेअद्भिःप्रोक्ष्याग्नौप्रहरेत्तूष्णीम् । (स्कंदायस्वाहेतिमंत्रेणेतिकेचित्[1]) । अथाग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभूमिं प्रोक्ष्यतत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्यतस्यांबर्हिःप्रागग्रमुदगपवर्गमविरलमास्तीर्यतस्मिन्नाज्यपात्रंनिधायस्रुवादिसंमार्ज

१ अनाकरत्वादनाहुतित्वाच्चस्कंदायस्वाहेतीदंनिर्मूलम् ।

येत् । तद्यथा । दक्षिणेनहस्तेनस्रुक्स्रुवौगृहीत्वासव्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्य स्रुचंनिधायस्रुवंवामहस्तेगृहीत्वा
दक्षिणहस्तेनस्रुवस्यबिलंदर्भाग्रैःप्रागादिप्रागपवर्गंत्रिःसंमृज्याधस्ताद्दर्भाग्रैरेवाभ्यात्मंबिलपृष्ठंत्रिःसंमृज्य ततोदर्भाणांमूलैर्द
डस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिःसंमृज्याद्भिःप्रोक्ष्यस्रुवंनिष्टप्याज्यस्थाल्याउत्तरतःस्रुगसंसृष्टंनिधायोद
कंस्पृष्ट्वा तैरेवदर्भैर्जुहूंचैवमेवसंमृज्यस्रुवादुत्तरतोनिधाय दर्भानद्भिःक्षालयित्वाग्नावनुप्रहरेत् । ततःशृतंचरुंस्रुवगृहीतेनाज्ये
नाभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येननीत्वाज्याद्दक्षिणतोबर्हिंषिसांतरमासाद्यपुनरप्यभिघार्यनवाभिघार्य हविःपृथक्करणा
यपात्रांतरंचर्वाज्ययोर्मध्येनिधायैकादशांगुलिमितेदेशेगंधाक्षतपुष्पैरग्निंसमंत्रमर्चयेत् । तत्रमंत्रौ । विश्वानिनइतितिसृणा
मात्रेयोर्वसुश्रुतोग्निस्त्रिष्टुप् । अभ्यर्चनेविनियोगः । ॐ विश्वानिनोदुर्गहाजातवेदः । ॐ सिंधुंननावादुरितातिपर्षि ।
ॐ अग्नेअत्रिवन्नमसागृणानः । ॐ अस्माकंबोध्यविताततूनां । ॐ यस्त्वाहृदाकीरिणामन्यमानः । ॐ अमर्त्यमर्त्योजोह
वीमि । ॐ जातवेदोयशोअस्मासुधेहि । ॐ प्रजाभिरग्नेअमृतत्वमश्यां । ततःकृतप्रणतिमुद्रोऽग्निंप्रार्थयेत् । ॐ यस्मैत्वंसु
कृतेजातवेदउलोकमग्नेकृणवःस्योनम् । अश्विनंसपुत्रिणंवीरवंतंगोमन्तंरयिंनशतेस्वस्ति । ततआत्मानंचालंकृत्यहस्तंप्रक्षाल्य
इध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादाय मूलमध्याग्रेषुस्रुवेणत्रिरभिघार्यमूलमध्ययोर्मध्यभागेगृहीत्वा । अयंतेवा
मदेवोजातवेदाअग्निस्त्रिष्टुप् । इध्महवनेविनियोगः । ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रज
यापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहाइतीध्ममग्नावाधाय जातवेदसेअग्नयइदंनममेतित्यजेत् । ततःस्रुवेणाज्यमादायाग्ने

रायतनस्यवायव्यकोणमारभ्याग्नेयकोणपर्यंतंप्रजापतयइतिमनसास्मरन्स्वाहेत्युच्चार्यनैरंतर्येणाज्यधारामग्नाविध्मदारूपरिहु
त्वा । पुनराज्यमादायाग्नेरायतनस्यनैर्ऋत्यकोणतईशानीपर्यंतंतथैवहुत्वात्यक्त्वाच , स्रुवेणाज्यमादायाग्नयेस्वाहेत्यग्नेरुत्तरपा
र्श्वेपूर्वभागेहुत्वा । पुनराज्यंसोमायस्वाहेत्यग्निदक्षिणपार्श्वेतत्समप्रदेशेहुत्वा । पूर्वनिहितपात्रेचरुमुद्धृत्यपृथक्कृत्यइदमग्नयेइ
दमग्नीषोमाभ्यामितिचरुभागद्वयमुत्तरसंस्थमभिमृश्यावदानधर्मेणजुहुयात् । एवंनाममंत्रकहोमेयथादैवतंविभक्तस्यचरो
रभिमर्शः । समंत्रकहोमेतुनविभागोनाभिमर्शश्च ॥ ॥ अथावदानधर्मः ॥ स्रुवेणस्रुच्याज्यमुपस्तीर्यप्रथमप्रधानदेवताच
रुभागमध्यादंगुष्ठपर्वमात्रंतिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शमकुर्वन्नवदायदर्व्यामोप्यततश्चरुपूर्व
भागंप्रागग्राभिस्ताभिस्तथैवावदायदर्व्यामोप्यपात्रस्थंहविरभिघार्यदर्वीस्थमवत्तंचाभिघार्यविधूमज्वालाग्नौ अग्नयेस्वाहेत्या
ज्यभागयोर्मध्यदेशेतत्प्रत्यग्देशेवाऽऽच्छादयन्निवदर्व्यापार्श्वेनहुत्वाअग्नयइदंनममेतित्यक्त्वा पुनःपूर्ववदुत्तरहविर्भागादव
दाय अग्नीषोमाभ्यांस्वाहेतिपूर्वाहुतेःप्राग्भागेहुत्वाग्नीषोमाभ्यामिदंनममेतित्यजेत् । पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वा
र्धात्पश्चार्धाच्चत्रिर्हविषोवदायाभिघार्यजुहुयात् । पंचावत्तिनस्तु । जामदग्न्यावत्सविदावार्ष्टिषेणास्तथैवच । भार्गवच्याव
नाऔर्वाःपंचावत्तिनईरिताः । दर्शेतुअग्नीषोमस्थानेइंद्राग्निभ्यांस्वाहाइंद्राग्निभ्यामिदंनममेतिविशेषः । पुनर्दर्व्यामुपस्ती
र्यप्रथमहविर्भागस्योत्तरार्धतःपूर्वावदानतोभूयोनूचीनाभिरेवांगुलीभिरवदायदर्व्यामोप्यद्वितीयहविर्भागस्यतथैवावदाय ।

पंचावत्तीतुहविर्भागद्वयेपिउत्तरार्धात्पूर्वार्धाच्चद्विर्द्विरवदायपात्रस्थमनभिघार्यावत्तंतुद्विरभिघार्य । यदस्येतिहिरण्यगर्भोग्निः स्विष्टकृदतिधृतिः । स्विष्टकृद्धोमेविनियोगः । ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं । अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वं स्विष्टंसुहुतंकरोतुमे । अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्त्समर्धयस्वाहेतिएकश्रु त्योच्चार्यअग्नावीशानदेशेजुहुयात् । स्विष्टकृतेग्नयइदंनममेतित्यागः । ततोग्नेरुत्तरतःस्थितामिध्मवंधनरज्जुंविस्रस्यरुद्राय स्वाहेतिहुत्वापःस्पृष्ट्वास्रुवेणप्रायश्चित्ताज्याहुतीःसप्तजुहुयात् । तत्रमंत्राः । अयाश्चेतिविमदोयाअग्निःपंक्तिः । प्रायश्चित्ता ज्यहोमेविनियोगः । ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि । अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजं स्वाहाइत्येकश्रुत्याजुहुयात् । अयासेग्नयइदंनमम ॥ अतोदेवामेधातिथिर्देवागायत्री । प्रायश्चित्ताज्यहोमेविनियोगः । सर्वत्रप्राग्वत् । ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधामभिःस्वाहा । देवेभ्यइदं० ॥ इदंविष्णुर्मे धातिथिर्विष्णुर्गायत्री । प्रायश्चित्ताज्यहोमेवि० । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूढमस्यपांसुरेस्वाहा । विष्ण वइदं० । व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयः अग्निवायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णि

---

१ संग्रहे—मध्ययोस्तूदगर्धाभ्यांसकृत्प्रागर्धयोरपि । अवद्यचततःपंचावत्तित्वस्विष्टकृद्विधौ । २ अपःस्पृष्ट्वेति—छेदेभेदेनिरासेचखननेपि तृरक्षसोः । रौद्राभिचारनिर्ऋतिष्वपांस्पर्शइतिस्मृतः । रौद्रपित्र्यासुरान्मंत्रांस्तथाचैवाभिचारकान् । व्याहृत्यालभ्यचात्मानमपःस्पृष्ट्वान्यदाच रेत् । यत्ररौद्रादिपाठोत्तरंकर्मनोक्तंतत्रनोदकस्पर्शइत्याचाररत्नम् ।

गनुष्टुब्बृहत्यश्छंदांसि प्रायश्चित्ताज्यहोमेवि० । ॐ भूःस्वाहा । अग्नयइदं० । ॐभुवःस्वाहा । वायवइदं० । स्वःस्वाहा । सूर्यायेदं० । ॐ भूर्भुवःस्वःस्वाहा । प्रजापतयइदं० ॥ ७ ॥ ततोब्रह्माकर्तारंपरीत्याग्नेर्वायव्यदेशेतिष्ठन्नेताएवसप्ताज्याहुतीर्जुहुयात् । त्यागंयजमानएवकुर्यात् । ततस्तत्रस्थोब्रह्मैवमंत्रविपर्यासादिनियतनिमित्तेसति[1] । अनाज्ञातमितिमंत्रद्वयस्य हिरण्यगर्भोग्निरनुष्टुप् । ज्ञाताज्ञातदोषनिवर्हणार्थप्रायश्चित्ताज्यहोमेवि० । ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु । अग्ने तदस्यकल्पयत्वँहिवेत्थयथातथँस्वाहा । यजमानः । अग्नयइदं० । ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः । अग्नेतदस्य कल्पयत्वँहिवेत्थयथातथँस्वाहा । यजमानः । अग्नयइदं० । यत्पाकत्रेत्यस्यास्यत्रितोग्निस्त्रिष्टुप् । ज्ञाताज्ञात० प्रायश्चित्ताज्यहोमेवि० । ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः । अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऽऋतुशो यजातिस्वाहा । अग्नयइदं० । यद्वोदेवाअभितपामरुतस्त्रिष्टुप् । मंत्रविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमेविनियोगः । ॐ यद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनं । अरायोअस्माँऽअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वाहा । यजमानः । मरुद्भ्यइदं० । स्कन्नभिन्नाद्यनियतनिमित्तेसतिवक्ष्यमाणप्रकारेणतत्तत्प्रतिपदोक्तजपहोमान्कुर्याद्ब्रह्मा । ब्रह्मणोऽभावे यजमानएवैतान्प्रायश्चित्तादीन्कृत्वान्यस्मैवरंदद्यात् । ततोयजमानः सर्वकर्मप्रपूरणींभद्रद्रव्यदांपूर्णाहुतिं[2]जुहुयात् । तद्यथा ।

१ यद्यप्यत्रैवादौमरुद्देवत्याआहुतिर्बहुत्रप्राचीनपुस्तकेषुदृश्यतेतथाप्यन्वाधानक्रमानुसारेणयथास्थानंयोजितास्ति । २ विवाहादिक्रियायांच शालायांवास्तुपूजने । नित्यहोमेवृषोत्सर्गेनपूर्णाहुतिरिष्यते ।

स्रुवेणाज्यंगृहीत्वा स्रुचंसमविलांपूरयित्वा तस्यांस्रुवमूर्ध्वविलंनिधायपुनरधोविलंनिक्षिप्य स्रुवाग्रेकुसुमाक्षतान्निधायसव्य पाणिनास्रुक्स्रुवमूलेधृत्वादक्षिणपाणिनास्रुक्स्रुवौशंखमुद्रयागृहीत्वातिष्ठन्त्समपादऋजुकायःस्रुवाग्रन्यस्तदृष्टिःप्रसन्नात्मा । समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवआपस्त्रिष्टुवंत्याजगती पूर्णाहुतिहोमेविनियोगः । ॐ समुद्रादूर्मिर्मधुमाँऽउदारदु पांशुनासमंमृतत्वमानट् । घृतस्यनामगुह्यंयदस्तिंजिह्वादेवानाममृतस्यनाभिः । वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधा रयामानमोभिः । उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् । चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्ता सोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँऽआविवेश । त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् । इंद्रऽएकंसूर्यऽएकंजजानवेनादेकंस्वधयानिष्टतक्षुः । एताअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे । घृतस्यधा राअभिचाकशीमिहिरण्ययोवेतसोमध्यआसां ॥ १ ॥ सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमानाः । एतेअर्षंत्यूर्मयो घृतस्यमृगाइवक्षिपणोरीषमाणाः । सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयंतियह्वाः । घृतस्यधाराअरुषोनवाजीकाष्ठा भिंदन्नूर्मिभिःपिन्वमानः । अभिप्रवंतसमनेवयोषाःकल्याण्य१ःस्मयमानासोअग्निं । घृतस्यधाराःसमिधोनसंतताजुषाणोह र्यतिजातवेदाः । कन्याइववहतुमेतवाउअंज्यंजानाअभिचाकशीमि । यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराअभितत्पवंते । अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त । इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंते । धामंतेविश्वंभुवनम धिश्रितमंतःसमुद्रेहृद्य१ंतरायुषि । अपामनीकेसमिथेयआभृतस्तमश्यामधुमंतंतऊर्मिंस्वाहा ॥ २ ॥ इतिपठन्यवपरिमितां

धारांसंततांस्रुगग्रेणसशेषंहुत्वा अग्नयइदंनममेत्युद्दिश्यत्यक्त्वा । विज्योतिपेत्यस्यजारोवृशोग्निस्त्रिष्टुप् प्राय० । ॐ विज्योतिं षाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा । प्रादेवीर्मायाःसंहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षे । इत्यनेनचतथैवावशिष्टं हुत्वा । अग्नयइदंनममेतित्यक्त्वा । ॐ विश्वेभ्योदेवेभ्यःस्वाहेतिसंस्रावंहुत्वा । विश्वेभ्योदेवेभ्यइदं० । ततस्तंडुलकणान्स मिद्दर्भशकलान्यद्भिःप्रोक्ष्याग्नौप्रहरेत् । पूर्णाहुत्याद्येतदंतंसमूलंप्रयोगपारिजातकारेणलिखितमपीदानींशिष्टानकुर्वंति । अथा वभृथस्थानीयपूर्णपात्रजलेनमार्जनंकुर्यात् ॥ तद्यथा—पूर्वासादितंपूर्णपात्रमास्तीर्णेवर्हिंपिदक्षिणपाणिनानिधायतत्रगंगादि पुण्यनदीःस्मरन्दक्षिणपाणिनास्पृशन् । पूर्णमसिपूर्णमेभूयाःसुपूर्णमसिसुपूर्णमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वमेभूयाः । अक्षितिरसिमामेक्षेष्ठाःइतिजपित्वाकुशाग्रैःप्रागादिपंचदिक्षुजलंमंत्रैर्यथालिंगंसिंचेत् ॥ तेचमंत्राः—प्राच्यांदिशिदेवाऋत्वि जोमार्जयंतां । दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां । (अपउपस्पृश्य) प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां । उदीच्यां दिश्यापओषधिवनस्पतयोमार्जयंतां । ऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतामित्येकश्रुत्यापठन्प्रतिदिशंसिक्त्वाकु शाग्रैःस्वशिरसिमार्जयेत् ॥ तत्रमंत्राः—आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् मार्जनेवि० । ॐ आपोअस्मान्मातरःशुंधयं तुघृतेननोघृतप्वःपुनंतु । विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि । इदमापःसिंधुद्वीपआपोनुष्टुप् मार्जनेवि० । ॐ इदमापःप्रवहतयत्किंचदुरितंमयि । यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं । सुमित्र्यानआपओषधयःसंतु । इत्येतैर्मंत्रांते मार्जनंकृत्वा दुर्मित्र्यास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मि इतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् ॥ ततोब्रह्मा यज

मानवामपार्श्वेस्थितपत्न्यंजलौपूर्णपात्रस्थजलं । ॐ माहंप्रजांपरासिचंयानःसयावरीःस्थन । समुद्रेवोनिनयानिस्वंपाथोअपी
थेतिमंत्रमेकश्रुत्यापत्न्यावाचयन्स्वयंवापठन्प्रत्यङ्मुखंनिषिच्यांजलिस्थजलैःपापापनोदार्थमात्मानंयजमानंपत्नींचप्रोक्षेत् ।
पत्नीतज्जलंवर्हिषिनिषिंचेत् । अथवायजमानएवस्ववामपाणावुत्तानेवर्हिर्निधाय तत्रदक्षिणपाणिनापूर्णपात्रमादाय माहंप्र
जामित्यनेनतज्जलंप्रत्यङ्मुखंनिषिच्य ताआपःसमुद्रंगच्छंतीतिध्यात्वापाणिस्थजलैरात्मानंपत्नींचप्रोक्षेत् । ततःकर्ताग्नेर्वाय
व्यदेशेस्थितःसंस्थाजपेनोपतिष्ठेत ॥ तद्यथा—अग्नेत्वंनइतिचतसृणांगौपायनालौपायनावावंधुःसुवंधुःश्रुतवंधुर्विप्रवंधुश्चै
कर्चाऋषयः अग्निर्देवताद्विपदाविराट्छंदः अग्न्युपस्थानेवि० । ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्व
सुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः । सनोवोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् । तंत्वाशोचिष्ठदीदिवःसुम्नायनून
मीमहेसखिभ्यः । ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च । यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः । अग्नयेनमः । स्वस्ति । श्रद्धां
मेधांयशःप्रज्ञांविद्यांवुद्धिंश्रियंवलम् । आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन । ततोब्रह्मापितत्रैवस्थित्वाएतैरेवोपतिष्ठेत ।
ततःकर्ताआचारात् । मानस्तोकइतिकुत्सोरुद्रोजगती । विभूतिग्रहणेवि० । ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानो
अश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे । इतिस्रुवविलपृष्ठेनविभूतिंगृहीत्वा । ॐ त्र्यायुषं
जमदग्नेरितिललाटे । कश्यपस्यत्र्यायुषमितिकंठे । अगस्त्यस्यत्र्यायुषमितिनाभौ । यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ।
तन्मेअस्तुत्र्यायुषमितिवामस्कंधे । सर्वमस्तुशतायुषमितिशिरसिधारयेत् । केचनोपस्थानात्पूर्वंविभूतिधारणमाहुरिति ।

ततःकर्तापरिस्तरणानिविसृज्याग्निंपरिसमुह्यपरिपिच्यविश्वानिनइत्यर्चयित्वानत्वाचपुष्पादिभिरलंकृत्यनैवेद्यंतांवूलंचनिवे
द्य ब्रह्मणेयथोक्तदक्षिणां दक्षिणाभावेहुतशेषंघृतादिसहिरण्यंदत्वा ब्रह्माभावेन्यस्मैब्राह्मणायदत्वा पात्राणिप्रक्षाल्यपूर्वक्रमे
णद्वंद्वशउत्सृज्ययस्यस्मृत्येतिश्रीविष्णुंनत्वाचम्यधृतपवित्रंग्रथिंविस्रस्यशुद्धदेशेक्षिपेत् । दर्शेतुअग्नीषोमस्थानेइंद्राग्नी इतर
त्सर्वंसमानं तच्चदर्शितमेव । सद्यस्कालायांपौर्णमास्याममावास्यांचोभयत्रवायागदिनएवप्रातर्होमानंतरमन्वाधायेध्मावर्हि
षीसन्नह्येष्टिप्रयोगंकुर्यात् ॥ इतिश्रीरामेश्वरसूरिसूनुनारायणभट्टविरचितेप्रयोगरत्नेपार्वणस्थालीपाकप्रयोगःसंपूर्णः ॥
अथेष्टिप्रायश्चित्तानि ॥ प्रमादादन्याग्नौचेत्स्वयंयजेतस्वाग्नावन्योवायजेतचेत्तदाप्रायश्चित्तंपथिकृच्चरुहोमंकृत्वापुनस्तृती
यादितिथिषुअन्वाधानपूर्वकमिष्टिंकुर्यात् । अतिपन्नेष्टौविशेषः । अन्वाधानात्पूर्वंचेत्स्त्रीरजस्वलाभवतितदापंचमादिदिने
सद्यस्कालान्वाधानपूर्वकंजुहुयात् । अन्वाधानात्परतोरजस्वलाचेत्तांगृहांतरेस्थापयित्वाप्रतिपद्येवजुहुयात् । सूतकदिनेष्टि
रतीताचेदागामिपर्वपूर्वतिथिषुद्वितीयांचतुर्थीनवमींचतुर्दशींचविहायान्यासुतिथिषुतामतिपन्नेष्टिंकुर्यात् । तास्वप्यतिक्रमेनं
तरेपर्वणिपथिकृद्यागपूर्वकमतिपन्नयागंकृत्वाततपर्वणोन्वाधानंकुर्यात् । तत्राप्यतिक्रमेऽतिपन्नस्यपादकृच्छ्रप्रायश्चित्तंकृत्वाका
लप्राप्तांप्रतिपदिष्टिंसद्यस्कालान्वाधानपूर्वकंकुर्यात् । द्वितीयपर्वातिक्रमेपूर्ववदागामिपर्वमध्येकुर्यात् । तत्राप्यतिक्रमेतत्पर्व
णिपथिकृत्पूर्वकंकार्यं । पथिकृदिष्टिंस्वतंत्रांप्राक्पर्वेष्ट्यासमानतंत्रांवाकुर्यात् । तत्राप्यतिक्रमेतृतीयप्रतिपदिअतिपन्नद्वयप्रा
यश्चित्तंकृच्छ्रार्धंचरित्वाप्राप्तकालामिष्टिंकुर्यात् । तत्राप्यतिक्रमेआगामिपर्वपर्यंतंपूर्वोक्तवत्कुर्यात् । तत्राप्यतिक्रमेस्मार्ता

ग्निर्नश्यति तेनविधिनापुनःसंधानंकृत्वाप्राप्तेपर्वणितदिष्टिंकुर्यात् ॥ अन्वाधानेष्टिमध्येचंद्रग्रहणंचेदिष्टिदिनेहविरासादनां तंकृत्वा अन्वाधानेष्टिमध्येचंद्रग्रहदोषप्रायश्चित्तार्थमाज्यहोमंकरिष्यइतिसंकल्प्य । नवोनवोभवतीत्यस्यसूर्यासावित्रीचंद्र मास्त्रिष्टुप् । अन्वाधानेष्टिमध्येचंद्रग्रहणप्रत्यवायपरिहारार्थमाज्याहुतिहोमे० । ॐ नवोनवोभवतिजायमानोह्नांकेतुरुषसा मेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुःस्वाहा । ॐ यमादित्याअंशुमाप्याययंतियमक्षितमक्षितयः पिबंति । तेनंनोराजावरुणोबृहस्पतिराप्याययंतुभुवनस्यगोपाःस्वाहा । आभ्यांद्वेप्रकृताज्येनैवस्रुवाहुतीहुत्वाअग्न्यलंकरणादि तंत्रंकुर्यात् । सूर्यग्रहणंचेद्धविरासादनांतेतिस्रआज्याहुतयः ॥ ताश्च । चित्रंदेवानमित्यस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् । अन्वा धानेष्टिमध्येसूर्यग्रहणप्रत्यवायपरिहारार्थआज्याहुतिहोमेवि० । ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चस्वाहा । उदुत्यमित्यस्यकाण्वःप्रस्कण्वःसूर्योगायत्री । सूर्यग्रहणप्रत्य० विनि० । ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः । दृशेविश्वायसूर्यस्वाहा । उद्वयमित्यस्यकाण्वःप्रस्कण्वःसूर्योनुष्टुप् । सूर्यग्र हणप्रत्यवा० विनि० । ॐ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरम् । देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमंस्वाहा । एतैर्हुत्वाअ ग्न्यलंकरणादितंत्रशेषंसमापयेत् । इदंप्रयोगपारिजातेसंग्रहोक्तंप्रायश्चित्तं ॥ ॥ ग्रंथांतरेतुशौनकोक्तमुक्तंतद्यथा । इष्टिदिनेह विरासादनांतेकृतेन्वाधानेष्टिमध्येचंद्रग्रहणजनितवैगुण्यपरिहारार्थशौनकोक्तामाज्याहुतिमुपस्थानंचकरिष्येइतिसंकल्प्य । अत्राहगोरित्यस्यराहूगणोगोतमश्चंद्रमागायत्रीइष्टिमध्ये० । ॐ अत्राहगोरमन्वतनामत्वष्टुरपीच्यं । इत्थाचंद्रमसोगृहेस्वाहा ।

शम्यापरिमितदेशाद्बहिरायतनाद्गतेऽग्नौपथिकृतेऽग्नयेचरुंनिर्वपेत् । अशक्तौद्वादशगृहीतेनाज्येनस्रुचंपूरयित्वाअग्नयेपथिकृते स्वाहेतिपूर्णाहुतिंजुहुयात् स्रुवाहुतिंवा । तदुक्तंकारिकायाम्—अतिक्रांतोयदाशम्यापरासमनलोभवेत् । चरुःपथिकृते कार्यःपूर्णाहुतिरथापिवा । पूर्णाहुतिलक्षणंकारिकायामुक्तम्—आज्यंद्वादशकृत्वस्तुगृहीत्वापूरयेत्स्रुचम् । तयाचाज्याहुतिः कार्यासापूर्णाहुतिरिष्यते । स्रुवपूर्णाहुतिर्वास्यादित्येकेयाज्ञिकाविदुः । यद्यग्निःस्वयंज्वलतितदा । उद्दीप्यस्वजातवेदोपघ्नं निर्ऋतिंमम । पशूंश्चमह्यमावहजीवनंचदिशोदिश । मानोहिंसीजातवेदोगामश्वंपुरुषंजगत् । अबिभ्रदग्नआगहिश्रिया मापरिपातय । इतिमंत्राभ्यांसमिद्धयमग्नावादध्यात् ॥ इति ॥ ॥ अग्नेश्चमलमूत्राद्युपघाते । पुनस्त्वादित्यारुद्रावसवःसमिं धतांपुनर्ब्रह्माणोवसुनीथयज्ञैः । घृतेनत्वंतनुवोवर्धयस्वसत्याःसन्तुयजमानस्यकामाः । इतिसमिधमादध्यात् । तदुक्तंकारिका याम्—स्वयंज्वलेच्चेदुदीप्यस्वेतिद्वाभ्यांसमिद्धयम् । आधेयमुपघातेतुपुनस्त्वेत्यनयासमित् । हूयमानाहुतिर्यदिबहिःस्कंदे त्तदादेवांजनमित्यनेनतामभिमृश्यद्रप्सश्चस्कंदेत्याज्याहुतिंजुहुयाद्व्याहृतिभिश्च । ततःस्कन्नमनलेक्षिपेत् ॥ मंत्रौच—देवांज नमगन्यज्ञस्तस्यमाशीरवतुवर्धतां । भूतिर्घृतेनमुंचतुयज्ञोयज्ञपतिमंहसः । भूपतयेस्वाहा । भुवनपतयेस्वाहा । भूतानांपत येस्वाहा । यज्ञस्यत्वाप्रमयोन्मयाभिमयाप्रतिमया । द्रप्सश्चस्कंदप्रथमाँऽअनुद्यूनिमंचयोनिमनुयश्चपूर्वः । समानंयोनिमनुसं चरंतंद्रप्संजुहोम्यनुसप्तहोत्राःस्वाहा ॥ अत्रकारिका—आहुतिर्हूयमानातुवहिःस्कंदेतवैयदा । देवांजनमगन्यज्ञइत्यनेना भिमृश्यतां । द्रप्सश्चेत्याहुतिंहुत्वाप्रक्षिपेदनलेपुनः । देवांजनेतिसर्वत्रस्कन्नंत्वभिमृशेद्धविः । होतव्याज्याहुतिस्तत्रव्याहृ

त्याख्यैःसमुच्चयात् ॥ यागात्प्रागन्वाधाननिर्वापादिपुजातोदेवताव्युत्क्रमोयदाज्ञातस्तदाव्याहृतिभिर्हुत्वाविहितदेवतांयजेत्।
यागादूर्ध्वंदेवताव्युत्क्रमज्ञानेतुव्याहृतिभिर्हुत्वातंयागमावर्तयेत् । यदात्वप्रकृतांकांचिदेवतांयजेत्तदाव्याहृतिभिर्हुत्वाप्रकृत
देवतायैयागमावर्तयेत् ॥ अत्रकारिका—प्राग्यागाद्व्युत्क्रमेज्ञातइदंकृत्वायजेत्तदा। अविज्ञातविपर्यासेविहितांदेवतांस्मरन्।
इष्टवांस्ततऊर्ध्वंतुव्युत्क्रमावगमेसति । प्रायश्चित्तमिदंकृत्वायागंत्वावर्तयेत्तदा । यदात्वविहितांकांचिद्देवतामिष्टवांस्तदा ।
प्रायश्चित्तमिदंकृत्वायागंत्वावर्तयेत्कृतम् । इदंव्याहृतिहोमाख्यं ॥ अन्यान्यपिप्रायश्चित्तानिकारिकायाम्—पवित्रंयदिन
श्येच्चेत्स्यात्पवित्रवतेचरुः। यदाहविरपक्वंस्यात्तेनैवहविषायजेत्। चतुःशरावमात्रंतुपचेद्व्रीहिभिरोदनम्। भोजयेत्तेनचान्ने
नचतुरोब्राह्मणानथ। वहुदग्धमदग्धंवाकिंचिदेवयदाहविः । शिष्टेनेष्ट्वापुनर्यागःस्यादारभ्यादितस्तदा । कृत्स्नंदग्धंयदात
त्स्यात्पुनरुत्पादयेद्धविः। सएवयागःकर्तव्यःपुनर्यागस्तुनेष्यते। मध्यात्पूर्वार्धतोवत्तंयदिदुष्टंहविर्भवेत्। तस्यैवहविषोवद्ये
न्मध्यात्पूर्वार्धतःपुनः। इध्माधानेकृतेदुष्टंप्रधानहविरत्रचेत् । तत्स्थानेजुहुयादाज्यमदुष्टंचजुहोत्यथ । एवंसमाप्ययद्दुष्टं
तदप्सुप्रक्षिपेत्पुनः। अन्वाधानादिकोयागःपुनःकर्तव्यएवतु । प्रागिध्माधानतोदुष्टेप्रधानहविषित्वथ । तद्धविःपुनरुत्पा
द्यपूर्ववत्तत्समापयेत्। अंगानांचेद्धविर्दुष्टंतदप्सुप्रक्षिपेत्पुनः । स्विष्टकृद्धविषांदोषआज्येनैवसमापयेत्। प्रच्युतैस्तुनखैः
केशैःकीटैर्वामेध्यसेविभिः। वसासृक्शुक्रमज्जास्थिमूत्रविट्स्वेददूषकैः। श्लेष्माद्यैरपिवीभत्सैर्दुष्टानिस्युर्हवींषिचेत्। भिन्ना
निचैवसिक्तानिदुष्टानिस्युःक्षिपेज्जले । स्रुक्चेद्भिद्येततर्ह्यन्यामाहृत्यजुहुयाद्धविः । वानस्पत्यानिभिन्नानिप्राग्दंडान्यनले

क्षिपेत् । अन्यच्चाशुचिसंबंधंमृन्मयंभिन्नमेववा । भूमिर्भूमिंतुमंत्रेणप्रक्षिपेदेवतज्जले ॥ मंत्रः—भूमिर्भूमिमगान्मातामातर
मप्यगात् । भूयास्मपुत्रैःपशुभिर्योनोद्वेष्टिसभिद्यतामिति । संसृष्टोयस्यगृह्याग्निरन्यगृह्याग्निनायदि । चरुर्विविचयेकार्यो
यद्वापूर्णाहुतिर्भवेत् । अग्निर्गुणीभवेदेषुविविचित्वादिकोगुणः । चरुःक्षामायकर्तव्योगृहदाहेतुवैभवेत् । शवाग्निनातुसंस
र्गेकुर्वीतशुचयेचरुम् । पचनाग्नेस्तुसंसर्गेसंसर्गायचरुर्भवेत् । वैद्युतेनतुसंसर्गेकुर्यादप्सुमतेचरुं । प्रायश्चित्तचरुस्थानेवापूर्णा
हुतिरिष्यते । पर्वण्यार्त्याश्रुपातेतुकुर्याद्व्रतभृतेचरुम् । समानतंत्रंकुर्वीतपार्वणेनतुकर्मणि । अकृताग्रयणोऽश्नीयान्नवान्नंय
स्तुवैततः । वैश्वानरायकर्तव्यश्चरुःपूर्णाहुतिस्तुवा । द्विषदन्नंयदाभुंक्तेतत्राप्येषचरुर्भवेत् । कपालनाशेप्येषःस्याच्छ्रवणा
कर्मनामभिः । कपालंतद्भवेद्भिन्नंप्रागेवश्रपणाद्यदि । तदातंत्रोक्तमंत्रेणकपालंसंदधात्यथ । अभिन्नोघर्मइत्याभ्यामप्सुत
त्प्रक्षिपेदथ । तच्चेदशुचिसंबद्धमाभ्यामेवक्षिपेज्जले । भिद्येद्यदिपुरोडाशउद्गच्छेदथवायदि । किमुत्पतसिमंत्रेणवर्हिष्येनं
निधायतु । अभिमंत्रयतेतंतुमाहिंसीरितिमंत्रतः ॥ मंत्रस्तु—किमुत्पतसिकिमुत्प्रोष्ठाःशांतःशांतेरिहागहि । अघोरोयज्ञियो
भूत्वासीदसदनंस्वमाहिंसीरिति । श्रूयतेमृतशब्दश्चेद्यजमानेतुजीवति । अग्नयेसुरभिमतेचरुःपूर्णाहुतिस्तुवा । अथयस्यव
धूर्गौर्वाजनयेच्चयमौततः । समरुद्भ्यश्चरुंकुर्यात्पूर्णाहुतिमथापिवा । समारूढसमिन्नाशेपुनराधेयमिष्यते । श्रौतोक्तमविरो
ध्यन्यन्मृग्यंतुशतशस्त्विदम् । प्रायश्चित्तविशेषस्ययत्रनोक्तोभवेद्विधिः । होतव्याज्याहुतिस्तत्रभूर्भुवःस्वरितीहतु । निमि
त्तानंतरंसर्वप्रायश्चित्तंभवेदिह । प्रागेवोत्पद्यतेदोषआज्यसंस्कारतोयदि । प्रायश्चित्तंभवेदाज्यसंस्कारानंतरंतदा । व्युत्क्रमो

देवतानांतुसंकल्पादौभवेद्यदि । मंत्राणांव्युत्क्रमस्तद्वद्धोमादौतुभवेद्यदि । मध्यात्पूर्वार्धतश्चेतिव्युत्क्रमोस्यभवेद्यदि । द्रव्याणांव्युत्क्रमःस्याच्चेत्तथानिर्वपणादिषु । यद्वोदेवाऋचाब्रह्माजुहुयात्तुस्रुवाहुतिम् । यन्मुख्यंस्वगृहेद्रव्यंहोमकर्त्रेददातितत् । यजमानस्तुजुहुयाद्ब्रह्माभावेस्रुवाहुतिम् । कस्मैचिद्ब्राह्मणायास्मिन्पक्षेद्रव्यंददातितत् । होतव्यैकाहुतिश्चात्रव्याहृत्याख्यैः समुच्चयात् । सर्वत्रैवप्रायश्चित्तरूपंजपंहोमंवाब्रह्मैवकुर्यात् । जुहोतिजपतीतिप्रायश्चित्तेब्रह्माणमितिसूत्रकृदुक्तेः । तदभावे तुयजमानःसमानन्यायत्वात् । यत्रस्वकालेकर्माकरणनिमित्तप्रायश्चित्तमुक्तंतस्मिन्प्रायश्चित्तेकृतेतीतंकर्मकार्यंनवेतिमतभेदः। तदुक्तंकारिकायाम् । प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै । कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितः । कर्मसमाप्तिसमयेग लोपेज्ञातेऽज्ञातेवाप्रजापतिःप्रायश्चित्तमाह । प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् । स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिरिति । एवमन्यान्यपिप्रायश्चित्तानिग्रंथांतरतोऽवगंतव्यानि ॥ इतिप्रयोगरत्नेइष्टिप्रायश्चित्तानिनैमित्तिकप्रायश्चित्तानिच ॥

अथसकलकर्मसाधारणपरिभाषा ॥ तत्रकारिका—आज्यैकद्रव्यकेहोमेस्याच्चेदाज्यपरिग्रहः । स्यात्परिस्तरणंतत्र[1]कृताकृतमितिस्थितिः । नोच्चारयतियत्राज्यपदंकर्मसुसूत्रकृत् । अनादिष्टाज्य[2]होमेषुतत्रनित्यापरिस्तृतिः । [3]सर्वस्मिन्पाकयज्ञेतुआज्य

---

१ अत्रपरिस्तरणविकल्प. । २ नित्यमत्रपरिस्तरणम् । ३ चौलादिविवाहांतेषुकर्मसुआज्यभागौनभवत.आज्यग्रहणात् । तेनगृहप्रवेशनीयादावाज्यग्रहणाभावाद्विकल्प.सिद्धः । पाकयज्ञेपुकृताकृतावित्युक्तेपिआज्यभागौहुत्वेतिउत्सर्जनादौस्यादेव । तेनसर्वत्राज्यभागयोर्विकल्प. ।

उपस्थाकर्मकरणंषड्उपांशुप्रयोगतः । जपमुच्चारणंविद्यात्क्त्वर्थमपितद्भवेत् । अर्थतःकार्यलाभश्चेदर्थएवकृतौभवेत् । मंत्रमुच्चारयन्नेवमंत्रार्थत्वेनसंस्मरेत् । शेषिणंतन्मनाभूत्वास्यादेतदनुमंत्रणम् । एतदेवाभिमंत्रस्यलक्षणंचेक्षणादिकम् । अद्भिःसंस्पर्शनाधिक्यात्तदेवाप्यायनंस्मृतम् । उपस्थानंतदेवस्यात्प्रणतिस्थानसंयुतम् । वाह्यंकर्मयदेतेपुकर्मकालेक्रियेतयत् । कर्मणःकरणंतस्यविहितार्थप्रकाशनम् । मंत्रेणकृत्वामंत्रांतेक्रियतेकर्मयेपुतु ॥ तथा—प्राजापत्यमुपांशुस्यान्मध्यंमावित्रमेवच । कृताकृतंब्रह्मवरणंब्रह्माचाज्यस्यसंस्कृतिः । संमार्गःस्रुवदर्व्योश्चआज्यभागौपरिस्तृतिः । व्रीहीणामवघातश्चतंडुलेपुकृताकृतः । द्रवीभूतघृतस्यापिविलापनविधिस्तथेति । अत्रविहितंकर्मपवित्रपाणिःकुर्वीत । यदाहहारीतः—जपहोमहराह्येतेअसुरादिव्यरूपिणः । पवित्रकृतहस्तस्यविद्रवंतिदिशोदश ॥ अत्रिः—उभाभ्यामपिपाणिभ्यांविप्रैर्दर्भपवित्रके । धारणीयेप्रयत्नेनब्रह्मग्रंथिसमन्विते । ब्रह्मग्रंथिलक्षणंगरुडपुराणे—अस्त्यन्योवैष्णवोमार्गोब्रह्मग्रंथिविनिर्मितौ । सकृत्प्रदक्षिणीकृत्यपवित्रमभिधीयते । तद्ब्रह्मग्रंथिमत्प्रोक्तंपवित्रंवेदवेदिभिः । पवित्रकर्तुरभिमुखप्रदेशोब्रह्ममार्गः । पवित्रदर्भसंख्याचतत्रैव—सप्तभिःकुशपिंजूलैःकुर्याद्ब्रह्मपवित्रकम् । पंचभिःक्षत्रियस्यैवचतुर्भिस्तु

---

१ करणवदशब्दंअमन प्रयोगउपांशुरितिवृत्तिः। उपांशुरूपस्योच्चारणस्यलक्षणप्रातिशाख्येभिहित करणवन्ओष्ठव्यापारयुक्तंनतुमनःप्रयोगमात्र तच्चपरैरश्रवणादशब्दंइतिद्वितीयारण्यकेभाष्ये । शनैरुच्चारयेन्मंत्रमीपदोष्ठौप्रचालयेत् । किंचिच्छ्रवणयोग्य स्यादुपांशुःसजप.स्मृतइतिकर्मतत्वदीपिकायाम् ।

तथाविशः । द्वाभ्यांशूद्रस्यविहितमितराणांतथैवच ॥ मार्कंडेयस्तु—चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् । एकैकन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् । सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवा । त्रिभिस्तुशांतिकेकार्यपौष्टिकेपंचभिस्तथा । चतुर्भिरभिचाराख्येविप्रःकुर्यात्पवित्रकम् । हेमपवित्रंविशिष्यप्रशस्तमुक्तंहेमाद्रौ—अन्यानिचपवित्राणिकुशदूर्वात्मकानिच । हेमात्मकपवित्रस्यह्येकांनार्हंतिवैकलामिति । द्रव्यभेदेनाहुतिप्रमाणभेदउक्तःसिद्धांतशेखरे—कर्षप्रमाणमाज्यंस्यान्मधुक्षीरंचतत्समम् । तंडुलानांशुक्तिमात्रंपायसंप्रसृतेःसमम् । कर्षमात्राणिभक्ष्याणिलाजामुष्टिमितामताः । अन्नंग्राससमंग्राह्यंशाकंग्रासार्धमात्रकम् । मूलानांतुत्रिभागःस्यात्कंदानामष्टमोंशकः । इक्षुःपर्वप्रमाणःस्यादंगुलद्वितयंलता । प्रादेशमात्राःसमिधोव्रीहीणांमंजरीसमा । तिलसक्तुकणादीनांमृगीमुद्राप्रमाणतः । पत्रपुष्पफलानांतुस्वमानाहुतिरिष्यते । चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः । हरिमंथसमाःप्रोक्तागुग्गुलुर्बदरीसमः । आहुतीनामिदंमानंकथितंवेदवेदिभिरिति । हरिमंथश्चणकः । मृगीमुद्रालक्षणमुक्तंतत्रैव—स्यात्रिमुद्रामृगीमुद्राहोमेसर्वफलप्रदेति । अरणिजन्यादेरग्नेरुत्तमादित्वमुक्तंतत्रैव—उत्तमोऽरणिजन्योग्निर्मध्यमःसूर्यकांतजः । उत्तमःश्रोत्रियागारान्मध्यमःस्वगृहादिजः । एतमग्निंताम्रसौवर्णरजतादिपात्राभ्यांप्रणयेत् ॥ तथाचात्रिः—पात्रांतरेणपिहितेताम्रपात्रादिकेशुभे । अग्निप्रणयनंकुर्याच्छरावेतादृशेपिवा ॥ आपस्तंबः—नाप्रोक्षितमिंधनमग्नावादध्यात् । बर्हिरर्थंकुशाभावेप्रतिनिधयः स्मृत्यर्थसारे—बर्हिःकाशमयंग्राह्यंनलभ्यंतेकुशायदि । शरोशीरमुच

१ चाराख्यंकुर्वन्कुर्यात्पवित्रक इति पाठः । २ मध्यमानामिकागुष्ठानातिसृणायोजनान्मृगीइति ।

थ्याश्ववालमुंजार्जुनेक्षवः । सुगंधितेर्जुनादारुदूर्वाक्षीरद्रुमाअपि । यद्वासर्वतृणेभ्योपिशस्तंवर्हिर्यथेप्सितम् । शुक्लमूलकृ
ष्णमूलदुर्गंधितृणवर्जितम् ॥ शातातपः—समित्पुष्पफलादीनिब्राह्मणःस्वयमाहरेत् । शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्व्रज
त्यधः ॥ विष्णुः—दर्शेश्रावणमासस्यसमंत्रोत्पाटिताःकुशाः । अयातयामास्तेज्ञेयानियोज्याःसर्वकर्मसु । वर्षमितिशेषः
कुशोत्पाटनमंत्रमाहकश्यपः—शुचौदेशेशुचिर्भूत्वास्थित्वापूर्वोत्तरामुखः । ॐकारेणैवमंत्रेणकुशान्स्पृष्ट्वाद्विजोत्तमः । विरिं
चिनासहोत्पन्नपरमेष्ठिनिसर्गज । नुदसर्वाणिपापानिदर्भस्वस्तिकरोमम । इमंमंत्रंसमुच्चार्यततःपूर्वोत्तरामुखः । हुंफट्कारेण
दर्भांस्तुसकृच्छित्वासमुद्धरेत् ॥ हारीतः—अच्छिन्नाग्रान्पवित्रांश्चसमूलान्कोमलान्शुभान् । पितृदेवद्विजार्थंहिसमादद्या
त्कुशान्द्विजः । मासेनभस्यमावास्यातस्यांदर्भोच्चयोमतः । अयातयामास्तेदर्भानियोज्याःस्युःपुनःपुनः ॥ गोभिलः—कुश
मूलेस्थितोब्रह्माकुशमध्येजनार्दनः । कुशाग्रेशंकरंविद्यात्त्रयोदेवाव्यवस्थिताः ॥ हारीतः—चितौदर्भाःपथिदर्भायेदर्भाय
ज्ञभूमिषु । स्तरणासनपिंडेषुषट्कुशान्परिवर्जयेत् । ब्रह्मयज्ञेषुयेदर्भायेदर्भाःपितृतर्पणे । हतामूत्रपुरीषाभ्यांतेपांत्यागोवि
धीयते ॥ मार्कंडेयः—कुशपाणिःसदातिष्ठेद्ब्राह्मणोदंभवर्जितः । सनित्यंहंतिपापानितूलराशिमिवानलः ॥ इध्मवृक्षाना
हमरीचिः—पलाशःखदिरोऽश्वत्थःशमीवटउदुंबरः । अपामार्गार्कदूर्वाश्चकुशाश्चेत्यपरेविदुः । दशद्वादशवांगुल्यःसमाः
पंचदशस्मृताः । नात्यंगुष्ठाःसत्वचश्चसार्द्राइध्मइहोत्तमाः । ब्रह्मपुराणेपि—शमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवाः । अश्व
त्थोदुंबरौविल्वश्चंदनःसरलस्तथा । शालश्चदेवदारुश्चखदिरश्चैवयज्ञियाः ॥ दक्षिणायांविशेषउक्तोमहाभारते—वेदोपनि

षदेचैवसर्वकर्मसुदक्षिणा । सर्वत्रतुसमुद्दिष्टाभूमिर्गावोथकांचनम् । वैजवापः—शिवनेत्रोद्भवंयस्मात्तस्मात्तत्पितृवल्लभम् । अमंगलंतद्यत्नेनदेवकार्येषुवर्जितम् ॥ अन्यच्च—यज्ञोपवीतेद्वेधार्येश्रौतेस्मार्तेचकर्मणि । तृतीयमुत्तरीयार्थवस्त्राभावेतदिष्यते । सदोपवीतिनाभाव्यंसदाबद्धशिखेनच । विशिखोव्युपवीतश्चयत्करोतिनतत्कृतमिति । अत्रपूर्वार्धेनसदाशब्दवशात्पुरुषार्थता । उत्तरार्धेनविपर्ययनिंदाद्वारेणसशिखसोपवीताभ्यांकर्तव्यंकर्मेतिकीर्तनात्कर्मार्थता । एवंचकर्मकालेशिखाबंधोपवीताभावेकर्मांगलोपनिमित्तंपुरुषार्थलोपनिमित्तंचेतिप्रायश्चित्तद्वयंभवति । दर्शपूर्णमासयोरिवानृतवदने । कर्मणोबहिस्तुपुरुषार्थलोपनिमित्तमेकमेवेतिविवेकः ॥ संग्रहे—प्रभुःप्रथमकल्पस्ययोऽनुकल्पेनवर्तते । सनाप्नोतिफलंतस्यपरत्रेतिश्रुतिःस्मृतिः । बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रचोदितम् । तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेत् ॥ ॥ अथकर्मविशेषेग्निनामानि—पावकोलौकिकोह्यग्निःप्रथमःसंप्रकीर्तितः । अग्निस्तुमरुतोनामगर्भाधानेविधीयते । ततःपुंसवनेज्ञेयःपवमानस्तथैवच । सीमंतेमंगलोनामप्रबलोजातकर्मणि । नाम्निवैपार्थिवोह्यग्निःप्राशनेतुशुचिःस्मृतः । सभ्योनामसचौलेतुव्रतादेशेसमुद्भवः । गोदानेसूर्यनामाग्निर्विवाहेयोजकोमतः । आवसथ्येद्विजोज्ञेयोवैश्वदेवेतुरुक्मकः । प्रायश्चित्तेविटश्चैवपाकयज्ञेषुपावकः । देवानांहव्यवाहश्चपितॄणांकव्यवाहनः । शांतिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः । पूर्णाहुत्यामिलोनामक्रोधोग्निश्चाभिचारिके । वश्यार्थेकामदोनामवनदाहेतुदूषकः । कुक्षौतुजाठरोज्ञेयःक्रव्यादोमृतदाहने । वह्निनामालक्षहोमेकोटिहोमेहुता

१ यस्ययत्कर्मचोदितमितिपाठ. ।

शनः। वृषोत्सर्गेऽध्वरोनामसुचयेत्राह्मणःस्मृतः। समुद्रेवाडवोह्यग्निःक्षयेसंवर्तकस्तथा। ब्रह्मावैगार्हपत्यश्चईश्वरोदक्षिणस्तथा। विष्णुराहवनीयःस्यादग्निहोत्रेत्रयोऽग्नयः। ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् । स्मृत्यर्थसारे—बहुशुष्केंधनेचाग्नौसुसमिद्धेविधूमके। सांगारेलेलिहानेचहोतव्यंनान्यथाक्वचित् ॥ ॥ स्रुक्स्रुवादिप्रकृतिवृक्षाः। स्मृत्यर्थसारे—जुहूःपालाश्युपभृदाश्वत्थीवैकंकतीध्रुवा। यद्वासर्वाःस्रुचःकार्याएतेषामन्यवृक्षजाः। शमीमय्यःस्रुचःकार्याःसर्वावाभूर्जवृक्षजाः। तदलाभेयथालाभमन्ययज्ञियवृक्षजाः। खादिरस्तुस्रुवःकार्यःशम्याप्राशित्रमेक्षणे । खादिरोमुसलःकार्यःपालाशःस्यादुलूखलः यद्वोभौवारुणौकार्यौतदभावेन्यवृक्षजौ । मुख्याभावेतुसदृशंद्रव्यंप्रतिनिधीयते । यावद्यावत्सुसदृशंतत्तदेवहिगृह्यते ॥ संग्रहे—प्रशस्तौपूर्णपात्रार्थेदारुकांस्यमयौमखे। खादिरेणस्रुवःकार्यःपालाशेनजुहूर्भवेत् । त्वक्प्रदेशेविलौस्यातामन्यैर्वायज्ञियैर्द्रुमैः। तदभावेपलाशस्यपर्णाभ्यांहूयतेहविः। पलाशपर्णाभावेतुपर्णैर्वापिप्पलोद्भवैः। पर्णमत्रमध्यमंज्ञेयम्। मध्यमेनपर्णेनजुहोतीतिश्रुतेः। चमसंवाप्रणीतायाःकांस्यपात्रमथापिवा ॥ घटनाप्रकारः। संग्रहे—आयामंपंचधाकृत्वाद्विभागंपात्रमुच्यते। त्रिभागंदंडमित्याहुरेतदायामलक्षणम् । पात्रायामोऽर्धतःपात्रविस्तारश्चतदर्धतः। ग्रीवाविस्तारस्तस्यार्धाद्विलस्योच्छ्रायइष्यते। विस्ताराद्विगुणंपात्रंग्रीवाविस्तारमर्धतः। अन्यानितुलक्षणानिविस्तरभयेननोक्तानि ॥ तथा—काम्येप्रतिनिधिर्नास्तिनित्येनैमित्तिकेचसः। काम्येप्युपक्रमादूर्ध्वमन्येप्रतिनिधिंविदुः। नस्यात्प्रतिनिधिर्मंत्रस्वामिदेशा[वा]ग्निकर्मसु। सदेशकालयोर्नास्तिनारणेरग्निरेवसा । नाभावस्यप्रतिनिधिरभावांतरमिष्यते। नापिप्रतिनिधातव्यंनिषिद्धंवस्तु

कुत्रचित् । इत्यादि ॥ तथा—स्वकालादुत्तरोगौणःकालःसर्वस्यकर्मणः । कुशदर्व्यादयोमंत्राब्राह्मणाश्चवहुश्रुताः । नतेनि
र्माल्यतांयांतिविनियोज्याःपुनःपुनः । कुशाःपट्सुतुनिर्माल्यादर्व्याद्याआभिचारिके । मंत्रास्तत्रचशूद्रार्थेब्राह्मणाःप्रेतभो
जिनः । षट्सुतर्पणश्राद्धासनभोजनमूत्रपुरीपकालधारणेषु । तत्राभिचारिके । कृतंविहितंकर्मविष्ण्वर्पणंकार्यम् । तथाच
बृहन्नारदीये—विष्णवर्पितानिकर्माणिसफलानिभवंतिहि । अनर्पितानिकर्माणिभस्मनिन्यस्तहव्यवत् । नित्यंनैमित्तिकंका
म्यंयच्चान्यन्मोक्षसाधनम् । विष्णोःसमर्पितंसर्वसात्विकंसफलंभवेत् । भगवद्गीतायां—यत्करोपियदश्नासियज्जुहोपिददा
सियत् । यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति । विहितमितिशेपःइत्यादि । एवमन्याअपिपरिभापाज्ञेयाः ॥ ॥ इतिश्री
भट्टरामेश्वरसूरिसूनुनारायणभट्टकृतेप्रयोगरत्नेपरिभापाप्रकरणम् ॥ ॥ ॥ ॥

अथगर्भाधानाद्याःसंस्काराउच्यंते ॥ तत्रप्रथमेरजोदर्शनेमासादौदुष्टेसतिगर्भाधानस्यशांतिकपूर्वकंकर्तव्यत्वाच्छांतिकं
वक्तुंदुष्टकालाद्युच्यते । प्रथमेरजसिचैत्रज्येष्ठआषाढभाद्रपदकार्तिकपौपाअशुभाःआश्विनोमध्यमःशेपाःशुभाः । क्वचिद्वैशा
खफाल्गुनपूर्वार्धयोरधमत्वमुक्तम् । तिथिषुप्रतिपच्चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दशीपौर्णमास्यमावास्याअशुभाः शेषाःशुभाः ।
क्वचित्सप्तम्येकादश्यावशुभेअष्टमीद्वादश्यौचशुभेइत्युक्तम् । आसांशुभाशुभत्वाभ्यांमध्यमत्वमितिसांप्रदायिकाः । वारेषु
रविभौममंदवाराअशुभाः अन्येशुभाः । कैश्चित्सोमोप्यशुभउक्तः । नक्षत्रेषुभरण्यार्द्रापुष्याश्लेपापूर्वाज्येष्ठामूलपूर्वाषाढापू
र्वाभाद्रपदारेवत्योऽशुभाः । चित्राविशाखाश्रवणाश्विनीमघास्वातयोमध्यमाः । अन्यानिशुभानि । कैश्चित्तुकृत्तिकापुनर्व

स्वनुराधारेवत्योप्यशुभाउक्ताः । एवंचतासांमध्यमत्वम् । एवमन्यत्रापि । योगेषु व्याघातस्याद्यानवनाड्योगंडातिगंडयोः
पट्षट्शूलस्यपंचदशपरिघपूर्वार्धवैधृतिर्व्यतीपातश्चेत्यशुभाः वज्रोमध्यमःअन्येशुभाः । करणानिविष्टिंविनासर्वाणिशुभानि ।
अह्नित्रेधाविभक्तेआद्योभागःशुभः । द्वितीयोमध्यमः । तृतीयोऽशुभः । एवंरात्रौ । सूर्योदयास्तमयावप्यशुभौ । रविसंक्र
मादधोनाडीचतुष्टयमुर्ध्वंचाप्यशुभम् । संक्रांत्यादिदग्धदिनेष्वशुभम् । रविचंद्रोपरागयोरप्यशुभम् । संध्योपप्लवशावाशौचेषु
भर्तुरात्मनश्चतुर्थाष्टमद्वादशस्थेचंद्रेजीर्णरक्तनीलमलिनकृष्णवस्त्रेपुपरिहितेषुनशुभम् । संमार्जनीकाष्ठमृत्तृणाग्निशूर्पतुषशुष्का
क्षतलोहपापाणशस्त्रादिधारिण्याएतैर्युक्तदेशेचाशुभम् । देहलीद्वाररथ्यापितृमातृगृहेष्वशुभम् । ऊर्ध्वस्थितायानिद्रिताया
श्चाशुभम् । पित्रादिसखिस्वभर्तृभिर्दृष्टमशुभम् । शय्यादौचाशुभमित्यादिज्ञेयम् । दुष्टमासादौप्रथमरजोदर्शनेतांबूलभक्षणा
दिमंगलाचारंनकुर्यात् । द्वितीयेशुभेतुतत्रकुर्यादितिकेचित् । प्रथमेदुष्टेरजोदर्शनेद्वितीयंप्रतीक्ष्यतस्मिन्नप्यशुभेविस्तरेणशां
तिंकुर्यादित्यपिकेचित् । प्रथमएवयथाशक्तिशांतिंचरेदित्यपरे । अत्रैकस्मिन्नप्यशुभेवक्ष्यमाणाशांतिःकार्या । द्वित्राद्य
शुभसंनिपातेतुतत्सूचितबह्वशुभनिरासार्थंवक्ष्यमाणाहुतिसंख्यादिविवृद्ध्याकार्यायथाशक्तीत्यादिज्ञेयम् ॥ ॥ इतिशुभा
शुभविचारः ॥ ॥ अथऋतुशांतिरुच्यते ॥ तत्र—एवंविनायकंपूज्यग्रहांश्चैवविधानतः । कर्मणांफलमाप्नोतीतियाज्ञवल्क्ये
नकर्मफलसिद्धावविघ्नार्थत्वेनग्रहयज्ञस्यावश्यकत्वोक्तेः । इहचशौनकेन । आर्तवानांतुनारीणांशांतिंवक्ष्यामिशौनकइत्युपक्रम्य
ग्रहातिथ्यपुरःसरमितिप्रकरणोक्तेरावश्यकत्वादेवदेशकालकर्तृकाणांचविशेपवचनाभावेतंत्रेणकर्तव्यत्वाद्ग्रहमखपूर्वकस्तंत्रे-

णशांतिकप्रयोगउच्यते । रजोदर्शनानंतरंपंचमादिदिनेचंद्रताराद्यानुकूल्येशुचिदेशेसुस्नातयापत्न्यायुतःपतिःप्राङ्मुखउपवि
श्यप्राणानायम्यदेशकालौस्मृत्वा ममपत्न्याःप्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्री
त्यर्थंसग्रहमखांशौनकोक्तांदुष्टरजोदर्शनशांतिंकरिष्यइतिसंकल्प्य गणेशपूजनपुण्याहवाचनगौर्यादिषोडशमातृकापूजनव्रा
ह्म्यादिसप्तमातृकापूजननांदीश्राद्धानिकृत्वाशांतंदांतंकुटुंबिनंमंत्रतंत्रज्ञमाचार्यंब्रह्माणंचजपहोमार्थमष्टौषट्चतुरोवाऋत्विजो
पिवृत्वागंधादिनापूजयेत् । ततआचार्योगृहेशानदेशेशुचौ ॥ महीद्यौःकाण्वोमेधातिथिर्भूमिर्गायत्री । ॐ म॒हीद्यौः॒पृ॒थि॒वी
च॑नइ॒मंय॒ज्ञंमि॑मिक्षतां । पि॒पृ॒तांनो॒भरी॑मभिः इतिभूमिंस्पृष्ट्वा तद्दक्षिणोत्तरयोश्चतथैवभूमिंस्पृष्ट्वा । ओषधयइत्यस्याथर्वणोभि
षगोषधयोनुष्टुप् ॐ ओष॑धयः॒संव॑दंते॒सोमे॑नस॒हराज्ञा॑ । यस्मै॑कृ॒णोति॑ब्राह्म॒णस्तंरा॑जन्पारयामसि । इतिद्रोणप्रमाणव्रीहिभिर्म
ध्येतद्दक्षिणोत्तरतश्चस्पृष्टदेशेमंत्रावृत्त्याराशित्रयंकृत्वा तेनैवक्रमेणराशित्रयेनवमकालकमभग्नंकुंभत्रयं आकलशेष्वित्यस्य
काश्यपोदेवलःपवमानःसोमोगायत्रीकलशस्थापनेवि०। अकलशेष्वितिमंत्रावृत्त्यास्थापयेत् । एवंसर्वत्रमंत्रावृत्तिः। ततःप्रसुव
आपइतिनवर्चस्यसूक्तस्यसिंधुक्षित्प्रैयमेधोनद्योजगती । कलशेषूदकपूरणेवि०। ॐ प्रसुव॑आपोम॒हि॒मान॑मुत्त॒मंका॒रुर्वो॑चाति॒स
द॑नेवि॒वस्व॑तः । प्रस॒प्तस॑प्त॒त्रे॒धाहि॒च॑क्र॒मुः॒प्रसृ॒त्व॑री॒णाम॑ति॒सिं॒धुरोज॑सा । प्रतेर॑द॒द्व॒रु॒णो॒यात॑वेप॒थःसिं॑धो॒यद्वा॒जाँ॑ऽअ॒भ्यद्र॑व
स्त्वम् । भू॒म्या॒अधि॑प्र॒वता॑यासि॒सानु॑ना॒यदे॑षा॒मग्रं॑जग॑तामिर॒ज्यसि॑ । दि॒विस्व॒नोय॑तते॒भूम्यो॒पर्यं॑न॒तंशुष्म॒मुदि॑यर्ति॒भा॒नुना॑ ।
अ॒भ्रादि॑व॒प्रस्त॑नयं॑ति॒वृ॒ष्टयः॒सिं॑धु॒र्यदे॑ति॒वृ॒ष॒भोनरो॑रु॑वत् । अ॒भित्वा॑सिं॑धो॒शिशु॒मिन्न॒मा॒तरो॑वा॒श्राअ॑र्षन्ति॒पय॑सेव॒धे॒नवः॑ । राजे॑व

युध्वानयसित्वमितिसिंचोयदेषामग्रंप्रवतामिनक्षसि । इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या । असिक्न्यामरुद्वृधे वितस्तयार्जीकीयेशृणुह्यासुषोमया । (सितासितेसरितेयत्रसंगथेतत्राप्लुतासोदिवमुत्पतंति । येवैतन्वं१विसृजंतिधीरास्तेज नासोअमृतत्वंभजंते) ॥ १ ॥ तृष्टामयाप्रथमंयातवेसजूःसुसर्त्वारसयाश्वेत्यात्या । त्वंसिंधोकुभयागोमतींक्रुमुंमेहत्वासरथं याभिरीयसे । ऋजीत्येनीरुशतीमहित्वापरिज्रयांसिभरतेरजांसि । अदब्धासिंधुरपसामपस्तमाश्वानचित्रावपुषीवदर्शता ॥ स्वश्वासिंधुःसुरथासुवासाहिरण्ययीसुकृतावाजिनीवती । ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधं । सुखंरथंयु युजेसिंधुरश्विनंतेनवाजंसनिषदस्मिन्नाजौ । महान्ह्यस्यमहिमापनस्यतेदब्धस्यस्वयशसोविरप्शिनः ॥२॥ याःप्रवतइतिवसि ष्ठोनद्यःशक्करीअभिमंत्रणेवि० । ॐ याःप्रवतोनिवतउद्वतउदन्वतीरनुदकाश्चयाः । ताअस्मभ्यंपयसापिन्वमानाःशिवादे वीरशिपदाभवंतुसर्वानद्योअशिमिदाभवंतु । विनियोगःप्राग्वत् । एवमग्रेपितत्रतत्रविनियोगोज्ञेयः । गंधद्वारामित्यस्या नंदकर्दमचिक्लीतेंदिरासुताःश्रीरनुष्टुप् । ॐ गंधद्वारांदुराधर्षानित्युपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं । इतितिष्वपिगंधंप्रक्षिप्य । याओषधीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् । ॐ याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुवभ्रूणामहंशतंधामानिसप्तच ॥ इतिसर्वौषधीः । ततोमध्यकुंभे । यवव्रीहितिलमाषान्कंगुश्यामाकमुद्गान्क्षिप्त्वागा यत्र्योदुंबरकुशदूर्वारक्तोत्पलचंपकविल्वविष्णुक्रांतातुलसीबर्हिषशंखपुष्पीशतावर्यश्वगंधानिर्गुंडीरक्तपीतसर्षपापामार्गपलाश पनसजीरकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभद्रमुस्तकाख्यानि द्वात्रिंश

दौषधानिसर्वाणियथासंभवंवाक्षिपेत् । ततस्त्रिपुकलशेषु कांडात्कांडादित्यस्याग्निर्याज्ञिक्यउपनिषदोनुष्टुप् । कांडात्कांडात्प्र
रोहंतीपरुषःपरुषःपरि । एवानोदूर्वेप्रतनुसहस्रेणशतेनचेतिदूर्वाः । अश्वत्थेवइत्यस्याथर्वणोभिषगोपधयोनुष्टुप् । ॐ अश्व
त्थेवोनिषदनंपर्णेवोवसतिष्कृता । गोभाजइत्किलासथयत्सनवथपूरुषं । इतिपंचपल्लवान् । अश्वत्थोदुंबरप्लक्षचूतन्यग्रोध
पल्लवाः । गजाश्वस्थानरथ्यावल्मीकसंगमह्रदगोष्ठस्थामृदः । स्योनापृथिविकाण्वोमेधातिथिर्भूमिर्गायत्री । ॐ स्योनापृथि
विभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । इतिमृदःक्षिप्त्वा । याःफलिनीरित्यस्याथर्वणोभिषगोपधयोनुष्टुप् । ॐ याः
फलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः । इतिपूगीफलानि ॥ सहिरत्नानीत्यस्यश्यावा
श्वःसविितागायत्री । ॐ सहिरत्नानिदाशुषेसुवातिसविताभगः । तंभागंचित्रमीमहे । इतिकनककुलिशनीलपद्मरागमौक्ति
कानिपंचरत्नानिक्षिपेत् । हिरण्यरूपइत्यस्यशौनकोपांनपात्त्रिष्टुप् । ॐ हिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ।
हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै । इतिहिरण्यंचक्षिपेत् । युवासुवासाइत्यस्यविश्वामित्रोयूपस्त्रिष्टुप् ।
ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः । तंधीरासःकवयउन्नयन्तिस्वाध्यो३मनसादेवयंतः । इतिसूत्रे
णवाससाचकलशकंठान्वेष्टयित्वागंधाक्षतपुष्पमालाभिःकलशान्भूषयेत् । ततःकलशत्रयोपरितेनैवक्रमेणसौवर्णराजतंकां
स्यमयंताम्रमयंवैणवंमृन्मयंवायवादिपूरितंपात्रत्रयं । पूर्णादर्वीत्यस्यविश्वेदेवाःशतक्रतुरनुष्टुप् । ॐ पूर्णादर्विपरापतसुपूर्णा
पुनरापत । वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो । इतिनिधाय तदुपरिश्वेतंवस्त्रत्रयंन्यस्यतत्रचंदनादिनाष्टदलानिकुर्यात् ।

मूर्तित्रयस्यादावग्न्युत्तारणंकृत्वायथाक्रमंस्थापनंकुर्यात् । तत्रमंत्राः ॥ अग्निपदत्यागेन ॐ सप्तिंवाजंभरंददातिवीरंश्रुत्यंकर्मनिष्ठां । रोदसीविचरत्समंजन्नारींवीरकुक्षिंपुरंधिं । अप्नसःसमिदस्तुभद्रामहीरोदसीआविवेश । एकंचोदयत्समत्सुवृत्राणिदयतेपुरूणि । हृत्यंजरतःकर्णमावाज्योनिरदहज्जरूथं । अत्रिंघर्मउरुष्यदंतर्नृमेधंप्रजयासृजत्सम् । दाद्राविणंवीरपेशाऋषिंयःसहस्रासनोति । दिविहव्यमाततानधामानिविभृतापुरुत्रा । उक्थैर्ऋषयोविह्वयंतेनरोयामनिबाधितासः । वयोअंतरिक्षेपतंतःसहस्रापरियातिगोनां । विशईळतेमानुषीर्यामनुषोनहुपोविजाताः । गांधर्वीपथ्यामृतस्यगव्यूतिर्घृतआनिषत्ता । ब्रह्मऋभवस्ततक्षुर्महामवोचामासुवृक्तिं । प्रावजरितारंयविष्ठमहिद्रविणमायजस्व । ॐ अग्निःसप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां । अग्नीरोदसीविचरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिं । अग्नेरप्नसःसमिदस्तुभद्राग्निर्महीरोदसीऽआविवेश । अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि । अग्निर्हत्यंजरतःकर्णमावाग्निरज्योनिरदहज्जरूथं । अग्निरत्रिंघर्मउरुष्यदंतरग्निर्नृमेधंप्रजयासृजत्सं । अग्निर्दाद्रविणंवीरपेशाऽअग्निरृषिंयःसहस्रासनोति । अग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरुत्रा । अग्निमुक्थैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः । अग्निवयोअंतरिक्षेपतंतोग्निःसहस्रापरियातिगोनां । अग्निंविशऽईळतेमानुषीर्याऽअग्निंमनुषोनहुपोविजाताः । अग्निर्गांधर्वींपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता । अग्नयेब्रह्मऋभवस्ततक्षुरग्निंमहामवोचामासुवृक्तिं । अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व । ऋक् ७ ततः तत्रमध्यमेगायत्र्याविश्वा

१ स्वर्णादिनिर्मितभुवनेश्वर्यादिप्रतिमानामग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकरिष्यइतिसंकल्पः ।

मित्रोभुवनेश्वरीगायत्री । भुवनेश्वर्यावाहनादौवि० । ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् । भुवनेश्वर्यैनमःभुवनेश्वरीमावाहयामीतियथाशक्तिसुवर्णनिर्मितांभुवनेश्वरीप्रतिमांस्थापयेत् । तद्दक्षिणकुंभोपरिवस्त्रे । इंद्राणींवृषाकपिरिंद्राणीपंक्तिः । इंद्राण्यावाहनेवि० । ॐ इंद्राणीमासुनारिषुसुभगामहमश्रवम् । नह्यस्याअपरंचनजरसामरतेपतिर्विश्वस्मादिंद्रउत्तरः । इंद्राण्यैनमः इंद्राणीमावाहयामीतितथैवसौवर्णीमिंद्राणीप्रतिमांसंस्थाप्य । उत्तरकलशोपरि । इंद्रत्वाविश्वामित्रइंद्रोगायत्री । इंद्रावाहनेवि० । ॐ इंद्रंत्वावृषभंवयंसुतेसोमेहवामहे । सपाहिमध्वोअंधसः । इंद्रायनमः इंद्रमावाहयामीतितथैवसौवर्णीमिंद्रप्रतिमांस्थापयेत् । ततउक्तमंत्रैरुक्तक्रमेणदेवतात्रयस्यकांडानुसमयेनषोडशोपचारैःपूजांकुर्यात् । ततोमध्यकुंभेआचार्योऽष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् । यथा । हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदकर्दमचिक्लीतेदिरासुताऋषयः । श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोनुष्टुभः चतुर्थीबृहती पंचमीषष्ठ्यौत्रिष्टुभौततोऽष्टावनुष्टुभोंत्याप्रस्तारपंक्तिः जपेविनियोगः । ॐ हिरण्यवर्णांहरिणीं० १५ । ततएकऋत्विग्दक्षिणकुंभेरुद्रसूक्तानिजपेत् । यथा । कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोरुद्रोगायत्र्यंत्यानुष्टुप् । जपेवि० । ॐ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे । वोचेमशंतमंहृदे । यथानोअदितिःकरत्पश्वेनृभ्योयथागवे । यथातोकायरुद्रियम् । यथानोमित्रोवरुणोयथारुद्रश्चिकेतति । यथाविश्वेसजोषसः । गाथपतिंमेधपतिंरुद्रंजलाषभेषजम् । तच्छंयोःसुम्नमीमहे । यःशुक्रइवसूर्योहिरण्यमिवरोचते । श्रेष्ठोदेवानांवसुः ॥१॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये । नृभ्योनारिभ्योगवे । अस्मेसोमश्रियमधिनिधेहिशतस्यनृणाम् । महिश्रवस्तुविनृ

ण्वन् । मानःसोमपरिबाधोमारातयोजुहुरंत । आनइंद्रोवाजेभज । यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य । मूर्धानाभासोम
वेनआभूषंतीःसोमवेदः ॥२॥ इमारुद्रायतवसइत्येकादशर्चस्यकुत्सोरुद्रआद्यानवजगत्यौत्येद्वेत्रिष्टुभौ । जपेविनि० । ॐइमारु
द्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरम् । मृळानोरुद्रोतनो
मयस्कृधिक्षयद्वीरायनमसाविधेमते । यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु । अश्यामतेसुमतिंदेवयज्यया
क्षयद्वीरस्यतवरुद्रमीढ्वः । सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः । त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्व
यामहे । आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे । दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे । हस्तेवि
भ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनम् । रास्वाचनो
अमृतमर्तभोजनंत्मनेतोकायतनयायमृळ । मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितम् । मानोवधीःपितरंमोत
मातरंमानःप्रियास्तन्वोरुद्ररीरिषः । मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधी
र्हविष्मंतःसदमित्त्वाहवामहे । उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे । भद्राहितेसुमतिर्मृळयत्तमाथावयमव
इत्तेवृणीमहे । आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु । मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः । अवो
चामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ २ ॥ आते
पितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् । जपेविनि० । ॐ आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ।

अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः । त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाअशीयभेषजेभिः । व्यस्मद्द्वेषोवितरं
व्यंहोव्यमीवाश्चातयस्वाविषूचीः । श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रबाहो । पर्षिणःपारमंहसःस्वस्तिविश्वाअभी
तीरपसोयुयोधि । मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती । उन्नोवीराँऽअर्पयभेषजेभिर्भिषक्तमंत्वाभिष
जांशृणोमि । हवीमभिर्हवतेयोहविर्भिरवस्तोमेभीरुद्रंदिषीय । ऋदूदरःसुहवोमानोअस्यैबभ्रुःसुशिप्रोरीरधन्मनायै ॥ १ ॥
उन्मांममंदवृषभोमरुत्वान्त्वक्षीयसावयसानाधमानम् । घृणीवच्छायामरपाअशीयाविवासेयंरुद्रस्यसुम्नम् । क्वस्यतेरुद्रमृ
ळयाकुर्हस्तोयोअस्तिभेषजोजलाषः । अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाः । प्रबभ्रवेवृषभायश्वितीचेमहोमहींसु
ष्टुतिमीरयामि । नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम । स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः ।
ईशानादस्यभुवनस्यभूरेर्नवाउयोषद्रुद्रादसुर्यम् । अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपम् । अर्हन्निदंदयसेवि
श्वमभ्वंनवाओजीयोरुद्रत्वदस्ति ॥ २ ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रम् । मृळाजरित्रेरुद्रस्तवानोन्यंतेअ
स्मन्निवपंतुसेनाः । कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतम् । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ।
यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु । यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि । परिणोहेतीरुद्रस्य
वृज्याःपरित्वेषस्यदुर्मतिर्महीगात् । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ । एवाबभ्रोवृषभचेकितानयथादेवन
हृणीषेनहंसि । हवनश्रुन्नोरुद्रेहबोधिबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रस्त्रिस्रो

जगत्यौत्यात्रिष्टुप् । जपेवि० । ॐ इमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाव्ने । अषाढायसहमानायवेधसेतिग्मायु
धायभरताशृणोतुनः । सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति । अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासु
नोभव । यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः । सहस्रंतेस्वपिवातभेषजामानस्तोकेपुतनयेषुरीरिषः ।
मानोवधीरुद्रमापरादामातेभूमप्रसितौहीळितस्य । आनोभजबर्हिषिजीवशंसेयूयंपातस्वस्तिभिःसदानः॥१॥ आवोराजानंवाम
देवोरुद्रस्त्रिष्टुप् । जपेविनि० । ॐ आवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः । अग्निंपुरातनयित्नोरचित्ताद्धिरण्य
रूपमवसेकृणुध्वमम् । तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् । जपेवि० । ॐ तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ।
यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य । भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् । जपेवि० । ॐ भुवनस्यपितरंगीर्भि
राभीरुद्रंदिवावर्धयारुद्रमक्तौ । बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः । त्र्यंवकंवसिष्ठोरुद्रोनुष्टुप् । जपेविनि० ।
ॐ त्र्यंवकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् । अथान्यऋत्विगुत्तरकुंभेएकादशावृत्तिभी
रुद्रंजपेत् । तत्रादौन्यासान्कृत्वाऋष्यादिस्मरेत् ॥ यद्यथा ॥ नमकानांप्रथमानुवाकेआद्यायाःकश्यपोद्वितीयायाआत्रेय
स्तृतीयायाःकश्यपस्ततोद्वयोर्गौतमस्ततएकस्याःकण्वस्ततोद्वयोर्मरुत्वांस्ततएकस्याभगवांस्ततस्तिसृणांनारदस्ततस्तिसृणांभग
वान् । द्वितीयानुवाकस्यमंडूकस्तृतीयानुवाकस्यभगवांश्चतुर्थानुवाकस्यदुर्वासाःपंचमषष्ठानुवाकयोर्भगवान्सप्तमानुवाकस्य
हेमकोशोऽष्टमानुवाकस्यनवमानुवाकेचनमोवइतियावद्भगवानवशिष्टस्याग्निर्दशमानुवाकेप्रथमस्यपुलहोद्वितीयस्यस्कंदस्ततो

द्वयोर्मोऽन्यस्ततएकस्यदेवराड्ततएकस्यभगवांस्ततएकस्यात्रिस्ततएकस्यवैव्याघ्रस्ततएकस्यभगवांस्ततएकस्यवैराजस्ततएक
स्यपुलहस्ततएकस्यनारदस्ततएकादशानुवाकेआद्यानांचतुर्णांदुर्वासास्ततआसमासिदेवल्कइत्यृषयः । प्रथमानुवाकेआद्यस्यरु
द्रस्ततएकस्यशंभुस्ततएकस्यस्कंदात्मारुद्रस्ततोद्वयोरुद्रस्ततएकस्यशंभुस्ततोद्वयोरादित्यात्मारुद्रस्ततएकस्यशंभुस्ततस्तिसृणांरु
द्रस्ततस्तिसृणांभगवांस्ततोद्वितीयतृतीयानुवाकयोरुद्रस्ततश्चतुर्थपंचमषष्ठानुवाकानांशंभुःसप्तमानुवाकस्यरुद्रोष्टमानुवाकस्य
नमोवःकिरिकेभ्यइत्यंतस्यचनवमस्यभगवानवशिष्टस्यरुद्रोदशमानुवाकेचतुर्णांरुद्रस्ततएकस्यनंदीश्वरात्मारुद्रस्ततएकस्यभग
वांस्ततएकस्यशंभुस्ततएकस्यरुद्रस्ततएकस्यभगवांस्ततोद्वयोःशंभुस्ततोवशिष्टानांरुद्रइतिदेवताः । प्रथमानुवाकेआद्येनुष्टुभौ
ततएकास्वराळनुष्टुप्ततएकानिचृदनुष्टुप्ततएकानुष्टुप्ततएकानिचृदनुष्टुप् ततएकाप्रस्तारपंक्तिःपंचपदापंक्तिर्वा ततएका
षट्पदाजगतीततःसप्तानुष्टुभस्ततोष्टानुवाकायजूंषिततएकाप्रस्तारपंक्तिःपंचपदापंक्तिर्वा ततएकानुष्टुप्ततश्चतस्रोजगत्यस्त
तस्तिस्रस्त्रिष्टुभस्ततएकापंचपदात्रिष्टुप्महाबृहतीवाततोद्वादशानुष्टुभस्ततस्त्रीणियजूंषिततस्तिस्रोनुष्टुभस्ततएकायजुरितिच्छं
दांसि । अथचमकानांअग्निःकांडऋषिः आद्याग्नावैष्णवीगायत्रीशिष्टानांवाजादयोग्न्यादिविशेषादेवताःयजुश्छंदःजपेवि
नियोगः ॥ एवंरुद्रंजस्वा ॥ शंनइंद्राग्नीतिसूक्तंजपेत् । शंनइंद्राग्नीतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् । जपे
विनि० । ॐ शंनइंद्राग्नीभवतामवोभिःशंनइंद्रावरुणारातहव्या । शमिंद्रासोमासुविताय शंयोःशंनइंद्रापूषणावाजसातौ ।
शंनोभगःशमुनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः । शंनःसत्यस्यसुयमस्यशंसःशंनोअर्यमापुरुजातोऽअस्तु । शंनोधाताश

मुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः । शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसंतु । शंनोअग्निर्ज्योतिरनीको
अस्तुशंनोमित्रावरुणावश्विनाशम् । शंनःसुकृतांसुकृतानिसंतुशंनइपिरोअभिवातुवातः । शंनोद्यावापृथिवीपूर्वहूतौशमंतारि
क्षंदृशयेनोअस्तु । शंनओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ १ ॥ शंनइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणः
सुशंसः । शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु । शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः । शंनः
स्वरूणांमितयोभवंतुशंनःप्रस्वः३ःशम्वस्तुवेदिः । शंनःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवंतु । शंनःपर्वताध्रुवयोभवंतुशं
नःसिंधवःशमुसंत्वापः । शंनोअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः । शंनोविष्णुःशमुपूषानोअस्तुशंनोभवित्रंशम्वस्तु
वायुः । शंनोदेवःसवितात्रायमाणःशंनोभवंतूषसोविभातीः । शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥
शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु । शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोअप्याः । शंनःस
त्यस्यपतयोभवंतुशंनोअर्वंतःशमुसंतुगावः । शंनऋभवःसुकृतःसुहस्ताःशंनोभवंतुपितरोहवेषु । शंनोअजएकपाद्देवोअस्तुशं
नोहिर्बुध्न्याः१शंसमुद्रः । शंनोअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा । आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः ।
शृण्वंतुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः । येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राअमृताऋतज्ञाः । तेनोरासंता
मुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ ततःकुंभपश्चिमदेशेस्थंडिलेग्निंप्रतिष्ठाप्यतदीशान्यांवेद्यादौनवग्रहादींस्तत्तन्मंत्रै
रावाह्यषोडशोपचारैःसंपूज्यतदीशान्यांप्राग्वत्कुंभंसंस्थाप्यतत्रवरुणमावाह्याग्निसमीपमेत्यान्वाधानंकुर्यात् । यथा द्वेसमिधा

वादायदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा नवग्रहान्प्रत्येकममुकसंख्या
भिः (१०८ वा २८ वा ८) समित्तिलाज्याहुतिभिः। अधिदेवताःप्रत्यधिदेवताश्चैतैरेवद्रव्यैः ( ८ वा ४ ) क्रतुसाद्गुण्यदेवताः
क्रतुसंरक्षकदेवताश्च ( ४ वा २ )।पुनरत्रप्रधानं। भुवनेश्वरींप्रत्येकममुकसंख्याभिः (१००८ वा १०८ वा २८) दूर्वातिलमि
श्रगोधूमपायसाज्याहुतिभिः। इंद्राणीमिंद्रंचप्रत्येकममुकसंख्याभिः ( १०८ वा २८ वा ८ ) दूर्वातिलमिश्रगोधूमपायसाज्याहु
तिभिरित्युक्त्वा शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्युक्त्वाजुहुयात् ॥ अन्येतु—गायत्र्यैवतुहोतव्यंहविरत्रचतुष्टयम् ।
ततःस्विष्टकृतंहुत्वेतिशौनकेनेंद्राणींद्रयोर्होमानभिधानात्तयोर्होमोनास्तीत्याहुस्तन्मतेऽन्वाधानादौतत्कीर्तनाभावः। आहुति
संख्यावक्ष्यते। ततःपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाभुवनेश्वरींद्राणींद्रेभ्योमुष्मैत्वेतिमनसाध्यायन्तूष्णींचतुरश्चतुरोमु
ष्टीन्निरुप्याहुतिवहुत्वाच्चानिरुप्य गोदुग्धेपायसंश्रपयित्वाज्यसंस्काराद्याज्यभागांतंकुर्यात्। ततोयजमानोदक्षिणतउपविश्य।
होमार्थंचजपार्थंचवरयेदृत्विजोबहून् । आचार्योद्विजैःसहेतिचोक्तेराचार्यर्त्विजांहोमावगमात्तेपांचस्वल्पत्वेनत्यागायोगात्तै
श्चक्रियमाणेहोमेयजमानेनप्रत्याहुतित्यागस्याशक्यत्वात्तदानीमेवांगप्रधानदेवताउद्दिश्यएताभ्यइदंनममेतित्यजेत् । तत
आचार्यःसर्त्विक्नवग्रहेभ्योऽष्टशताष्टाविंशत्यष्टान्यतमसंख्याकाघृताक्ताअर्कादिसमिधस्तिलाज्याहुतीश्चहुत्वाधिदेवताप्रत्य
धिदेवताविनायकादिपंचलोकपालेभ्यस्तन्न्यूनसंख्ययाजुहुयात् । ग्रहाणांयदाष्टौतदान्येभ्यश्चतस्रइतिसंप्रदायः । ततोभु
वनेश्वर्यैगायत्र्यादधिमधुघृताक्ताभिस्तिसृभिस्तिसृभिर्दूर्वाभिरेकाहुतिरित्येवमष्टसहस्रमष्टशतंवादूर्वाहुतीर्घृताक्ततिलमिश्रगो

धूमाहुतीःपायसाहुतीर्घृताहुतीश्चजुहुयात् । एवमिंद्राणींद्रयोःप्रागुक्तमंत्राभ्यांक्रमेणहविश्चतुष्टयंप्रत्येकमष्टशतसंख्ययाभुवने
श्वर्याअष्टसहस्रपक्षेजुहुयात् । तस्याष्टशतपक्षेतुतयोरष्टाविंशतिरितिसंप्रदायः । पक्षेतुतयोर्नहोमः । ततःस्विष्टकृदादिप्राय
श्चित्तहोमांतंकृत्वाइंद्रादिदिक्पालेभ्योनवग्रहेभ्योभुवनेश्वरींद्राणींद्रेभ्यः क्षेत्रपालायचसदीपमाषभक्तबलीन्तत्तन्मंत्रैर्दद्यात् ।
तद्यथा ॥ सपत्नीकोयजमानःप्रतिबलिंसंकल्प्यसाक्षतजलंक्षिपेत् । अद्यपूर्वोच्चरित० कृतस्यसनवग्रहमखदुष्टरजोदर्शनशांतिक
र्मणःसांगतासिद्धिद्वारातत्संपूर्णफलवाप्त्यर्थं इंद्रादिलोकपालेभ्यआदित्यादिग्रहेभ्यःप्रधानदेवताभ्यःक्षेत्रपालायचबलिदाना
निकरिष्ये ॥ तत्रक्रमः । त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् । इंद्रप्रीत्यर्थबलिदानेवि० । ॐ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशू
रमिंद्रं । ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः । इंद्रायनमःसर्वोपचारार्थेगंधाक्षतपुष्पंसमर्पयामि । इंद्रायसां
गायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंसमर्पयामि । भोइंद्रअमुंबलिंगृहाणदिशंरक्षममयजमानस्यवा
सकुटुंबस्यसपरिवारस्यआयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्ताकल्याणकर्तावरदोभव । इत्यंतंपठित्वागं
धपुष्पाक्षतजलानिपूर्वाभिमुखस्त्यजेत् । अनेनबलिदानेनइंद्रःप्रीयताम् । एवमग्न्यादिभ्योदिक्पालेभ्यस्तत्तन्मंत्रैर्बलिंदद्यात् ।
ततआग्नेय्याम् । अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री । अग्निप्रीत्यर्थेबलिदानेवि० । ॐ अग्निंदूतंवृणीमहेहोतारं
विश्ववेदसम् । अस्ययज्ञस्यसुक्रतुं । अग्नयेसांगाय० । भोअग्नेइमंबलिंगृहाणदिशंरक्ष० । अनेनबलिदानेनअग्निःप्रीयताम्
॥ २ ॥ ततोदक्षिणस्याम् । यमायसोमंवैवस्वतोयमोयमोनुष्टुप् । यमप्रीत्यर्थेबलि० । ॐ यमायसोमंसुनुतयमायजुहुताहविः ।

ताय० । भोबृहस्पतेइमंबलिंगृहाण० । अनेनबलिदानेनबृहस्पतिःप्री० ॥ ५ ॥ पूर्वस्यां । शुक्रःपाराशरःशुक्रोद्विपदाविराट् ।
शुक्रप्री० । ॐ शुक्रःशुशुक्वाउषोनजारःपप्रासमीचीदिवोनज्योतिः । शुक्रायसांगाय० । इंद्रेंद्राणीरूपाधिदेवताप्रत्य० । भोशुक्रे
मंबलिंगृहाण । अनेनब० शुक्रःप्रीयताम् ॥ ६ ॥ पश्चिमे । शमग्निरिरिंबिठिःशनैश्चरउष्णिक् । शनैश्चरप्रीत्यर्थे० । ॐ शम
ग्निरग्निभिःकरच्छंनस्तपतुसूर्यः । शंवातोवात्वरपाअपस्निधः । शनैश्चरायसांगाय० यमप्रजापतिरूपाधिदेवताप्रत्यधिदेव
तासहिताय० । भोशनैश्चरइमंबलिंगृहाण० । अनेनबलिदानेनशनिःप्रीयताम् ॥ ७ ॥ नैर्ऋत्याम् । कयानोवामदेवोराहु
र्गायत्री । राहुप्रीत्य० । ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता । राहवेसांगाय० कालसर्परूपाधि
देवताप्रत्यधिदेवतासहिताय० । भोराहोइमंबलिंगृ० । अनेनबलिदानेनराहुःप्री० ॥ ८ ॥ वायव्ये । केतुंकृण्वन्मधुच्छंदाः
केतुर्गायत्री । केतुप्रीत्यर्थे० । ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे । समुषद्भिरजायथाः । केतवेसांगाय० चित्रगुप्तब्रह्म
रूपाधिदेवताप्रत्यधिदेवतासहिताय० । भोकेतोइमंबलिंगृहाण० । अनेनबलिदानेनकेतुःप्रीयताम् ॥ ९ ॥ ततः ।
गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती । गणपतिप्रीत्यर्थेब० । ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्त
मम् । ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं । गणपतयेसांगायसपरिवारायऋद्धिबुद्धिसहिताय० ।
भोगणपतेइमं० । अनेनब० गणपतिःप्री० ॥ जातवेदसेमारीचःकश्यपोदुर्गात्रिष्टुप् । दुर्गाप्रीत्यर्थेबलि० । ॐ जातवेदसे
सुनवामसोममरातीयतोनिर्दहातिवेदः । सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः । दुर्गायैसांगायैसपरिवारायैसा

युधायैसशक्तिकायैइमंवलिंसमर्पयामि । भोदुर्गे०ममयजमानस्यसकुटुंवस्यायुःकर्त्रींपुष्टिकर्त्रींतुष्टिकर्त्रींऋद्धिकर्त्रींवरदाभव ।
अनेनव० दुर्गाप्री० । तववायोऋतस्पतेत्वष्टुर्जामातरद्भुत सोवायुर्गायत्री । वायुप्रीत्यर्थे० । ॐ तववायवृतस्पते० । वायवेसांगाय० भोवा
योइमंवलिंगृहाण० । अनेनव० वायुःप्रीयताम् । आदित्प्रत्नस्यवत्सआकाशोगायत्री । आकाशप्री० । ॐ आदित्प्रत्नस्यरे
तसोज्योतिष्पश्यंतिवासरं । परोयदिध्यतेदिवा । आकाशायसां० भोआकाश० आयुःकर्तृपुष्टिकर्तृतुष्टिकर्तृऋद्धिकर्तृभव ।
अनेनव० । एषोउषाप्रस्कण्वोऽश्विनौगायत्री । अश्विप्रीत्यर्थेव० । ॐ एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः । स्तुषेवामश्विना
बृहत् । अश्विभ्यांसपरिवाराभ्यांसायुधाभ्यांसशक्तिकाभ्यांइमंवलिं० । भोअश्विनौअमुंवलिंगृह्णीतंममयजमानस्यायुः
कर्तारौ० भवतं । अनेनवलिदानेनाश्विनौप्रीयेताम् । वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् । वास्तोष्पतिप्री० । ॐ वास्तो
ष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः । यत्त्वेमहेप्रतितन्नोजुषस्वशंनोअस्तुद्विपदेशंचतुष्पदे । वास्तोष्पतयेसां
गाय० । भोवास्तोष्पतेइमंवलिं० । अनेनव० वास्तोष्पतिःप्री० ॥ ६ ॥ ततोगायत्र्याविश्वामित्रोभुवनेश्वरीगायत्री । भुवने
श्वरीप्रीत्यर्थे० । ॐ तत्सवितुर्वरेण्यं० भुवनेश्वर्यैसांगायै० भोभुवनेश्वरिइमंवलिं० ममआयुःकर्त्रीं० । अनेनभुवनेश्वरीप्री० ।
इंद्राणींवृषाकपिरिंद्राणीपंक्तिःइंद्राणीप्री० व० । ॐ इंद्राणीमासुनारिषुसुभगामहमश्रवम् । नह्यस्याअपरंचनजरसामरतेप
तिर्विश्वस्मादिंद्रउत्तरः । इंद्राण्यैसांगायै० भोइंद्राणीत्यादिपूर्वत् । अनेनवलिदानेनइंद्राणीप्रीयतां० । इंद्रंवोमधुच्छंदाइं
द्रोगायत्री । इंद्रप्रीत्यर्थेव० । ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलः । इंद्रायसांगायेत्यादि व

अनेनव० इंद्रःप्रीयतां । ततोगृहाद्बहिरैशानींदिशंगत्वातत्रक्षेत्रपालवलिंदद्यात् । अद्यपूर्वोच्चरित० कृतस्यशांतिकर्मणः सांग० सर्वारिष्टशांत्यर्थंक्षेत्रपालवलिदानंक० । क्षेत्रस्यपतिनावामदेवःक्षेत्रपालोनुष्टुप् वलिदाने० । ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि । गामश्वंपोषयित्न्वासनोमृळातीदृशे । क्षेत्रपालंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामीत्यावाह्यषोडशोपचारैःसंपूज्यक्षेत्रपालायसांगायभूतप्रेतपिशाचयक्षराक्षसशाकिनीडाकिनीवेतालादिपरिवारसहितायइमंसदीपंसतांबूलंसदक्षिणाकंमाषभक्तवलिंसमर्पयामि । भोक्षेत्रपालइमंवलिंगृहाण ममसकुटुंवस्येत्यादि० । अनेनव० क्षेत्रपालःप्रीयताम् । प्रार्थयेत्—वलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा । मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाःखगाः । असुरायातुधानाश्चपिशाचामातरोरगाः । डाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः । जृंभकाःसिद्धगंधर्वानागाविद्याधरास्तथा । दिक्पालालोकपालाश्चयेचविघ्नविनायकाः । सर्वेषांशांतिकर्तारोब्राह्मयाद्याश्चैवमातरः । माविघ्नंमाचमेरोगामासंतुपरिपंथिनः । सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः । भूतानियानीहवसंतितानिवलिंगृहीत्वाविधिवत्प्रयुक्तम् । अन्यत्रवासंपरिकल्पयंतुक्षमंतुतान्यत्रनमोस्तुतेभ्यः ॥ ॐ शांतापृथिवी० । शांतिःशांतिःशांतिः । हस्तौपादौप्रक्षाल्याचम्य अग्नेरंतिकमागत्यपूर्णाहुतिंसमुद्रादूर्मिरितितृचेनजुहुयात् । समुद्रादूर्मिरितितृचस्यगोतमोवामदेवोग्निस्त्रिष्टुप् । पूर्णाहुतिहोमेविनियोगः । ॐ समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट् । घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः । वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः । उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् । चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ।

त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेशस्वाहा । अग्नयइदं० । ततःप्रणीताविमोकंकृत्वाभुवनेश्वर्यादिकलशोदकंग्रह
कलशोदकंचपात्रांतरेगृहीत्वातेनतत्स्थपंचपल्लवैःसकुशदूर्वैर्धृतनववस्त्रंयजमानंधृतनववस्त्रकंचुकींचतद्वामस्थांऋतुमतींसऋ
त्विगुदङ्मुखआचार्योभिषिंचेदेभिर्मंत्रैः। तेचमंत्राः आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्र
तिष्ठा अंत्येद्वेअनुष्टुभौअभिषेकेविनियोगः । ॐ आपोहिष्ठामयोभुवः० ॥ ९ ॥ यएकइद्विदयतइतिगोतमोरहूगणइंद्रउष्णि
क् । अभिषेकेवि० । ॐ यएकइद्विदयतेवसुमर्तायदाशुषे । ईशानोअप्रतिष्कुतइंद्रोअंग । त्रिभिष्ट्वंदेवेतिसप्तर्चस्यसूक्तस्यवसि
ष्ठआद्यानांत्रयाणामग्निस्ततश्चतुर्णांविश्वेदेवाःआद्यागायत्रीद्वितीयानुष्टुप्ततस्तिस्रोगायत्र्योंत्येद्वेअनुष्टुभौ । अभिषेकेवि० ।
ॐ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः । अग्नेदक्षैःपुनीहिनः । पुनंतुमांदेवजनाःपुनंतुवसवोधिया । विश्वेदेवाःपुनीतमा
जातवेदःपुनीहिमा । प्रप्यायस्वप्रस्यंदस्वसोमविश्वेभिरंशुभिः । देवेभ्यउत्तमंहविः । उपप्रियंपनिप्नतंयुवानमाहुतीवृधं ।
अगन्मविभ्रतोनमः । अलाय्यस्यपरशुर्ननाशतमापवस्वदेवसोम । आखुंचिदेवदेवसोम । यःपावमानीरध्येत्यृषिभिःसंभृतं
रसं । सर्वंसपूतमश्नातिस्वदितंमातरिश्वना । पावमानीर्योअध्येत्यृषिभिःसंभृतंरसं । तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकम् ।
उभयंशृणवच्चनइतिभार्गवइंद्रोबृहती । अभिषेके० । ॐ उभयंशृणवच्चनइंद्रोअर्वागिदंवचः । सत्राच्यामघवासोमपीतयेधिया
शविष्ठआगमत् । स्वस्तिदाविशोभरद्वाजइंद्रोनुष्टुप् । अभिषेके० । ॐ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी । वृषेंद्रःपुरएतु
नःसोमपाअभयंकरः । त्र्यंबकमितिवसिष्ठोरुद्रोनुष्टुप् । अभिषेके० । ॐ त्र्यंबकंयजामहे० । जातवेदसेमारीचःकश्यपोदुर्गा

त्रिष्टुप् । अभिगेकेवि० । ॐ जातवेदसेसुनवाम० । समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् । अभिषेकेवि० । ॐ समुद्रज्येष्ठाःसलिलस्य० ॥४॥ त्रायंतामितितिसृणांसप्तर्षयआपोनुष्टुप् । अभिषेके० । ॐ त्रायंतामिहदेवा० ॥ ३ ॥ इमाआप इतितिसृणांसप्तर्षयआपोनुष्टुप् । अभिषेकेवि० । ॐ इमाआपःशिवतमा० ॥ ३ ॥ देवस्यत्वेत्यापस्तंबशाखागतैस्त्रिभिर्मंत्रैः । ॐ देवस्यत्वासवितुःप्रसवे । अश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां । अश्विनोर्भैषज्येन । तेजसेब्रह्मवर्चसायाभिषिंचामि । देवस्यत्वासवितुःप्रसवे । अश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांइंद्रस्येंद्रियेण । श्रियैयशसेबलायाभिषिंचामि । देवस्यत्वासवितुःप्रसवेअश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांसरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासाम्राज्येनाभिषिंचामि । तमीशानंगौतमोवामदेवईशानोजगती । अभिषे० ॐ तमीशानंजगतः० । त्वमग्नेरुद्रइत्यापस्तंबशाखागतेनैकेन । ॐ त्वमग्नेरुद्रोअसुरोमहोदिवः । त्वंशर्धोमारुतंपृक्षईशिषे । त्वंवातैररुणैर्यासिशंगयःत्वंपूषाविधतःपासिनुत्मना । तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् । अभिषेके० । ॐ तमुष्टुहियःस्विषुः० । भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् । अभिषेकेवि० । ॐ भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ । बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः । यातेरुद्रेतिकश्यपोरुद्रःस्वराळनुष्टुप् । अभिषेके० । ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी । तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि । यज्जाग्रतइतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्मनस्त्रिष्टुप् । अभि० । ॐ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति । दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु । येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषुधीराः । यदपूर्वंयक्षमंतः

प्रजानांतन्मेमनःशिवसंकल्पमस्तु । यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतंप्रजासु । यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मेमनः० । येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं । येनयज्ञस्तायतेसप्तहोतातन्मे० । यस्मिन्नृचःसामयजूंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः । यस्मिंश्चित्तंसर्वमोतंप्रजानांतन्मे० । सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेभीशुभिर्वाजिनइव । हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मे० । इंद्रत्वावृषभंवयमितिपंचानांविश्वामित्रइंद्रोगायत्री । अभिषे० । ॐ इंद्रत्वावृषभंवयंसुतेसोमेहवामहे । सपाहिमध्वोअंधसः । इंद्रंक्रतुविदंसुतंसोमंहर्यपुरुष्टुत । पिबावृषस्वतातृपिं । इंद्रप्रणोधितावानंयज्ञंविश्वेभिर्देवेभिः । तिरस्तवानविश्पते । इंद्रसोमाःसुताइमेतवप्रयंतिसत्पते । क्षयंचंद्रासइंदवः । दधिष्वाजठरेसुतंसोममिंद्रवरेण्यं । तवद्युक्षासइंदवः ॥ १ ॥ ततः । सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः । वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः । प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते । आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा । वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः । ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा । कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः । बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः । एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः । आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतुराहुकेतुश्चतर्पिताः । देवदानवगंधर्वायक्षराक्षसपन्नगाः । ऋषयोमनवोगावोदेवमातरएवच । देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः । अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच । औषधानिचरत्नानिकालस्यावयवाश्चये । सरितःसागराःशैलास्तीर्थानिजलदानदाः । एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ इतिपौराणैर्मंत्रैरभिषिंचेत् । ततःकलशोदकेनान्येनचोदके

नसुस्नातौदंपतीशुक्लवाससौगंधमाल्यादिधृत्वोपविशेतांतत्रपत्नीदक्षिणतः । ततोयजमानोग्निंसंपूज्यविभूतिंधृत्वाचार्यादीन्
गंधपुष्पवस्त्रालंकारादिभिर्यथाशक्तिपूजयित्वाचार्यायधेनुंदक्षिणांदद्यात् । दक्षिणात्वेनचास्यानदक्षिणांतरंअनवस्थाप्रसंगा
त् । ततोब्रह्मणेयथाशक्तिदक्षिणांदत्वारुद्रजापिनेसदक्षिणमनड्वाहंदक्षिणांदद्यात्। अत्रधेनुन्यायेनदक्षिणात्वेप्राप्तेसदक्षिणमन
ड्वाहंप्रदद्याद्रुद्रजापिनेइतिप्रतिप्रसवकरणात्सदक्षिणत्वम् । ततोऽन्येभ्यऋत्विग्भ्योऽन्येभ्यश्चब्राह्मणेभ्यःभूयसींदक्षिणांदद्या
त् । ततोग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्तरपूजांपंचोपचारैःकृत्वाक्षमाप्य यांतुदेवगणाःसर्वेपूजामादायपार्थिवीम् ।
इष्टकामप्रसिद्ध्यर्थपुनरागमनायचेतिविसृज्यआचार्यहस्तेप्रतिपाद्याग्निंसंपूज्य गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर । यत्रब्रह्मा
दयोदेवास्तत्रगच्छहुताशनेतिविसर्जयेत् । ततोब्राह्मणाःमहाशांतिंपठेयुः । सायथा—आनोभद्राइतिदशानांगौतमोराहूगणोवि
श्वेदेवाः । आद्याःपंचजगत्यः । षष्ठीविराट्सप्तमीजगतीततस्तिस्रस्त्रिष्टुभः । ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोऽअ
परीतासउद्भिदः । देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे । देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभि
नोनिवर्ततां । देवानांसख्यमुपसेदिमावयंदेवानऽआयुःप्रतिरंतुजीवसे । तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रि
धं । अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् । तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः । त
द्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं । तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं । पूषानोय
थावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये । स्वस्तिनऽइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टने

मिःस्वस्तिनोबृहस्पतिर्दधातु । पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः । अग्निजिह्वामनवःसूरचक्षसोविश्वे
नोदेवाऽअवसागमन्निह । भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवाहितंयदा
युः । शतमिन्नुशरदोऽअंतिदेवायत्रानश्चक्राजरसंतनूनां । पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः । अदिति
र्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः । विश्वेदेवाऽअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वं । स्वस्तिनोमिमीता
मितिपंचानांस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् । आद्यास्तिस्रस्त्रिष्टुभः । ततोद्वावनुष्टुभौ । ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्ति
देव्यदितिरनर्वणः । स्वस्तिपूषाऽअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना । स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्यय
स्पतिः । बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयऽआदित्यासोभवंतुनः । विश्वेदेवानोअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्तये । देवा
ऽअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः । स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति । स्वस्तिनऽइंद्रश्चाग्निश्चस्वस्तिनोअदि
तेकृधि । स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव । पुनर्ददताघ्नताजानतासंगमेमहि । शंनइंद्राग्नीतिपंचदशानांवसिष्ठोवि
श्वेदेवास्त्रिष्टुप् । जपेविनि० । ॐ शंनऽइंद्राग्नीभवतामवोभिः० ॥ १५ ॥ त्यमूष्वितितिसृणांताक्ष्योरिष्टनेमिस्ताक्ष्यस्त्रिष्टुप् ।
ॐ त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां । अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेताक्ष्यमिहाहुवेम । इंद्रस्येवरातिमाजो
हुवानाःस्वस्तयेनावमिवारुहेम । उर्वीनपृथ्वीबहुलेगभीरेमावामेतौमापरेतौरिषाम । सद्यश्चिद्यःशवसापंचकृष्टीःसूर्यऽइवज्यो
तिषापस्ततान । सहस्रसाःशतसाऽअस्यरंहिर्नस्मावरंतेयुवतिंनशर्या । तच्छंयोःशंयुर्विश्वेदेवाःशक्वरी । शांतिपाठेविनि० ।

ॐ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवींस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजं । शंनोअस्तुद्विपदे शंचतुष्पदे ॐ नमोब्रह्मणे० इतिशांतिः३ ॥ ४ ॥ ततोयजमानोनवग्रहप्रीत्यर्थंत्रीन्भुवनेश्वरीद्राणींद्रप्रीतयेचप्रत्येकंत्रींस्त्रीन्ब्राह्मणान्भोजयित्वासंकल्प्यवाविप्राशिषोगृहीत्वासुहृद्युतोभुंजीत । एवंकृतेसर्वारिष्टशांतिर्भवति । ततःशुभकालेगर्भाधानंकुर्यात् । इतिदुष्टरजोदर्शनशांतिः ॥ ॥ छ ॥ ॥ छ ॥

अथचंद्रसूर्योपरागकालेप्रथमरजोदर्शनेशांतिविशेषउच्यते । सचोपरागस्यपौर्णमास्यमावास्याभ्यामविनाभावात्तदतिरिक्तवारादौदुष्टेप्रागुक्तशांत्यासमुच्चीयते निमित्तभेदात् अदृष्टार्थत्वाच्च । प्रत्यक्षविध्यभावेतत्कार्यकारित्वानवगमेनामनहोमैर्नारिष्टहोमानामिवानयातन्निवृत्तियोगात् । ग्रहणमात्रेत्वियमेव । अत्रचपुनःश्रवणाभावान्नवग्रहमखःकृताकृतइतिविवेकः । तत्रकेवलायाःप्रयोगः । पूर्वोक्तकालेसस्त्रीकःशुचिःप्राङ्मुखउपविश्यप्राणानायम्यदेशकालौस्मृत्वाममपत्न्याश्चंद्रोपरागेप्रथमरजोदर्शनसूचितारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिंकरिष्यइतिसंकल्प्यप्राग्वद्दत्विकपूजांकुर्यात् । नवग्रहमखेसनवग्रहमिति । सूर्योपरागेतुसूर्योपरागेप्रथमेत्यादिवदेत् । ततआचार्यःशुचिदेशेगोमयेनोपलिप्यतत्रपंचवर्णरजोभिरष्टदलंपद्मंकृत्वातदुपरिनवंश्वेतवस्त्रंउदग्दशंस्थाप्ययथाशक्तिरजतनिर्मितांचंद्रप्रतिमां आप्यायस्वगोतमःसोमोगायत्री । चंद्रावाहनेविनियोगः । ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् । भवावाजस्यसंगथे । चंद्रायनमः चंद्रमावाहयामीतिस्थापयेत् । सूर्यग्रहेतुयथाशक्तिसुवर्णनिर्मितप्रतिमां आकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् । सूर्यावाहनेवि० । ॐ आकृष्णेनरजसावर्तं

मानोनिवेशयन्नमृतंमर्त्यंच । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् । सूर्यायनमःसूर्यमावाहयामीतिस्थापयेत् । ततोयथाशक्तिसोसनिर्मितांराहुप्रतिमां। स्वर्भानोरत्रीराहुरनुष्टुप् राह्वावाहनेवि० । ॐ स्वर्भानोरधयदिंद्रमायाअवोदिवोवर्तमानाअवाहन् । गूळ्हंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविंददत्त्रिः । राहवेनमःराहुमावाहयामीतितदुत्तरतःस्थापयेत् । ततो यस्मिन्नक्षत्रेग्रहणंतन्नक्षत्रदेवताप्रतिमांयथाशक्तिसुवर्णनिर्मितांतत्तन्मंत्रैर्नाममंत्रैर्वा । ॐ अश्विनावावाहयामीतिनमइतिप्रणवादिनमोंतैःस्थापयेत् । मंत्रास्त्वापस्तंवानामष्टौवाक्यानीतिप्रसिद्धाः । नामानितु । अश्विनौयमःअग्निःप्रजापतिःसोमःरुद्रः अदितिःबृहस्पतिःसर्पाःपितरः भगःअर्यमा सविता त्वष्टावायुःइंद्राग्नी मित्रःइंद्रःनिर्ऋतिःआपः विश्वेदेवाः विष्णुःवसवः वरुणःअजैकपात्अहिर्बुध्न्यःपूषेति । एवंदेवतात्रयमावाह्यैभिरेवमंत्रैःकांडानुसमयेनषोडशोपचारैःपूजयेत् । तत्रचंद्रग्रहेचंद्रायश्वेतानिवस्त्रगंधाक्षतमाल्यानिदेयानि । सूर्यग्रहेतुसूर्यायरक्तवस्त्ररक्तचंदनरक्ताक्षतकरवीरपुष्पाणिदेयानि । राहवेकृष्णानि । नक्षत्रदेवताभ्यःश्वेतानि । ततःपश्चिमतोऽग्निंप्रतिष्ठाप्यपक्षेनवग्रहानप्यावाहनपूर्वंसंपूज्यान्वाधानंकुर्यात् । तद्यथा । द्वेसमिधौगृहीत्वाचक्षुपीआज्येनेत्यंतमुक्त्वापक्षेपूर्ववन्नवग्रहानुद्दिश्याष्टशताष्टाविंशत्यन्यतमसंख्यामुद्दिश्यचंद्रममुकसंख्याभिः पालाशसमिदाज्यचरुतिलाहुतिभिः राहुंअमुकसंख्याभिर्दूर्वाज्यचरुतिलाहुतिभिः नक्षत्रदेवताममुकसंख्ययापालाशसमिदाज्यचरुतिलाहुतिभिर्यक्ष्ये शेषेणेत्युक्त्वाजुहुयात् । सूर्यग्रहेचंद्रस्थानेसूर्यममुकसंख्यार्कसमिदाज्यचरुतिलाहुतिभिरितिवदेत् । एवमन्वाधायप्रणीताप्रणयनांतंकृत्वात्रिभ्योमुष्मैत्वेतिचतुरश्चतुरोमुष्टीन्निरुप्यचरुंश्रपयित्वाज्यभागांतंकुर्या

त् । ततोयजमानोदक्षिणतोदेवताउद्दिश्यत्यजेत् । ततोन्वाधानक्रमेणजुहुयुः । तत्रतिसृणांदूर्वाणामेकैकाहुतिः । समिधश्च त्रिमध्वक्ताःकार्याः । ततःस्विष्टकृदादिपूर्णाहुत्यंतंप्राग्वत् । ततआचार्यएकस्मिन्कलशेजलपूर्णेपंचगव्यानिपंचरत्नानिवटाश्व त्थोदुंबराम्रबिल्वानात्वचःपंचपल्लवान्सर्वौषधिकल्कंदूर्वाःकुशांश्चनिक्षिप्यसऋत्विग्दंपतीपूर्ववदभिषिंचेदेभिर्मंत्रैः । आपोहि ष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्री । अभिषेकेविनि० । ॐ आपोहिष्ठामयो० । इमंमेगंगेसिंधुक्षित्प्रैयमेधाआपोज गती । अभिषे० । ॐ इमंमेगंगेयमुने० । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् । अभिषे० । ॐ तत्त्वायामि० । समुद्रज्येष्ठा इतिचतसृणांवसिष्ठआपस्त्रिष्टुप् । अभिषे० । ॐ समुद्रज्येष्ठाःसलिलस्य० । त्रायंतामितितिसृणांसप्तऋषयऽआपोनुष्टुप् । अ भिषे० । ॐ त्रायंतामिहदेवाः०।इमाआपइतितिसृणांसप्तऋषयआपोनुष्टुप् । अभिषे० । ॐ इमाआपःशिवतमा० । सुरास्त्वाम भिषिंचंतु० ॥ ९ ॥ इत्यादिभिर्वेदोक्तपौराणैर्मंत्रैरभिषिच्य । ततःस्नानदक्षिणादानप्रतिमाप्रतिपादनादिपूर्ववत् । यदातुपू र्वशांतिसमुच्चयःतदाकालैक्यात्कर्त्रैक्याच्चाग्नेयादिवत्तंत्रप्रयोगः । तत्रयजमानोदेशकालौस्मृत्वाममास्याःपत्न्याःप्रथमरजोदर्श नेमुकदुष्टमासतिथ्यादिअमुकग्रहणसूचितेत्यादिसंकल्प्यर्त्विक्पूजांतंविदध्यात् । तत्रआचार्योभुवनेश्वर्यादिपूजांतःप्राक्पश्चा द्वाततउदीच्यांचंद्रादीन्संपूज्ययथोपक्रमंनिर्वापहोमाभिषेकान्कुर्यादितिविशेषः । अन्यत्सर्वसमानं । इतिग्रहणरजोदर्शनशां तिः । इतिश्रीविद्वन्मुकुटमाणिक्यश्रीमद्रामेश्वरभट्टसुतनारायणभट्टकृतेप्रयोगरत्ने तज्ज्येष्ठसुतरामकृष्णोन्नीतादुष्टरजोद र्शनशांतिःसमाप्ता ॥

अथगर्भालंबनाख्यंगर्भाधानम् ॥ रजोदर्शनात्पोडशाहोरात्राणिऋतुस्तन्मध्येआद्यंरात्रिचतुष्कंपर्वादिनिपिद्धदिनानिच वर्जयित्वामघामूलादिव्यतिरिक्तेदैवज्ञोक्तेशुभकालेदंपत्योश्चंद्रानुकूल्येगर्भाधानंकार्यं । तत्रापियुग्मासुरात्रिषुपुत्राःअयुग्मासुकन्याजायंतेइत्यादिज्ञेयम् । अत्रायंक्रमः । कर्ताप्रातरभ्यंगस्नानंकृत्वापत्नीमपिनवोदकुंभसलिलैःसप्तमृत्तिकापंचपल्लवपंचत्वक्सहितैःस्नापयित्वातयासहमंगलवस्त्राभरणादिधृत्वाचम्यस्वस्तिवाचनाभ्युदयिकेकृत्वौपासनाग्निंमारुतसंज्ञंप्रतिष्ठाप्य प्रज्वाल्यदेशकालौस्मृत्वा अस्याममभार्यायाःप्रतिगर्भसंस्कारातिशयद्वाराऽस्यांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिवर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानाख्यंकर्मकरिष्ये । तदंगंगणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंच करिष्यइतिसंकल्प्यएतानिकृत्वासमिद्द्वयमादायगर्भाधानंकर्तुंप्राजापत्यहोमंकरिष्येतत्रदेवतापरिग्रहार्थमित्यादिचक्षुपीआज्येनेत्यंतमुक्त्वात्रप्रधानंप्रजापतिंचरुणा विष्णुंपड्वारमाज्येन प्रजापतिंचाज्येन शेपेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्द्वयमग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाप्रजापतयेत्वाजुष्टंनिर्वपामीत्यादिआज्यभागांतंकृत्वाऽवदानधर्मेणावदाय ॐ प्रजापतयेस्वाहेतिचरुणैकाहुतिंहुत्वा । विष्णुर्योनिमितितिसृणांत्वष्टाविष्णुरनुष्टुप् । गर्भाधानप्रधानाज्यहोमे वि० । ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धातागर्भंदधातुतेस्वाहा । विष्णवइदं० । ॐ गर्भं

१ ऋतौतुप्रथमेकुर्याद्गर्भाधानद्विजोत्तमः । अतस्त्रयोदशेचाह्निकुर्यादनवलोभनं । गर्भेमासितृतीयेतुकुर्यात्पुंसवनक्रियां । चतुर्थेचाष्टमेपष्ठेसीमंतोन्नयनक्रियां । स्त्रीसंस्कारास्तुचत्वारोगर्भाधानादितःक्रमात् । इतिचतुर्विंशतिमते ।

धेहिसिनीवालिगर्भंधेहिसरस्वति । गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजास्वाहा । विष्णवइ० । ॐ हिरण्ययीअरणीयंनिर्मंथतोअश्विना । तंतेगर्भंहवामहेदशमेमासिसूतवेस्वाहा । विष्णवइदं० । नेजमेषेतितिसृणांत्वष्टाविष्णुरनुष्टुप् । गर्भाधानप्रधानाज्यहोमेवि० । ॐ नेजमेषपरापतसुपुत्रःपुनरापत । अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान्स्वाहा । विष्णवइ० । ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे । एवंतंगर्भमाधेहिदशमेमासिसूतवेस्वाहा । विष्णवइदंन० । ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां । पुमांसंपुत्रानाधेहिदशमेमासिसूतवेस्वाहा । विष्णवइदं० । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । गर्भाधानप्रधानाज्यहोमेवि० । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइदंनमम । एवंसप्ताज्याहुतीर्हुत्वा । अपनःशोशुचदघमित्यष्टर्चस्यसूक्तस्यकुत्सोग्निर्गायत्री । पत्न्यामूर्धाभिमर्शनेवि० । ॐ अपनःशोशुचदघमग्नेशुशुग्ध्यारयिं । अपनःशोशुचदघं । सुक्षेत्रियासुगातुयावसूयाचयजामहे । अपनःशोशुचदघं । प्रयद्भंदिष्ठएषांप्रास्माकासश्चसूरयः । अपनःशो० । प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं । अपनः० । प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः । अपनः० । त्वंहिविश्वतोमुखविश्वतःपरिभूरसि । अप० । द्विषोनोविश्वतोमुखातिनावेवपारय । अपनः० । सनःसिंधुमिवनावयातिपर्षास्वस्तये । अपनःशोशुचदघं । याःफलिनीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् । जपेवि० । याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः । एतांजपित्वा । उदीर्ष्वेत्यश्वगन्धारसंभार्यायादक्षिणनासाबिलेनिषिच्य । वधेनदस्युमितिषण्णांवसुश्रुतोग्निस्त्रिष्टुप् । अग्न्युपस्थानेवि० । वधेनदस्युंप्रहि

चातयस्ववयंःकृण्वानस्तन्वे१स्वायै । पिपर्षियत्सहसस्पुत्रदेवान्सोअग्नेपाहिनृतमवाजेअस्मान् । वयंतेअग्नउक्थैर्विधेमवयंह
व्यैःपावकभद्रशोचे । अस्मेरयिंविश्ववारंसमिन्वास्मेविश्वानिद्रविणानिधेहि । अस्माकमग्नेअध्वरंजुषस्वसहसःसूनोत्रिषधस्थ
हव्यं । वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि । विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि । अग्नेअत्रि
वन्नमसागृणानोऽस्माकंबोध्यविताततनूनां । यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि । जातवेदोयशोअस्मासुधेहि
प्रजाभिरग्नेअमृतत्वमश्यां । यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं । अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति
॥ १ ॥ अग्निस्तुविश्रवस्तममितिद्वयोर्वसूयवोग्निरनुष्टुप् । अग्न्युपस्थानेविनि० । ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमम् ।
अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे । अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः । अग्निरत्यंरघुष्यदंजेतारमपराजितं । इत्य
ष्टाभिरग्निमुपस्थायस्विष्टकृदादिहोमशेषंसमाप्य । सूर्योनोदिवस्पात्वितिपंचर्चस्यसूक्तस्यचक्षुःसूर्योगायत्री । सूर्योपस्थाने० ।
ॐ सूर्योनोदिवस्पातुवातोऽअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । जोषासवितर्यस्यतेहरःशतंसवाँऽअर्हति । पाहिनोदिद्युतः
पतंत्याः । चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः । चक्षुर्धातादधातुनः । चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः । संचेदंविचप
श्येम । सुसंदृशंत्वावयंप्रतिपश्येमसूर्य । विपश्येमनृचक्षसः । अनेनसपत्नीकःसूर्यमुपस्थायब्राह्मणान्भोजयित्वातेभ्यःस्वस्त्य
यनपूर्वकमाशिषोगृहीत्वाभुंजीत । ततःसायंकालीननित्यकर्मकृत्वोभौशुक्लांबरानुलेपनमाल्याभरणादिभिरलंकृतौस्वलंकृतं
सुधूपितंगंधमाल्यामलदीपयुक्तंगृहंप्रविशेताम् । ततोभर्ताअभग्नंजंतुवर्जितंसुखस्पर्शवितानोपरिमंडितंमंचकमारुह्यप्रागुक्त

शोभनेमुहूर्तेस्त्रियमारोप्याश्वगंधाकल्कंदूर्वाकल्कंवासूक्ष्मवस्त्रेनिक्षिप्य । उदीर्ष्वेतिद्वयोःसूर्यासावित्रीसूर्यासावित्रीआद्यात्रिष्टुबंत्यानुष्टुप् । भार्यायादक्षिणनासापुटेश्वगंधादिरससेचनेविनियोगः । ॐ उदीर्ष्वातःपतिवतीह्येइ३पाविश्वावसुंनमसागीर्भिरीळे । अन्यामिच्छपितृषदंव्यक्तांसतेभागोजनुषातस्यविद्धि । उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा । अन्यामिच्छप्रफर्व्यं१संजायांपत्यासृजस्वाहेतिवामभागोपविष्टायाभार्यायादक्षिणनासाबिलेश्वगंधादिरसंसिक्त्वातद्रसेउदरंगतेतामाचमय्योपेयात् । इदानींशिष्टानस्यंदत्वैवस्विष्टकृदादिहोमशेषंसमापयंति । उपगमनेचायंक्रमः । गंधर्वस्यविश्वावसोर्मुखमसीतिमंत्रेणहोमोक्तऋष्यादिभिर्विष्णुर्योनिमितिसृभिर्नेजमेषेतिचतिसृभिस्त्रिरंगुलीभिर्योनिमभिमृश्य । तांपूषन्नित्यस्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् । जपेवि० । ॐ तांपूषञ्छिवतमामेरयस्वयस्यांवीजंमनुष्या३वपंति । यानऊरूउशतीविश्रयातेयस्यामुशंतःप्रहरामशेपं । योगर्भमित्यस्यवसिष्ठःपर्जन्योगायत्री । जपेविनियोगः । ॐ योगर्भमोषधीनांगवांकृणोत्यर्वतां । पर्जन्यःपुरुषीणां ॥ अहंगर्भंप्रजावान्प्राजापत्यगर्भइंद्रोवात्रिष्टुप् । जपेवि० । ॐ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः । अहंप्रजाअंजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान् । इतित्रीन्मंत्रान्जपित्वासकृदुपगच्छेत् । ततःप्राणेतेरेतोदधाम्यसावित्यनुप्राण्ययथाभूमिरग्निगर्भायथाद्यौरिंद्रेणगर्भिणी । वायुर्यथादिशांगर्भएवंतेगर्भंदधाम्यसावितिस्त्रीहृदयमभिमृश्याचामेत् । मंत्रद्वयेपिअसावित्यस्यस्थानेप्रथमैकवचनांतंस्वनामवदेत् । अस्मिन्कर्मणिशतंब्राह्मणाभोज्याःदशवा । यदिप्रथमरजोदर्शनंदुष्टतिथिवारनक्षत्रादिषुजायतेतदादोषपरिहारायशौनकोक्तांशांतिंकृत्वाप्रशस्ततिथ्यादिष्वृतुदर्शनपर्यंतंतस्यांगमनंवर्ज्यं । तदाहज्योति

वसिष्ठः—प्रभूतदोषेयदिदृश्यतेचेत्पुष्पंततःशांतिककर्मकार्यम् । विवर्जयेद्दैवतयैकशय्यांयावद्रजोदर्शनमिष्टकाले । एतत्कर्मा करणेप्रायश्चित्तं—गर्भाधानस्याकरणात्तस्यांजातस्तुदुष्यति । अकृत्वागांद्विजेदत्वाकुर्यात्पुंसवनंपतिः ॥ इतिगर्भाधानं ॥

अथपुंसवनानवलोभनयोःप्रयोगः ॥ गर्भमासप्रभृतितृतीयमासेगर्भाभिव्यक्तौतत्रानभिव्यक्तौतुचतुर्थेपष्ठेष्टमेवामासिअ रिक्तादितिथौपुष्यादिपुंनक्षत्रेशुक्रसोमबुधगुरुवारेषुविष्ट्यादिदोपरहितेदैवज्ञोक्तेकालेपुंसवनानवलोभनेकुर्यात् । अत्रनियत कालत्वाद्गुरुशुक्रास्तवाल्यवार्धकमलमासादिष्वपिनदोपः । दोपरहितकालालाभेतुशुक्रास्तादौनकार्ये । सीमंतदिनेवाकार्ये । एतेकरिष्यमाणःपतिःपूर्वेद्युःपुंसवनार्थसमानरूपवत्सायागोस्तदलाभेऽन्यस्यावाक्षीरंदध्यर्थं पुष्टंमाषद्वयंयवत्रयंचसंपाद्यवृत्ता कारमविरलच्छायमच्छावकाशंगृहैकदेशंकृत्वा विधिवत्स्वस्तिवाचनग्रहयज्ञाभ्युदयिकानिकृत्वागर्भाभिवृद्ध्यविरोधिहविषा कृतैकभक्तांभार्यांकृत्वाब्रह्मचारीसन्परेद्युरनुकूलकालेमंगलस्नातांपरिहिताहतवाससंप्रावृतप्रावरणीयांभूषणभूषितांभार्यांपूर्व कृतदेशेस्वदक्षिणतउपवेश्यसद्योवाकृतस्वस्तिवाचनादिदेशकालौस्मृत्वा । अस्यांभार्यायामुत्पत्स्यमानस्यगर्भस्यबैजिकगार्भि कदोपपरिहारपुंरूपताज्ञानोदयप्रतिरोधिपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंपुंसवनमनवलोभनंचतंत्रेणकरिष्येइतिसंकल्प्य । विधिवत्कौतुकसूत्रमाबध्य विधिवदौपासनाग्निंपवमानसंज्ञंप्रतिष्ठाप्य अद्यक्रियमाणेपुंसवनानवलोभनहोमेदेवतापरिग्रहार्थं मन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्यादिचक्षुपीआज्येनेत्यंतमुक्त्वा प्रजापतिंचरुद्रव्येण शेषेणस्विष्टकृतमित्याद्यु क्त्वान्वाधायपरिसमूहनपरिस्तरणादिप्रणीताप्रणयनावधिप्राक्तनतंत्रंकृत्वा प्रजापतयेत्वाजुष्टंनिर्वपामीतिचतुरोव्रीहिमुष्टी

न्निरुप्यप्रोक्षणावघातादिर्बर्हिषिहविरासादनांतंकृत्वा स्वदक्षिणतःप्रत्यग्ग्रीवमुत्तरलोमानडुहंचर्मास्तीर्यआत्मानमग्निंचांतराप त्नीमाचांतसलिलामानीयचर्मण्युपवेश्यतयान्वारब्धइध्माधानाद्याज्यभागांतंकृत्वा प्रक्षालितेप्रसृतीकृतेदक्षिणेपत्नीपाणौप्रसृ तिमितंतद्दोर्दधिनिक्षिप्यतदुपरिलिंगवद्यवंतत्पार्श्वयोरंडद्वयवन्माषद्वयंनिधाय किंपिबसीतित्रिःपतिःपत्नींपृच्छेत् । साचपुंस वनमितित्रिरुक्त्वासयवमाषंतद्दधिनिःशेषंपीत्वाजलेनाचम्य पुनरेवंद्विःप्रश्नप्रतिवचनपूर्वकंप्राश्याचामेत् । एतत्पुंसवनं । अनवलोभनंतु । दूर्वाःकन्ययादृषद्युपलेनपेषयित्वापिंडीकृत्यशुद्धवसनांचलेसंगृह्यप्रजावदाख्यंजीवपुत्रसंज्ञकंचसूक्तंजपि त्वा मंडलागारच्छायायामुपविष्टायाःप्राङ्मुख्याःपत्न्याःपश्चिमतस्तिष्ठन्पतिःतदाननमुन्नमय्यदक्षिणेनासाबिलेस्वांगुष्ठाग्रेणदू र्वारसमासिंचेत् ॥ तत्रप्रजावदाख्यंसूक्तम्—आतेगर्भोयोनिमैतुपुमान्बाणइवेषुधिम् । आवीरोजायतांपुत्रस्तेदशमास्यः । करोमितेप्राजापत्यमागर्भोयोनिमैतुते । अनूनःपूर्णोजायतामश्लोणोपिशाचधीतः । पुमांस्तेपुत्रोनारितंपुमाननुजायतां । ता निभद्राणिबीजान्यृषभाजनयंतुनौ । यानिभद्राणिबीजान्यृषभाजनयंतिनः । तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव । कामःस मृद्ध्यतांमह्यमपराजितमेवमे । यंकामंकामयेदेवतंमेवायोसमर्धय ॥ अथजीवपुत्राख्यंसूक्तं—अग्निरैतुप्रथमोदेवतानांसोस्यैप्र जांमुंचतुमृत्युपाशात् । तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् । इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदी र्घमायुः । अशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियम् । मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशं तु । मात्वंविकेशूरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतीप्रजांसुमनस्यमाना । अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघम् ।

शीर्ष्णः स्रजमिवोन्मुच्य द्विपद्भ्यः प्रतिमुंचामिपाशम् । देवकृतंब्राह्मणकल्पमानंतेनहन्मियोनिषदःपिशाचान् । क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तवजीवंतुपुत्राः । एतैर्दशभिर्मंत्रैर्नस्येदत्ते आचांतजलयापत्न्यास्पृष्टः प्राजापत्यचरुमवदानधर्मेणावदाय ॐ प्रजापतयेस्वाहेत्येकाहुतिंहुत्वा यत्तेसुशीमइतिमंत्रेणपत्न्याहृदयंपाणिनास्पृशेत् । यत्तेसुशीमइतिमंत्रस्यहिरण्यगर्भः प्रजापतिरनुष्टुप् । भार्यायाहृदयालंबनेवि० । ॐ यत्तेसुशीमेहृदयेहितमंतःप्रजापतौ । मन्येहंमांतद्विद्वांसंमाहंपौत्रमघंनियाम् । ततःस्विष्टकृदादिहोमशेषंसमाप्यशतंब्राह्मणाभोज्याः । इदंकर्मगर्भसंस्कारत्वात्प्रतिगर्भंकार्यम् । प्रथमगर्भएवेतिकेचित् । अस्यकर्तापतिस्तदसंभवेदेवरोवा ॥ इतिश्रीरामेश्वरभट्टसुतनारायणभट्टकृतेप्रयोगरत्नेपुंसवनानवलोभनेकर्मणी ॥ ॥

अथसीमंतोन्नयनम् ॥ तच्चगर्भमासापेक्षयाचतुर्थेषष्ठेष्टमेवामासि असंभवेयावत्प्रसवंशुक्लपक्षेपुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपदानुराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगशिरःसंज्ञकानांपुंनक्षत्राणांचतुर्धाविभक्तानांमध्यमपादद्वयेषष्ठ्यष्टमीद्वादशीचतुर्थीनवमीचतुर्दश्यमावास्याव्यतिरिक्ततिथौ सोमबुधबृहस्पतिशुक्रवारेषु चंद्रानुकूल्येविष्ट्यादिदोषाभावेशुभलग्नादौकार्यम् । अत्राप्यधिकमासगुरुशुक्रास्तादीनांनदोषः । कालांतरासंभवेनपूर्ववन्नियतकालत्वात् ॥ ॥ अथप्रयोगः ॥ सीमंतकर्मकरिष्यन्पतिरानडुहमजिनमपक्वफलयुग्मयुतावुंदुंबरस्तवकौतदभावेऽन्यस्तवकौवा त्रिशुक्लवर्णाशलल्रींत्रीणिकुशपिंजूलानिच

---

१ औदुंबरफलै सार्धमेकविंशकुशान्सदा । शक्त्यायतावदेवात्रकुर्यात्सीमंतकर्मणीतिलिंगपुराणम् । अथवा—एकविंशतिसंख्याकानुदुंबरफलान्वितान् । कुशानानीयशक्त्याथकुर्यात्सीमतकर्मचेतिदानमयूखे ।

संपाद्यपुण्याहवाचनाभ्युदयिकग्रहयज्ञादीनितदहरेवानुष्ठाय मंगलस्नातांपरिहितप्रावृताहतवासोयुगुलामलंकृतांपत्नींस्वदक्षिणतउपवेश्यदेशकालौस्मृत्वा तनुरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षेमसकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वाराप्रतिगर्भबीजगर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपंसीमंतोन्नयनाख्यंकर्मकरिष्येइतिसंकल्प्य । वधूंकृतकौतुकबंधामर्चितेष्टदेवतांकृत्वाशुभमुहूर्तेऔपासनाग्निंमंगलनामानंविधिवत्प्रज्वाल्य समिद्वयमादायपुनर्देशकालौस्मृत्वाद्यकरिष्यमाणेसीमंतोन्नयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा द्विर्धातारंद्वीराकांत्रिर्विष्णुंप्रजापतिंचैताःप्रधानदेवताआज्येनशेषेणस्विष्टकृतमित्यादिपूर्ववदुक्त्वा समिद्वयमग्नावाधायपरिसमूहनादिकृत्वा प्रत्यगग्नेःस्वस्यदक्षिणतःप्राग्ग्रीवमुत्तरलोमकमानडुहमजिनमास्तीर्योदगग्रैर्दर्भैषुप्रोक्षणीपात्रस्रुवौप्रणीताज्यपात्रेइध्माबर्हिषीचक्रमादासाद्याज्यसंस्कारांतेकृते तस्मिन्नजिनेतामाचांतोदकांप्राङ्मुखींपत्नीमुपवेश्यतयान्वारब्धइध्माधानाद्याज्यभागांतंकर्मकृत्वा । धाताददातुदाशुषइतिमंत्रद्वयस्यहिरण्यगर्भोधातानुष्टुप् द्वितीयात्रिष्टुप् । सीमंतोन्नयनप्रधानाज्य० । ॐ धाताददातुदाशुषेप्राचींजीवातुमक्षिताम् । वयंदेवस्यधीमहिसुमतिंवाजिनीवतःस्वाहा । धात्रइदं० । ॐ धाताप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान । धाताकृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोतस्वाहा । धात्रइदं० । राकामहमितिद्वयोर्गृत्समदोराकाजगती । विनियोगःप्राग्वत् । ॐ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना । सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यं स्वाहा । राकायाइदं० । ॐ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासि

दाशुषेवसूनि । ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणास्वाहा । राकायाइदं० । नेजमेषेतितिसृणांत्वष्टाविष्णुरनुष्टुप् । विनियोगःप्राग्वत् । ॐ नेजमेषपरापतसुपुत्रःपुनरापत । अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान्स्वाहा । विष्णवइदं० । यथेयंपृथिवीमह्युत्तानागर्भमादधे । एवंतंगर्भमाधेहिदशमेमासिसूतवेस्वाहा । विष्णवइदं० । ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां । पुमांसंपुत्रानाधेहिदशमेमासिसूतवेस्वाहा । विष्णवइदं० । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । विनियोगःप्राग्वत् । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइदं० ॥ ८ ॥ एवमष्टाज्याहुतीःस्रुवेणहुत्वा । ततः पत्न्याःपश्चिमतःप्राङ्मुखस्तिष्ठन्नपक्वफलयुग्मान्वितमौदुंबरस्तवकद्वयंत्रिशुक्लांशललींकुशांकुरत्रयंचैकीकृतंपाणिनागृहीत्वातन्मूलेनपत्न्याःकेशललाटयोःसंधिमारभ्यामूर्धप्रदेशात् ॐ भूर्भुवःस्वरोमितिमंत्रेणत्रिश्चतुर्वारंप्रत्युन्नयनंमंत्रमावर्तयन्सीमंतमुन्नयेत् । ॐ भूर्भुवःस्वरितिमंत्रस्यप्रजापतिःप्रजापतिर्बृहती । सीमंतव्यूहनेवि० । ततोयथाचारंसगोधूमामौदुंबरफलमालांतत्कंठेनिधायवीणागाथिनौद्विजौसोमंराजानंसंगायेतामितिप्रेषयेत् । तौच । ॐ सोमोनोराजावतुमानुषीःप्रजानिविष्टचक्रासावितिमंत्रंअसावितिस्थानेगंगेइत्यादिसमीपस्थनद्याःसंबुद्ध्यंतंनामनिर्दिशंतौवीणयागायेताम् । सामगानामपरिज्ञानेमंत्रमात्रंत्रिःपठेताम् । ततःस्विष्टकृदादिहोमशेषंसमाप्य

---

१ सीमंतसाम—हाँ उ ।३। सा ३८५ ऊर्मा २ उना २ उ राजा । वतु मानुषीः । प्रजा औ ३ हो हाइ । ना २३ इवाइ । ष्टा हौ हो ३ हुम्मा २३ चाक्रो ३८५ हाइ गांगे २३४५ । हांउ ३। वा ३। ई २३४५। इति ।

ब्रह्मणेऋषभंदक्षिणांतदभावेऽन्यस्मैविदुषेब्राह्मणायदत्त्वापतिपुत्रवतीभिर्वृद्धाभिरुपदिष्टमंगलाचारंकारयेत्।अस्मिन्कर्मणिश तंब्राह्मणाभोज्याः। इदंकर्मभर्त्रैवकार्यम्। इदंचप्रतिगर्भनावर्तते। तथाचहारीतः—सकृत्तुकृतसंस्काराःसीमंतेनद्विजातयः। यंयंगर्भप्रसूयेतससर्वःसंस्कृतोभवेत्। कारिकापि—नावर्ततइदंकर्मप्रतिगर्भमितिस्थितिरिति। अकृतसीमंतायाःप्रसवेविशेषः सत्यव्रतेनोक्तः—स्त्रीयद्यकृतसीमंताप्रसूयेतकथंचन। पुत्रंगृहीत्वाविधिवत्पुनःसंस्कारमर्हतीति ॥ ॥ इतिश्रीभट्टरामेश्वर सुतनारायणभट्टकृतेप्रयोगरत्नेसीमंतोन्नयनप्रयोगः ॥ ॥ ॥

अथविष्णुर्बलिः ॥ गर्भाष्टमेमासेपूर्वेद्युर्दंपतीस्नातौधृताहतवाससावलंकृतौभवेतां। ततःपतिःप्रागुक्तवदाभ्युदयिकंपुण्याह

---

१ आश्वलायन —तथाविष्णुबलिश्चापिसप्तवश्रेस्तुतुष्टये। प्रतिगर्भबलि.कार्य.सीमतश्चप्रशस्यते। अकृतेचभवेद्दोष.कृतेपुष्टिसमृच्छति। गर्भ बाधानिवृत्त्यर्थंसुखसूत्यर्थमेवच। महादोपापनुत्यर्थंबलि'कार्योयथाविधि। अत्रमासादिविधानवसिष्ठ —मास्यष्टमेचगर्भस्यकुर्याद्विष्णोर्वलिक्रिया। श्रवणर्क्षेचरोहिण्यांपुष्येचैवप्रशस्यते। द्वितीयासप्तमीचैवद्वादशीचशुभातिथिः। शुभग्रहोदया'श्रेष्ठास्तेपांचदिवसाअपि। पापारूयायारिगाःश्रेष्ठा नेष्टाःसर्वेऽष्टमेस्थिता। पूजाप्रकारोपिवसिष्ठेनोक्त.—पीताबरंकृष्णवर्णशखचक्रगदाबुजं। वैकुंठवासिनदेवमृत्कुंभेस्थापयेत्तत। विष्णोश्चरूपंक नकेनकृत्वातल्लिंगमत्रैरथगधपुष्पै.। वस्त्राक्षतैर्गुग्गुलुधूपदीपैर्नैवेद्यताबूलफलैश्चसम्यक्। विष्णुर्वैदेवतापूज्यगर्भाणांरक्षणायच। ब्राह्मणेभ्य.प्रदात व्याप्रतिमावस्त्रसयुता। सग्रहे—वैष्णवोह्यष्टमोमासोविष्णुर्गर्भस्यदेवता। बलिचतूष्णीवाकुर्याद्गर्भस्यपरितुष्टये। होममत्रै पूर्वबलिरुक्तस्तत्रतूष्णी वेतिविकल्प सस्कारकौमुद्या।

वाचनंकृत्वातदहरेववाइदंकृत्वादेशकालौस्मृत्वागुर्विण्याममपत्न्यागर्भस्यनिर्बाधपरिपोषणपूर्वकंसुखप्रसूतिसिद्ध्यर्थंगर्भाधिदे
वताविष्णुप्रीतिकामोहंविष्णुबलिनामकंकर्मकरिष्यइतिसंकल्प्य द्वितीयासप्तमीद्वादशीषुश्रवणरोहिणीपुष्येषुचंद्रबलेविष्ट्या
दिदोषाभावेपूर्वाह्णेगृहांगणेगृहेवास्थंडिलेगृह्याग्निंप्रतिष्ठाप्य पुनर्देशकालावुक्त्वाकरिष्यमाणेविष्णुबलिहोमेदेवतापरिग्रहार्थ
मित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा विष्णुंप्रधानदेवतांचतुःषष्टिवारंचरुणाशेषेणस्विष्टकृतमित्याद्युक्त्वान्वाधायपरिसमूहना
दिआज्येदर्भाग्रद्वयप्रक्षेपांतंकृत्वा सिद्धान्नेनसहाज्यंत्रिःपर्यग्निकृत्वास्रुवसंमार्जनांतंकृत्वाचरुंपात्रांतरेपृथक्कृत्वाग्नावधिश्रित्या
भिघार्योदगुद्वास्याज्याद्दक्षिणतोबर्हिष्यासाद्यप्रत्यभिघारणाद्याज्यभागांतंकृत्वा दक्षिणतोग्नेःस्थंडिलेऽष्टदलंपद्मंस्वस्तिकंवाप्र
कल्प्यतत्रविष्णुमावाह्यषोडशभिरुपचारैरभिपूज्य पुनर्यथासनमासित्वापत्न्यान्वारब्धोवदानधर्मेणचरुमवदायस्रुचाचतुःष
ष्टिमंत्रैश्चतुःषष्टिमाहुतीर्जुहुयात् । तत्रायंक्रमः । अतोदेवाइतिपळर्चस्यमेधातिथिर्विष्णुर्गायत्री । विष्णुबलिप्रधानचरुहोमेविनि
योगः ॐ अतो॑दे॒वा अ॑वंतु॒नो॒यतो॒विष्णु॑र्वि॑चक्र॒मे । पृ॒थि॒व्याः स॒प्तधाम॑भिः॒स्वाहा॑ । विष्णवइदंनमम । ॐ इ॒दंविष्णु॒र्विच॑क्रमे॒त्रेधानि
द॑धेप॒दं । सम॑ूढमस्यपांसु॒रेस्वाहा॑ । विष्ण० । ॐ त्रीणि॑प॒दाविच॑क्रमे॒विष्णु॒र्गोपाअदा॑भ्यः । अ॒तो॒धर्मा॑णिधा॒रय॒न्स्वाहा॑ । वि
ष्ण० । ॐ विष्णोः॒कर्मा॑णिपश्यत॒यतो॑व्र॒तानि॑पस्प॒शे । इंद्र॑स्य॒युज्यः॒सखा॒स्वाहा॑ । विष्ण० । ॐ तद्वि॒ष्णोः॑पर॒मंप॒दंसदा॑पश्यंतिसूर
यः । दि॒वी॑व॒चक्षु॒रात॑तं॒स्वाहा॑ । विष्ण० । ॐ तद्विप्रा॑सोविप॒न्यवो॑जागृ॒वांस॒ःसमि॑धते । विष्णो॒र्यत्पर॒मंप॒दंस्वाहा॑० ॥ ६ ॥
ॐ विष्ण० । विष्णोर्नुकमितिसप्तदशर्चस्यसूक्तस्यौचथ्योदीर्घतमाविष्णुस्त्रिष्टुप् सप्तम्याद्याजगत्यः विष्णुबलिप्रधानचरुहो

मेवि० । ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि । योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायःस्वा०।
विष्णव० । ॐ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः । यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वास्वा
हा । विष्ण० । ॐ प्रविष्णवेशूषमेतुमन्मगिरिक्षितउरुगायायवृष्णे । यइदंदीर्घंप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिःस्वा
हा । विष्ण० । ॐ यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणाःस्वधयामदंति । यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानि
विश्वास्वाहा । विष्ण० । ॐ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति । उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमे
मध्वउत्सःस्वाहा । विष्ण० । ॐ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः । अत्राहतदुरुगायस्यवृष्णःपरमंपद
मवभातिभूरिस्वाहा । विष्ण० ॥ १ ॥ ॐ प्रवःपातमंधसोधियायतेमहेशूरायविष्णवेचार्चत । यासानुनिपर्वतानामदाभ्या
महस्तस्थतुरर्वतेवसाधुनास्वाहा । विष्ण० । ॐत्वेषमित्थासमरणंशिमीवतोरिंद्राविष्णूसुतपावामुरुष्यति । यामर्त्यायप्रतिधी
यमानमित्कृशानोरस्तुरसनामुरुष्यथःस्वाहा । विष्ण० । ॐ ताईवर्धतिमह्यस्यपौंस्यंनिमातरानयतिरेतसेभुजे । दधातिपुत्रोवरं
परंपितुर्नामतृतीयमधिरोचनेदिवःस्वाहा । विष्ण० । ॐ तत्तदिदस्यपौंस्यंगृणीमसीनस्यत्रातुरवृकस्यमीढुषः । यःपार्थिवानि
त्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसेस्वाहा । विष्ण० । ॐ द्वेइदस्यक्रमणेस्वर्दृशोभिख्यायमर्त्योभुरण्यति । तृती
यमस्यनकिरादधर्षतिवयश्चनपतयंतःपतत्रिणःस्वाहा । विष्ण० । ॐ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीरवीविप
त् । बृहच्छरीरोविमिमानऋक्वभिर्युवाकुमारःप्रत्येत्याहवंस्वा० ॥ २ ॥ विष्ण० । ॐ भवामित्रोनशेव्योघृतासुतिर्विभूतद्यु

म्नएवयाउंसप्रथाः । अधातेविष्णोविदुषाचिदर्ध्यः स्तोमोयज्ञश्चराध्योहविष्मतास्वाहा । विष्ण० । ॐ यःपूर्व्यायवेधसेनवी
यसेसुमज्जानयेविष्णवेददाशति । योजातमस्यमहतोमहिब्रवत्सेदुश्रवोभिर्युज्यंचिदभ्यसत्स्वाहा । विष्ण० । ॐ तमुस्तोतारः
पूर्व्ययथाविदऋतस्यगर्भंजनुषापिपर्तन । आस्यजानंतोनामचिद्विविक्तनमहस्तेविष्णोसुमतिंभजामहेस्वाहा । विष्ण० । ॐ
तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः । दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँअपोर्णुतेस्वाहा ।
विष्ण० । ॐ आयोविवायसचथायदैव्यइंद्रायविष्णुःसुकृतेसुकृत्तरः । वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभ
जत्स्वाहा ॥ १७ ॥ विष्ण० । संवांकर्मणेत्यष्टर्चस्यसूक्तस्यभरद्वाजोविष्णुस्त्रिष्टुप् । विष्णुवलिप्रधानचरुहोमे० । ॐ संवां
कर्मणासमिषाहिनोमींद्राविष्णूअपसस्पारेअस्य । जुषेथांयज्ञंद्रविणंचधत्तमरिष्टैर्नःपथिभिःपारयंतास्वाहा । विष्ण० । ॐ
याविश्वासांजनितारामतीनामिंद्राविष्णूकलशासोमधाना । प्रवांगिरःशस्यमानाअवंतुप्रस्तोमासोगीयमानासोअर्कैःस्वाहा ।
विष्ण० । ॐ इंद्राविष्णूमदपतीमदानामासोमंयातंद्रविणोदधाना । संवामंजंत्वक्तुभिर्मतीनांसंस्तोमासःशस्यमानासउक्थैः
स्वाहा । विष्ण० । ॐ आवामश्वासोअभिमातिषाहइंद्राविष्णूसधमादोवहंतु । जुषेथांविश्वाहवनामतीनामुपब्रह्माणिशृणु
तंगिरोमेस्वाहा । विष्ण० । ॐ इंद्राविष्णूतत्पनयाय्यंवांसोमस्यमदउरुचक्रमाथे । अकृणुतमंतरिक्षंवरीयोप्रथतंजीवसेनोर
जांसिस्वाहा । विष्ण० । ॐ इंद्राविष्णूहविषावावृधानाग्राद्वानानमसारातहव्या । घृतासुतीद्रविणंधत्तमस्मेसमुद्रस्थःकल
शःसोमधानःस्वाहा । विष्ण० । ॐ इंद्राविष्णूपिवतंमध्वोअस्यसोमंदस्राजठरंपृणेथां । आवामंधांसिमदिराण्यग्मन्नुपब्रह्मा

णिशृणुतंहवंमेस्वाहा । विष्ण० । ॐ उभाजिग्यथुर्नपराजयेथेनपराजिग्येकतरश्चनैनोः । इंद्रश्चविष्णोयदपस्पृधेथांत्रेधासह
स्रंवितदैरयेथांस्वाहा ॥ ८ ॥ विष्ण० । परोमात्रयेतिचतुर्दशर्चस्यवसिष्ठोविष्णुस्त्रिष्टुप् । विष्णुबलिप्रधानचरुहोमे० । ॐ परो
मात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति । उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वाहा । विष्ण० । ॐ नते
विष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप । उदस्तभ्नानाकमृष्वंबृहंतंदाधर्थप्राचींककुभंपृथिव्याःस्वाहा । विष्ण० । ॐ
इरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या । व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा । विष्ण० ।
ॐ उरुंयज्ञायचक्रथुरुलोकंजनयन्तासूर्यमुषासमग्निम् । दासस्यचिद्वृषशिप्रस्यमायाजघ्नथुर्नरापृतनाज्येषुस्वाहा । विष्ण० ।
ॐ इंद्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टम् । शतंवर्चिनःसहस्रंचसाकंहथोअप्रत्यसुरस्यवीरान्स्वाहा । विष्ण० ।
ॐ इयंमनीषाबृहतीबृहंतोरुक्रमातवसावर्धयंती । ररेवांस्तोमंविदथेषुविष्णोपिन्वतमिषोवृजनेष्विंद्रस्वाहा । विष्ण० । ॐ
वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं । वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानःस्वाहा ॥ १ ॥
विष्ण० । ॐ नूमर्तोदयतेसनिष्यन्योविष्णवउरुगायायदाशत् । प्रयःसत्राचामनसायजातएतावंतंनर्यमाविवासात्स्वाहा ।
विष्ण० । ॐ त्वंविष्णोसुमतिंविश्वजन्यामप्रयुतामेवयावोमतिंदाः । पर्चोयथानःसुवितस्यभूरेरश्वावतःपुरुश्चंद्रस्यरायःस्वाहा ।
विष्ण० । ॐ त्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा । प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनामस्वाहा ।
विष्ण० । ॐ विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् । ध्रुवासोअस्यकीरयोजनासउरुक्षितिंसुजनिमाचकारस्वाहा ।

विष्ण० । ॐप्रतत्तेअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान् । तंत्वागृणामितवसमतव्यान्क्षयंतमस्यरजसःपराकेस्वाहा ।
विष्ण० । ॐ किमित्तेविष्णोपरिचक्ष्यंभूत्प्रयद्ववक्षेशिपिविष्टोअस्मि । मावर्पोअस्मदपगूहएतद्यदन्यरूपःसमिथेबभूथस्वाहा ।
विष्ण० । ॐ वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं । वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानःस्वाहा
॥ २ ॥ विष्णव० । तथा सहस्रशीर्षेतिपोळशर्चस्यसूक्तस्यनारायणःपुरुषोनुष्टुप् अंत्यात्रिष्टुप् । विष्णुबलिप्रधानचरु० । ॐ
सहस्रशीर्षापुरुषः० । विष्ण० । ॐ पुरुषएवेदंस० । विष्ण० । ॐ एतावानस्य० । विष्ण० । ॐत्रिपादूर्ध्वउदैत्० । विष्ण० । त
स्माद्विराळ० ॥ १ ॥ विष्ण० । ॐ यत्पुरुषेणहविषा० । विष्ण० । ॐ तंयज्ञंबर्हिषि० । विष्ण० । ॐ तस्माद्यज्ञात्सर्वहुतः०
विष्ण० । ॐ तस्माद्यज्ञात्सर्वहुतऋचः० । विष्ण० । ॐ तस्मादश्वाअजायंत० ॥ २ ॥ विष्ण० । ॐ यत्पुरुषंव्यदधुः० ।
विष्ण० । ॐ ब्राह्मणोस्यमुख० । विष्ण० । ॐ चंद्रमामनसोजा० । विष्ण० । ॐ नाभ्याआसी० । विष्ण० । ॐ सप्तास्या
सन्० । विष्ण० । ॐ यज्ञेनयज्ञमयजंत० ॥ ३ ॥ विष्ण० । विष्णुर्योनिमितितिसृणांहिरण्यगर्भोविष्णुरनुष्टुप् । विष्णुब
लिप्रधान० । ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धातागर्भंदधातुतेस्वाहा । विष्ण० । ॐ गर्भं
धेहिसिनीवालिगर्भंधेहिसरस्वति । गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजास्वाहा । विष्ण० । ॐ हिरण्ययीअरणीयंनिर्मथतो
अश्विना । तंतेगर्भंहवामहेदशमेमासिसूतवेस्वाहा ॥ ३ ॥ विष्णवइदंनमम० ॥ ६४ ॥ अनंतरमग्नेरैशान्यांद्वात्रिंशदंगुलायाम
विस्तारेगोमयेनोपलिप्तेस्थंडिलेचतुरंगक्रीडावत्समचतुरस्रंचतुरंगुलंचतुःषष्टिपदंसितेनरजसामंडलंकृत्वातेपुपदे नैर्ऋत्यपट

दिक्रमेणप्रथमंवाह्यावृत्तौततस्तथैवानंतरावृत्तिषुचप्रागुक्तचतुःषष्टिमंत्रैःप्रणवाद्यैःस्वाहांतैःप्रादक्षिण्येनचरुशेषेणवलीन्दत्त्वास वेत्रविष्णवइदंनममेत्युद्दिश्यत्यक्त्वातन्मंडलमध्ये ॐनमोनारायणायेतिवलिंदत्त्वापूर्ववत्त्यक्त्वा तेनैवमंत्रेणार्घ्यंचदत्त्वाबलि शेषात्किंचिदन्नमादायपिंडद्वयंकृत्वादंपतीपृथगश्नीयाताम्। तत आचम्यपतिःस्विष्टकृदादिहोमशेषंसमाप्यगुरवेदक्षिणांदत्त्वा यथाशक्तिब्राह्मणान्भोजयित्वादंपतीभुंजीयातां। अयंचविष्णुवलिःप्रतिगर्भमावर्तते। प्रतिगर्भंवलिःकार्यःसीमंतश्चप्रशस्यत इत्याश्वलायनोक्तेः। इदंचगृह्यसूत्रानुक्तत्वादिदानींशिष्टानाचरंति॥ इतिश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टविरचितेप्र योगरत्नेविष्णुबलिःसमाप्तः॥ ॥ छ ॥

अथजातकर्म॥ ॥ जातमात्रेपुत्रेपितातस्यमुखंनिरीक्ष्यनद्यादावुदङ्मुखःस्नात्वाअसंभवेदिवाहृताभिःशीताभिरद्भिःसुव र्णयुताभिर्गृहएवस्नात्वाचम्यसितचंदनमाल्यादिभिरलंकृतोनालच्छेदनात्पूर्वंसूतिकादिव्यतिरिक्तैरस्पृष्टमकृतस्तनपानंप्रक्षालि तमलंकुमारंमातुरुत्संगेप्राङ्मुखमवस्थाप्यदेशकालौस्मृत्वाममास्यकुमारस्यगर्भांबुपानजनितसकलदोषनिवर्हणायुर्मेधाभिवृद्धि वीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्येइतिसंकल्प्य ब्राह्मणैःसहपुण्याहवाचनंकृत्वाभ्युदयिक श्राद्धंहिरण्येनविधाय होमकरणपक्षेव्याहृतिभिर्लौकिकाग्निंप्रबलसंज्ञंविधिवत्प्रतिष्ठाप्यदेशकालौस्मृत्वास्मिन्जातकर्महोमेदेव तापरिग्रहार्थमन्वाधानंकरिष्यइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाअग्निमिंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणमाज्येनयक्ष्ये शेषेण स्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वान्वाधायपरिसमूहनाद्याज्यभागांतंकृत्वा प्रधानदेवताभ्यश्चतुर्थ्यंतनाममंत्रेणाज्यंहु

त्वादेवतोद्देशेनत्यागंकुर्यात् । ततोविषममानेनमधुसर्पिषीमिश्रीकृत्यशिलातलेनिक्षिप्य तत्रसुवर्णरजोविमोकंयावदवघृष्यभाजनेनिधाय । ॐ प्रतेंददामिमधुनोघृतस्यवेदंसवित्राप्रसूतंमघोनां । आयुष्मान्गुप्तोदेवताभिःशतंजीवशरदोलोकेअस्मिन्निति मंत्रेणतेनैवहिरण्येनकुमारंपाययित्वा तद्धिरण्यंप्रक्षाल्यकुमारस्यदक्षिणकर्णेनिधायतन्मुखसमीपेस्वमुखमानीय । ॐमेधांतेदेवःसवितामेधांदेवीसरस्वती । मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजौइत्यृचंजपित्वा पुनस्तद्धिरण्यंसव्येकर्णेनिधायैतामेवऋचंजपेत् । ॐ ततःशिशोरंसौयुगपदभिमृशेत् । ॐ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव । वेदोवैपुत्रनामासिसजीवशरदःशतंइतिमंत्रेण । इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् । अंसाभिमर्शनेवि० । ॐ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे । पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमह्नां । अस्मेप्रयंधिविश्वामित्रइंद्रस्त्रिष्टुप् । अंसाभिमर्शनेविनि० । ॐ अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायोविश्ववारस्यभूरेः । अस्मेशतंशरदोजीवसेधाअस्मेवीरान्छश्वतइंद्रशिप्रिन् । इतिमंत्राभ्यांचाभिमर्शः । ततोरक्षायुपोभिवृद्ध्यर्थ ॐ अंगादंगात्संभवसिहृदयादधिजायसे । आत्मावैपुत्रनामासिसजीवशरदःशतंइति मंत्रमुच्चार्यमूर्धानंत्रिराजिघ्रेत् । ततःशिशोःकरिष्यमाणंनामतदैवस्मरेत् । ततःस्विष्टकृदादिहोमशेषंसमाप्ययथाचारंहिरण्योदकेनमातुर्दक्षिणस्तनंप्रक्षाल्य । ॐ इमांकुमारोजरांधयतुदीर्घमायुःप्रजीवसे । अस्यैस्तनौप्रयुंजानाआयुर्वर्चोयशोबलंइतिमत्रेण मात्राकुमारंपाययित्वा ब्राह्मणेभ्योगोभूतिलहिरण्यादिकमन्नवर्जितंयथाशक्तिदत्त्वातैराशिषोवाचयेत् । जन्मलग्नेदुष्टस्थानस्थितग्रहजनितपीडानिवृत्तयेतत्प्रीत्यर्थविशेषतोदक्षिणादेया । तमर्वंतमितिपंचानांवामदेवोग्निर्गायत्री । ॐ तमर्वंतंनसान्

सिमरुषंनदिवःशिशुं । मर्मृज्यंतेंदिवेदिवे । बोधयन्माहरिंभ्यांकुमारःसाहदेव्यः । अच्छानहूतउदरं । उतत्यायंजताहरींकु
मारात्साहदेव्यात् । प्रयंतासद्यआददे । एषवांदेवावश्विनाकुमारःसाहदेव्यः । दीर्घायुरस्तुसोमकः । तंयुवंदेवावश्विनाकु
मारंसाहदेव्यं । दीर्घायुषंकृणोतन । इतिपंचभिराशिषः । होमोत्रकृताकृतः । कुमार्याश्चैतज्जातकर्मामंत्रकंकार्यम् । रात्रौसं
ध्यायांग्रहणेजाताशौचांतरमध्येपीदंकार्यम् । मृताशौचमध्येजातश्चेत्तदैवाशौचांतेवाकार्यम् । पितरिग्रामांतरंगतेपितृव्यादि
गोत्रजोज्येष्ठक्रमेणेदंकुर्यात् ॥ ॥ इतिश्रीभट्टरामेश्वरसुतनारायणभट्टकृतेप्रयोगरत्नेजातकर्मप्रयोगः ॥ ॥
अथषष्ठीपूजा ॥ ॥ पंचमेषष्ठेचदिनेषष्ठएववापूर्वरात्रेपित्रादिराचम्यप्राणानायम्यदेशकलौस्मृत्वाअस्यशिशोःआयुरा
रोग्यावाप्तिसकलारिष्टशांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थं विघ्नेशस्यजन्मदानांषष्ठीदेव्याजीवंतिकायाश्चयथामीलितोपचारैःपूजन
महंकरिष्यइतिसंकल्प्य षोडशोपचारैस्तंत्रेणपूजयेत् । पृथग्वासंकल्प्यपृथगेवपूजाकार्या । एतत्प्रतिमाश्चालेपनादिनाकुड्येले
खनीयाःपीठादौवाक्षतपुंजरूपेणनिवेश्याः । पुरुषाःशस्त्रहस्ताःस्त्रियश्चनृत्यगीतकारिण्योस्यांरात्रौजागरणंकुर्युः । सूतिकागृहं
सधूमाग्निदीपशस्त्रमुसलांबुविभूतियुतंकार्यं सर्षपांश्चसर्वतोविकिरेत् । अन्यदपियथाचारंसर्वंकार्यम् । जन्मदाभ्योन्नादिनाब
लिर्देयः विप्रेभ्यश्चतांबूलखाद्यदक्षिणादिदद्यात् । जन्माशौचमध्येप्रथमषष्ठदशमदिनेषुदानेप्रतिग्रहेचनदोषःअन्नंतुनिषिद्धं । अ
थपूजाक्रमः । आदौषडंगन्यासंकृत्वाकलशादिपूजांविधायअपवित्रःपवित्रोवासर्वावस्थांगतोपिवा । यःस्मरेत्पुंडरीकाक्षंसबा
ह्याभ्यंतरःशुचिः । इतिमंत्रेणप्रोक्षणंकृत्वापश्चाद्देवतास्थापनं । ॐ विघ्नेशायनमः विघ्नेशमावाहयामि । जन्मदाभ्यो०ज

न्मदाआ० । षष्ठीदेव्यैनमः षष्ठीदेवीमा० । जीवंतिकायै० जीवंतिकामा० । ( इत्यावाह्यपूजयेत् ) । ॐसूयवसाद्भगवती हिभूयाअथोवयंभगवंतःस्याम । अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरंती । इतिमंत्रेणषोडशोपचारैःपूजयेत् । संप्रार्थ्यआनोभद्रादीनिसूक्तानिसूतिकाबालकयोःसर्वारिष्टशान्त्यर्थंब्राह्मणाःपठेयुः । षष्ठीप्रार्थना । गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा । तथाममाप्ययंबालःषष्ठिकेरक्ष्यतांनमः ॥ इतिश्रीनारायणभट्टविरचितेप्रयोगरत्नेषष्ठीपूजाविधिः ॥ ॥

अथनामकरणप्रयोगः ॥ ॥ जन्मतएकादशेद्वादशेवायथाचारंनियतदिनेवानामकरणंकार्यम् । नियतकालेपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्याश्राद्धदिनेषुनकार्यम् ॥ नियतकालेक्रियमाणेगुरुशुक्रास्तबाल्यवार्धकवक्रातिचारमलमासादिनिषेधोनास्ति । नियतकालातिक्रमेतुज्योतिःशास्त्रोक्तेशुभेकालेकार्यम् । सर्वथात्रपूर्वाह्णःशस्तः । अत्रहोमःकृताकृतः । उक्तकालेशिशोर्नामचिकीर्षुर्विप्रानाहूयपूर्वेद्युस्तदहरेववास्वस्तिवाचनमुपक्रम्यपुण्याहत्रयमुक्त्वा करिष्यमाणंनामचतुर्थ्यंतमुक्त्वात्रिःएतन्नाम्नेस्वस्तिभवंतोब्रुवंत्वित्युक्तेविप्रैरेतन्नाम्नेस्वस्तीतित्रिःप्रत्युक्तेशेषंस्वस्तिवाचनंसमाप्य इदमार्याःकुमारस्यनामाहंविदधामीतिविप्राननुज्ञाप्य तैर्विधीयतामित्यनुमोदितोदेशकालौनिर्दिश्यास्यशिशोः बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्यइतिसंकल्प्य ग्रहयज्ञाभ्युदयिकेयथाशक्तिकृत्वायथाचारंस्वकुलदेवताभक्तइतिनामकृत्वा जन्मकालीनंमासनामकुर्यात् । तच्च । कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः । उपेंद्रोयज्ञपुरुषो

१ करिष्यमाणैतन्नाम्नेस्वस्ति । एतदित्यस्यस्थानेकरिष्यमाणनामोहेविकल्पः ।

वासुदेवस्तथाहरिः । योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् । अत्रयथाचारंचैत्रादिर्मार्गशीर्षादिर्वाक्रमः । ततःस्त्रीपुरुषवाचिदेवतावाचिवानामस्वेष्टंवायुग्माक्षरं द्व्यक्षरंप्रतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोनामकृत्वा ततोभिवादनीयंनामविप्रादिवर्णक्रमेणशर्मवर्मगुप्तदासान्यतमपदांतमुपांशुकुर्यात् । तच्चामौंजीवंधनान्मातापितरावेवजानीयातां । उपनयनकालेचानेननाम्नाभिवादयेतिकुमारंप्रतिवाच्यं । अत्रायंशिष्टाचारः । तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिसुवर्णशलाकयाकुलदेवताप्रयुक्तमादौअमुकदेवताभक्तइतिनामलेख्यं ततोमासनाम ततोऽवकहडाचक्राख्यज्योतिःशास्त्रोक्तचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरादिनाम ततोव्यावहारिकंस्वेष्टंनामेतिचतुष्टयंलिखित्वा नामदेवताभ्योनमइतिसंपूज्य अमुकनाम्नात्वममुकोसीतिस्वदक्षिणस्थमातुरुत्संगस्थस्यशिशोर्दक्षिणकर्णेकथयित्वा तदस्तुमित्रावरुणेत्यादिमंत्रपाठांते विप्रैर्नामसुप्रतिष्ठितमस्त्वित्युक्तेअमुकनाम्नाअमुकनामायंभवतोभिवादयतइत्युक्त्वा नामकर्ताप्रतिनामविप्रानभिवादयेत् तेचायुष्मान्भवत्वमुकइतिवदेयुरिति । नक्षत्रनामैवाभिवादनीयंगुप्तंचेत्यपिवदंति । ततःकर्तादेवताभ्योब्राह्मणेभ्यश्चनत्वायथाविभवंविप्रान्भोजयेद्दक्षिणांचदद्यात् । विप्राशिषश्चग्राह्याः । कुमार्याअपिनामकरणममंत्रकंकार्यम् । विषमाक्षरंतुतन्नाम । होमपक्षेतुपार्थिवाग्नौजातकर्मवदेवप्रधानाहुतीर्हुत्वानामयथोक्तंधृत्वास्विष्टकृदादिहोमशेषतंत्रंकुर्यात् । अत्रजातकर्मवत्पित्राद्याःकर्तारः ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेनामकरणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथपर्यंकारोहणं ॥ ॥ तत्रनामकरणदिनेषोडशेद्वात्रिंशेन्यस्मिन्वाज्योतिःशास्त्रोक्तमृदुध्रुवक्षिप्रनक्षत्रादियुक्तेशुभेका

न्मदाआ० । षष्ठीदेव्यैनमः षष्ठीदेवीमा० । जीवंतिकायै० जीवंतिकामा० । ( इत्यावाह्यपूजयेत् ) । ॐसूयवसाद्भगवती हिभूयाअथोवयंभगवंतःस्याम । अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरंती । इतिमंत्रेणषोडशोपचारैःपूजयेत् । संप्रार्थ्यआनोभद्रादीनिसूक्तानिसूतिकाबालकयोःसर्वारिष्टशान्त्यर्थंब्राह्मणाःपठेयुः । षष्ठीप्रार्थना । गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा । तथाममाप्ययंबालःषष्ठिकेरक्ष्यतांनमः ॥ इतिश्रीनारायणभट्टविरचितेप्रयोगरत्नेषष्ठीपूजाविधिः ॥ ॥

अथनामकरणप्रयोगः ॥ ॥ जन्मतएकादशेद्वादशेवायथाचारंनियतदिनेवानामकरणंकार्यम् । नियतकालेपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्याश्राद्धदिनेषुनकार्यम् ॥ नियतकालेक्रियमाणेगुरुशुक्रास्तबाल्यवार्धकवक्रातिचारमलमासादिनिषेधोनास्ति । नियतकालातिक्रमेतुज्योतिःशास्त्रोक्तेशुभेकालेकार्यम् । सर्वथात्रपूर्वाह्णःशस्तः । अत्रहोमःकृताकृतः । उक्तकालेशिशोर्नामचिकीर्षुर्विप्रानाहूयपूर्वेद्युस्तदहरेववास्वस्तिवाचनमुपक्रम्यपुण्याहत्रयमुक्त्वा करिष्यमाणंनामचतुर्थ्यंतमुक्त्वात्रिःएतन्नाम्नेस्वस्तिभवंतोब्रुवंत्वित्युक्तेविप्रैरेतन्नाम्नेस्वस्तीतित्रिःप्रत्युक्तेशेषंस्वस्तिवाचनंसमाप्य इदमार्याःकुमारस्यनामाहंविदधामीतिविप्राननुज्ञाप्य तैर्विधीयतामित्यनुमोदितोदेशकालौनिर्दिश्यास्यशिशोः बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्यइतिसंकल्प्य ग्रहयज्ञाभ्युदयिकेयथाशक्तिकृत्वायथाचारंस्वकुलदेवताभक्तइतिनामकृत्वा जन्मकालीनंमासनामकुर्यात् । तच्च । कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः । उपेंद्रोयज्ञपुरुषो

१ करिष्यमाणैतन्नाम्नेस्वस्ति । एतदित्यस्यस्थानेकरिष्यमाणनामोहेविकल्पः ।

वासुदेवस्तथाहरिः । योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् । अत्रयथाचारंचैत्रादिर्मार्गशीर्षादिर्वाक्रमः । ततःस्त्रीपुरुषवाचिदेवतावाचिवानामस्वेष्टंवायुग्माक्षरं त्र्यक्षरंप्रतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोनामकृत्वा ततोभिवादनीयंनामविप्रादिवर्णक्रमेणशर्मवर्मगुप्तदासान्यतमपदांतमुपांशुकुर्यात् । तच्चामौंजीबंधनान्मातापितरावेवजानीयातां । उपनयनकालेचानेननाम्नाभिवादयेतिकुमारंप्रतिवाच्यं । अत्रायंशिष्टाचारः । तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिसुवर्णशलाकयाकुलदेवताप्रयुक्तमादौअमुकदेवताभक्तइतिनामलेख्यं ततोमासनाम ततोऽवकहडाचक्राख्यज्योतिःशास्त्रोक्तचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरादिनाम ततोव्यावहारिकंस्वेष्टंनामेतिचतुष्टयंलिखित्वा नामदेवताभ्योनमइतिसंपूज्य अमुकनाम्नात्वममुकोसीतिस्वदक्षिणस्थमातुरुत्संगस्थस्यशिशोर्दक्षिणकर्णेकथयित्वा तदस्तुमित्रावरुणेत्यादिमंत्रपाठांते विप्रैर्नामसुप्रतिष्ठितमस्त्वित्युक्ते अमुकनाम्नाअमुकनामायंभवतोभिवादयतइत्युक्त्वा नामकर्ताप्रतिनामविप्रानभिवादयेत् तेचायुष्मान्भवत्वमुकइतिवदेयुरिति । नक्षत्रनामैवाभिवादनीयंगुप्तंचेत्यपिवदंति । ततःकर्तादेवताभ्योब्राह्मणेभ्यश्चनत्वायथाविभवंविप्रान्भोजयेद्दक्षिणांचदद्यात् । विप्राशिषश्चग्राह्याः । कुमार्याअपिनामकरणममंत्रकंकार्यम् । विषमाक्षरंतुतन्नाम । होमपक्षेतुपार्थिवाग्नौजातकर्मवदेवप्रधानाहुतीर्हुत्वानामयथोक्तंधृत्वास्विष्टकृदादिहोमशेषतंत्रंकुर्यात् । अत्रजातकर्मवत्पित्राद्याःकर्तारः ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेनामकरणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथपर्यंकारोहणं ॥ ॥ तत्रनामकरणदिनेषोडशेद्वात्रिंशेन्यस्मिन्वाज्योतिःशास्त्रोक्तमृदुध्रुवक्षिप्रनक्षत्रादियुक्तेशुभेका

लेयथाचारंकुलदेवतादिपूजांविधायालंकृतंहरिद्राद्यलंकृतेपर्यंकेमात्राद्याःसौभाग्ययुक्ताःस्त्रियोयोगशायिनंहरिंस्मरंत्योगीतवा
द्यादिसमकालंप्राक्शिरसंन्यसेयुः । स्वस्वाचारप्राप्तंचान्यदपिकार्यम् ॥ ॥ अथदुग्धपानम् ॥ एकत्रिंशदिनेद्वितीयजन्मन
क्षत्रेवान्यस्मिन्वान्नप्राशननक्षत्रयुक्तेशुभदिनेकुलदेवतादिपूजांतेगोक्षीरंशंखेनधात्रीमातान्यावासुभगालंकृतंकुमारंदक्षिणशिर
संप्राक्शिरसंवापाययेदिति॥ ॥अथकर्णवेधः॥ जन्मदिनाद्द्वादशेत्रिंशेवादिनेषष्ठसप्तमाष्टमदशममासान्यतममासेऽन्यदावा
दंतजननात्पूर्वमेवज्योतिःशास्त्रोक्तमासशुक्लपक्षतिथिवारनक्षत्रादिशुभकालेपूर्वाह्णेमध्याह्नेवाविष्णुशिवब्रह्मचंद्रसूर्यदिगीशना
सत्यसरस्वतीकुलदेवतागोब्राह्मणान्यथाविभवंसंपूज्यमात्रुत्संगस्थस्यशुभासनस्थस्यालंकृतस्यशिशोःकर्णयोर्वेध्यस्थलमलक्तक
रसेनांकयित्वायथाविभवंसुवर्णरूप्यताम्रलोहसूच्यामांगलिकद्विगुणपट्टादिसूत्रोपेतयासौचिकेनान्येनवाकुशलेनसुभगस्त्रिया
वाप्राङ्मुखस्योदङ्मुखस्यवाकर्णौवेधयेत् । अनावृतेसूर्यरश्मिपातस्थलेंऽगणादौपित्रादिना कुमारस्यपूर्वंदक्षिणः कुमार्यास्तुपू
र्वंवामः कर्णोवेध्यः । वेधनक्षत्रतृतीयनक्षत्रेकर्णक्षालनमुष्णवारिणारोहणार्थंकार्यं । रूढौचकर्णौयथाभरणधारणक्षमताभव
तितथावर्धनीयौ पुंसःसूर्यरश्मिप्रवेशयोग्यरंध्रपर्यंतंवर्धयेल्लंबकर्णतातुनिषिद्धा । स्त्रीणांयथेच्छम् ॥ ॥छ॥
अथसूर्यावलोकनिष्क्रमणे ॥ जननात्तृतीयेमासिजन्मदिनेजन्मनक्षत्रेवाइष्टदेवतापूजनपूर्वकमलंकृतेनशिशुनासोत्सवंसू
र्यदर्शनंकारयित्वाचतुर्थमासेशुभकालेऽग्निंचंद्रंधेनुंचदर्शयेत् । केचित्तु । स्वस्तिनआत्रेयोविश्वेदेवास्त्रिष्टुप् । शिशोरंकारोपणे

विनियोगः । ॐ स्वस्तिनोमिमीतामश्विनाभर्गःस्वस्तिदेव्यदितिरनर्वणः । स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचे तुना । अनेनपित्रादिःशिशुमंकमारोप्य । आशुःशिशानइतित्रयोदशर्चस्याप्रतिरथस्यसूक्तस्यऐंद्रोप्रतिरथइंद्रश्चतुर्थ्याबृहस्पति स्त्रिष्टुप् त्रयोदश्यनुष्टुप् शिशोरायुष्याभिवृद्ध्यर्थंजपेवि० । ॐ आशुःशिशानोवृषभोनभीमो० तच्चक्षुर्वसिष्ठःसूर्यःपुरउष्णिक् । कुमारस्यादित्यावेक्षणेवि० । ॐ तच्चक्षुर्देवहितंशुक्रमुच्चरत् । पश्येमशरदःशतंजीवेमशरदःशतम् । इतिसूर्यंनिरीक्षयेदितिव दंति । तृतीयमासेसूर्यावलोकनंनकारितंचेन्निष्क्रमणेनसहैवकार्यम् ॥ ॥ अथनिष्क्रमणविधिः । ततश्चतुर्थेमासिषष्ठेवाशुक्लपक्षे शुभतिथ्यादौपितासभार्यशिशुरभ्यंगस्नातः ममशिशोःआयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंनि ष्क्रमणाख्यंकर्मकरिष्ये इतिसंकल्प्य तदंगतयास्वस्तिवाचनाभ्युदयिकग्रहयज्ञान्कृत्वा इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरे शानानांप्राच्यादिदिशांचंद्रार्कवासुदेवगगनानांचयथाक्रमंतंदुलपुंजेषुपूजांकृत्वा ब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाचयित्वा सायंसंध्यादिकंकृत्वा शिशुंसौवर्णैःकृत्रिमैर्वाभरणैर्यथाशक्त्यलंकृत्यपूर्वंनकृतंचेदिदानींशिशुनाग्निचंद्रधेनूनांदर्शनंकारयित्वा ऽश्वादिवाहनस्थंशिशुंमातुलेनधात्यावावाहयित्वाभार्यापुत्रविद्वद्ब्राह्मणज्ञातिबांधवपुरंध्रीगणदर्पणपूर्णकलशयुक्तकन्यागणपु ष्पहरिद्राक्षतदीपमालाध्वजलाजमंगलवाद्यघोषयुक्तः ॐ कनिक्रदज्जनुषं० ॥ ३ ॥ प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऋ तुथाशकुंतयः । उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति । उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि । वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद । आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनः

सुमतिंचिकिद्धिनः । यदुत्पतन्वदसिकर्करियथावृहद्वदेमविदथेसुवीराः । इत्यादिशकुंतादिसुमंगलसूक्तंपठन्गृहाद्बहिर्गत्वामं
त्रमेतमुदीरयेत् । चंद्रार्कयोर्दिगीशानांदिशांचवरुणस्यच । निक्षेपार्थमिदंदद्मितेत्वांरक्षंतुसर्वदा । अप्रमत्तंप्रमत्तंवादिवारा
त्रावथापिवा । रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः । एवंशिशुरक्षणार्थंदेवान्संप्रार्थ्यविष्णुशिवालययोरन्यतरद्बंधुगृहंवागत्वा
तत्रदेवंसुमंगलवाद्यघोषपुष्पोपहारादिभिःप्रपूज्यगोमयाद्यनुलिप्तचतुरस्रदेशेधान्यादिनिधायतत्रशिशुमासयित्वामंत्रेणरक्षांकु
र्यात् । मंत्रश्च । त्र्यंवकमित्यस्यवसिष्ठोमृत्युंजयरूद्रयंवकोनुष्टुप् शिशोरक्षायांवि०। ॐहौंजूंसः ॐभूर्भुवःस्वः ॐत्र्यंवकंयजामहेसुगं
धिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ । इत्येवंरूपंमृतसंजीवनीमंत्रं
जपन्विभूत्याक्षतैर्वामूर्ध्निललाटेचरक्षांकृत्वाअपूपादिभिर्भूतेशानगणेशमभ्यर्च्यशिशुंभक्ष्यादिभिस्तोषयित्वाशिषोवाचयित्वादे
वताप्रणामंप्रदक्षिणत्रयंचशिशुनाकारयित्वामातुलाद्यासन्नबंधुगृहेपूर्ववन्नीत्वातत्रदानोपहारादिभिः शिशुंतोषयित्वास्वगृहंग
त्वाब्राह्मणैराशिषोवाचयित्वातेभ्यःसुवासिनीभ्यश्चयथाशक्तिदक्षिणांदत्वावंधुभिःसहभुंजीत । कुमार्याअप्येतत्समानम् ।
होमोत्रकृताकृतः । होमपक्षेशिशोरलंकरणानंतरंलौकिकाग्निंप्रतिष्ठाप्यजातकर्मवदनादेशदेवताभ्योहुत्वाअग्निचंद्रदर्शनादि
स्वगृहगमनांतंकृत्वास्विष्टकृदादिहोमशेषंसमाप्यब्राह्मणाशीर्वादादिकारयेदितिक्रमः ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेसू
र्यावलोकननिष्क्रमणप्रयोगौ ॥ ॥ ॥ ॥

अथोपवेशनविधिः ॥ ॥ पंचमेमासिशुक्लपक्षेज्योतिःशास्त्रोक्तशुभतिथ्यादौपूर्वाह्णेस्वस्तिवाचनंकृत्वावराहपृथिवीगुरु

देवद्विजान्पूजयित्वाभूभागमुपलिप्यतत्रमंडलंकृत्वातत्रशंखतूर्यादिमांगलिकध्वनौक्रियमाणेभूमौशिशुमुपवेशयेदेतैर्मंत्रैः । र
क्षैनंवसुधेदेविसदासर्वगतंशुभे । आयुःप्रमाणंनिखिलंनिक्षिपस्वहरिप्रिये । अचिरादायुपस्त्वस्ययेकेचित्परिपंथिनः । जीविता
रोग्यवित्तेषुनिर्दहस्वाचिरेणतान् । धारिण्यशेपभूतानांमातस्त्वमधिकाह्यसि । कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतामिति ।
ततोब्राह्मणान्पूजयित्वाशिपोवाचयित्वानीराजनाद्युत्सवंकुर्यात् । एवंकुमार्याअपि ॥

अथान्नप्राशनप्रयोगः ॥ ॥ जन्मतःपष्ठेमासेऽष्टमेवादंतेपुजातेपुवाज्योतिःशास्त्रोक्ततिथिनक्षत्रादिशुभकालेपूर्वाह्णेपित्रा
दिःशिशोरन्नप्राशनंकुर्यात् । पष्ठेमासेचेत्क्रियतेतदागुरुशुक्रमौढ्यादिदोपोऽधिकमासादिदोपश्चनास्ति । पित्रादिःसभार्यःशि
शुनासहमंगलस्नानंकृत्वादेशकालौस्मृत्वा ममास्यशिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसतेजइंद्रियायुर्लक्षणफलसिद्धि
बीजगर्भसमुद्भवैनोनिवर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनाख्यंकर्मकरिष्यइतिसंकल्प्य तदंगस्वस्तिवाचनाभ्युदयिकेकृ
त्वाशिशुमलंकृत्यजातकर्मवल्लौकिकाग्निंशुचिनामानंप्रतिष्ठाप्यानादेशाज्याहुतीर्हुत्वापूजोपहारादिभिरिष्टदेवतामभ्यर्च्य त
त्पुरतःस्वदक्षिणेशुभवस्त्रोपरिमात्रुत्संगेप्राङ्मुखोपविष्टस्यशिशोःप्रथमान्नप्राशनंकारयेत् । दधिमधुघृतमिश्रमन्नंशुभेभाजनेप्र
क्षिप्य । अन्नपतइत्यस्यनलकूवरोन्नपतिर्जगती । शिशोरन्नप्राशनेविनियोगः । ॐ अन्नपतेन्नस्यनोधेह्यनमीवस्यशुष्मिणः ।
प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे । इतिमंत्रेणससुवर्णहस्तोऽन्नमादाय प्रथमकवलंप्राशयित्वायथेष्टंभोजयित्वामुखंप्र
क्षाल्य वालंभूमावुपवेश्य तदग्रेपुस्तकशस्त्रवस्त्रादिशिल्पानिविन्यस्यजीविकापरीक्षांकुर्यात् ॥ शिशुःस्वेच्छयायत्प्रथमंस्पृशे

त्सास्यजीविकेतिविद्यात् । ततःस्विष्टकृदादिहोमशेषंसमाप्ययथाशक्तिब्राह्मणान्भोजयित्वा दक्षिणांदत्त्वाशिषोवाचयित्वाबंधुभिःसहस्वयंभुंजीत । होमोत्रकृताकृतः । होमपक्षेपूर्वेद्युर्नांदीश्राद्धंकुर्यात् । अनवकाशेतद्दिनएववाकुर्यात् । कुमार्या अप्येतदमंत्रकंकार्यम् । किंतुपंचमादिविषमेमासे ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेअन्नप्राशनप्रयोगः ॥ ॥

अथवर्धापनविधिः ॥ ॥ आदित्यपुराणे । सर्वैश्चजन्मदिवसेस्नातैर्मंगलवारिभिः । गुरुदेवाग्निविप्राश्चपूजनीयाःप्रयत्नतः । स्वनक्षत्रंचपितरस्तथादेवःप्रजापतिः । प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः । स्वनक्षत्रंस्वनक्षत्रदेवता । स्वनक्षत्रंवित्तपश्चेतिक्वचित्पाठस्तदावित्तपःकुबेरः । अत्रप्रयोगः । प्रतिवर्षजन्मदिनेसौरमानेनजन्मनक्षत्रेवायजमानःपूर्वाह्णेभ्यज्यस्नात्वा सर्वौषधियुतजलपूरितकलशंसंपूज्यतदुदकेनस्नातःशुक्लांबरधरोयथाविभवमलंकृतोविधिवत्स्वस्तिवाचयित्वाकौतुकमाबध्यदूर्वाहोमंकुर्यात् । तत्रायंक्रमः । देशकालौस्मृत्वाममाब्दपूर्तिजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंदूर्वाहोमंकरिष्येइतिसंकल्प्यविधिवदग्निंप्रतिष्ठाप्य पुनर्देशकालौसंकीर्त्यसमिधावादायाऽस्मिन् दूर्वाहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्य इत्युक्त्वाअस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा प्रधानदेवतांमृत्युंजयमष्टोत्तरशतंदूर्वाद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिधावग्नावाधाय परिसमूहनाद्याज्यभागांतंकृत्वादधिमधुघृताक्तंकेवलाज्याक्तंवादूर्वात्रयंत्रयम् । त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयस्त्र्यंबकोनुष्टुप् । दूर्वाहोमेवि० । ॐ हौंजूंसः ॐ भूर्भुवःस्वः । ॐ त्र्यंबकंयजामहे सुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ स्वाहा इत्यनेनमंत्रेणाष्टो

त्तरशतंहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् । ततोविधिवद्ब्रह्मयज्ञंकृत्वाआयुषेचरुहोमंसंकल्पपूर्वकंकुर्यात् । तत्रायंक्रमः । देशकालौसंकीर्त्यास्मिन्होमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाविश्वान्देवान्दशवारमग्निंषोडशवारंजातवेद समग्निमेकवारंचरुद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्युक्त्वासमिधावग्नावाधाय परिसमूहनाद्याज्येदर्भाग्रद्वयप्रक्षेपां तंकृत्वासिद्धान्नमाज्यसमीपेनिधायाज्येनसहतदन्नंत्रिःपर्यग्निकृत्वाज्योद्वासनादिस्रुवसंमार्जनांतंकृत्वान्नंपात्रेपृथक्कृत्वाग्नावधि श्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्यादक्षिणतोवर्हिष्यासाद्यपुनरभिघारणाद्याज्यभागांतंकृत्वा । आनोभद्राइतिदशर्चस्यसूक्त स्यगौतमोविश्वेदेवाआद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थानाअष्टम्याद्यास्तिस्रस्त्रिष्टुभः । सर्वेषांचरुहोमेवि० । ॐ आनो भद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतासउद्भिदः । देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवेस्वाहा । विश्वे भ्योदेवेभ्यइदंनमम । ॐ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां । देवानांसख्यमुपसेदिमावयंदेवानऽआ युःप्रतिरंतुजीवसेस्वाहा विश्वे० । ॐ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं । अर्यमणंवरुणंसोममश्विनास रस्वतीनःसुभगामयस्करत्स्वाहा विश्वे० । ॐ तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणःसोमसुतो मयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवंस्वाहा विश्वे० । तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं । पूषानोयथावे दसामसद्वृधेरक्षितापायुरदब्धःस्वस्तयेस्वाहा विश्वे० । स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योअ रिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातुस्वाहा विश्वे० ॥ १ ॥ ॐ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ।

अग्निर्जिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निहस्वाहा विश्वे० । ॐ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभि
र्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुःस्वाहा विश्वे० । ॐ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंत
नूनां । पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोःस्वाहा विश्वे० । ॐ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपि
तासपुत्रः । विश्वेदेवाअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वंस्वाहा विश्वे० ॥२॥ इमंस्तोममितिषोळशर्चस्यसूक्तस्यांगि
रसःकुत्सोग्निरादितश्चतुर्दशजगत्यः अंत्येद्वेत्रिष्टुभौ पूर्वोदेवाभवत्वित्यादित्रयःपादादेवदेवत्याः तन्नोमित्रोर्धर्चोलिंगोक्तदेव
तोऽग्निदैवत्यश्च । सर्वेषांचरुहो० । ॐ इमंस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया । भद्राहिनःप्रमतिरस्यसंसद्यग्नेस
ख्येमारिषामावयंतवस्वाहा । अग्नयइदंनमम । ॐ यस्मैत्वमायजसेससाधत्यनर्वाक्षेतिदधतेसुवीर्यं । सतूतावनैनमश्नोत्यंहु
तिरग्ने० स्वा० । अग्नय० । ॐ शकेमत्वासमिधंसाधयाधियस्त्वेदेवाहविरदंत्याहुतं । त्वमादित्याँआवहतान्ह्यु१श्मस्यग्ने०
स्वा० । अग्नय० । ॐ भरामेध्मंकृणवामाहवींषितेचितयंतःपर्वणापर्वणावयं । जीवातवेप्रतरंसाधयाधियोऽग्ने० स्वा० । अ
ग्नयइदंनमम । ॐविशांगोपाअस्यचरंतिजंतवोद्विपच्चयदुतचतुष्पदक्तुभिः । चित्रःप्रकेतउपसोमहाँअस्यग्ने०स्वा० । अग्नय० ।
त्वमध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुषापुरोहितः । विश्वाविद्वाँआर्त्विज्याधीरपुष्यस्यग्नेसख्ये०स्वा० । अग्नय० । ॐ
योविश्वतःसुप्रतीकःसदृङ्ङसिदूरेचित्सन्तळिदिवातिरोचसे । रात्र्याश्चिदंधोअतिदेवपश्यस्य०स्वा० । अग्नय० । ॐ पूर्वोदेवा
भवतुसुन्वतोरथोस्माकंशंसोअभ्यस्तुदूढ्यः । तदाजानीतोतपुष्यतावचोग्नेसख्ये०स्वा० । अग्नय० । ॐ वधैर्दुःशंसाँ ३१

न्वोजहिदूरेवायेअंतिवाकेचिंदत्रिणः । अथायज्ञायगृणतेसुगंकृध्यग्ने० स्वाहा० । अग्नय० । ॐ यदयुक्थाअरुपारोहितारथे
वातजूतावृपभस्येवतेरवः । आदिन्वसिवनिनोधूमकेतुनाग्नेसख्येमारि०स्वा० । अग्नय० ॥ २ ॥ ॐ अधस्वनादुतबिभ्युःप
तत्रिणोद्रप्सायत्तेयवसादोव्यस्थिरन् । सुगंतत्तेतावकेभ्योरथेभ्योग्ने०स्वा० । अग्नय० । ॐ अयंमित्रस्यवरुणस्यधायसेवया
तांमरुतांहेळोअद्भुतः । मृळासुनोभूत्वेपांमनःपुनरग्ने० स्वा० । अग्नय० । ॐ देवोदेवानामसिमित्रोअद्भुतोवसुर्वसूनामसि
चारुरध्वरे । शर्मन्स्यामतवसप्रथस्तमेग्ने०स्वाहा । अग्नय० । ॐ तत्तेभद्रंयत्समिद्धःस्वेदमेसोमाहुतोजरसेमृळयत्तमः । दधा
सिरत्नंद्रविणंचदाशुपेग्ने० स्वाहा० । अग्नय० । ॐ यस्मैत्वंसुद्रविणोददाशोनागास्त्वमदितेसर्वताता । यंभद्रेणशवसाचोदया
सिप्रजावताराधसातेस्यामस्वाहा । अग्नय० । ॐ सत्वमग्नेसौभगत्वस्यविद्वानस्माकमायुःप्रतिरेहदेव । तन्नोमित्रोवरुणोमाम
हंतामदितिःसिंधुःपृथिवीउतद्यौःस्वाहाअग्नय० ॥ ३ ॥ जातवेदसइत्यस्यमारीचःकश्यपोजातवेदाअग्निस्त्रिष्टुप् । चरुहोमे
वि० । ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्पदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निःस्वाहाजात
वेदसेग्नयइदं० ॥ १ ॥ २७ ॥ एतैःसप्तविंशतिमंत्रैरवदानधर्मेणहुत्वास्विष्टकृदादिहोमशेषंसमाप्यवासुदेवंनक्षत्रदेवतांचंद्रं
स्वनक्षत्रंवरुणंचपोडशोपचारैरभ्यर्च्य तत्तत्प्रकाशकमंत्रैर्घृतेनतेभ्योयथाशक्तिहोमंकृत्वा ग्रहयज्ञोक्तविधिनाभिपिक्तोयथाश
क्तिगोभूहिरण्यादिदत्त्वा देवगुरुब्राह्मणसुहृद्बंधुजनपूजास्ववाहनायुधपीठच्छत्रपूजांकृत्वा विधिवन्नांदीश्राद्धंचकृत्वाब्राह्मणा
न्भोजयित्वाशुभमुहूर्तेगंधादिभिरलंकृत्यस्रग्भूपणधारणपूर्वकंसुवर्णमयकटिसूत्रंनूतनवस्त्रंचधृत्वा पतिपुत्रवतीभिःस्त्रीभिर्नी

राजितोब्राह्मणाशिषोगृहीत्वास्वयंहविष्याशीजितेंद्रियोवर्तेततिति। इदंसर्वंयावद्बाल्यंपित्रादिभिःकार्यम्। पश्चात्तुप्रतिवर्षस्वय मेवेति। इतिप्रयोगपारिजातोक्तोऽब्दपूर्तिविधिः। अन्यत्रतु—वर्षपर्यंतंप्रतिमासंततःप्रतिवर्षमांगल्यस्नानंकृत्वाकुमुदादिदे वताःसंपूज्ययथाशक्तिब्राह्मणभोजनंकृत्वादक्षिणांचदत्त्वासुवासिनीभिर्नीराजितोधृतनूतनवस्त्रोब्राह्मणेभ्यःशिशुभ्यश्चापूपपू रिकाःसाज्याःकुमुदादिप्रीतयेआयुर्वृद्ध्यर्थेचवायनानिजन्मर्क्षदेवताप्रीत्यैचदद्यात्। वर्षांतेतुसुदृढद्वादशवंशपेटिकासुमोद कादिखाद्यंनिधायनूतनवस्त्राच्छादिताःपेटिकाःजीवत्पतिपुत्राभ्योदत्त्वातदाशिषोगृह्णीयात्। इदंसर्वंजीवंतीमातैवापत्यायुषे कुर्यात्। ग्रंथांतरेतु गणेशंग्रहानिष्टदेवतांमार्कंडेयंचप्रपूज्यप्रार्थयेत्—मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन। आयुरारोग्यसि द्ध्यर्थंप्रसीदभगवन्मुने। चिरजीवीयथात्वंतुमुनीनांप्रवरद्विज। कुरुष्वमुनिशार्दूलतथामांचिरजीविनं। ततः—मार्कंडेयम हाभागसप्तकल्पांतजीवन। आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव। सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः। मार्कंडेयाद्वरंल ब्ध्वापिबाम्यायुर्विवृद्धये। इतिसतिलगुडमंजल्यर्धमितंदुग्धंपिबेत्। अश्वत्थामावलिर्व्यासोहनूमांश्चविभीषणः। कृपःपरशु रामश्चसप्तैतेचिरजीविनः। सप्तैतान्यःस्मरेन्नित्यंमार्कंडेयमथाष्टमं। जीवेद्वर्षशतंसाग्रंसर्वव्याधिविवर्जितः। इतिवचनादश्व त्थामादीन्मार्कंडेयांतानष्टौस्मरेदिति। इदंचवर्धापनंयदिजन्ममासःअसंक्रांतस्तदाशुद्धमासएवकार्यनत्वधिके। इतिश्री नारायणभट्टकृतेप्रयोगरत्नेवर्धापनप्रयोगः॥ ॥ ॥ ॥

अथचूडाकर्म ॥ तत्रकालस्तावत्प्रथमेद्वितीयेतृतीयेपंचमेसप्तमेवावर्षेगततृतीयभागेअगतत्रिभागेवाउपनीत्यासहवाय

थाकुलाचारंचौलंकार्यम् । तत्रापिद्वितीयादौवर्षेजन्मतोमुख्यंगर्भतोगौणंउदगयनेशुक्लपक्षेगुरुशुक्रयोर्बाल्यवार्धकास्तमयाभावेअक्षयेअनधिकेचमासिज्योतिःशास्त्रोक्तप्रशस्ततिथिवारलग्नेषुशुभेमुहूर्तेदिवैवनतुरात्रौकार्यम् । इदंकर्मलौकिकाग्नौ । तस्यसभ्यइतिनाम । यदिगर्भाधानादिसंस्कारलोपस्तदाप्रायश्चित्तंकृत्वाकालात्ययनिमित्तंप्रायश्चित्तहोमंचकृत्वाचौलहोमःकार्यः । तदाहभगवान्—आरभ्याधानमाचौलात्कालेतीतेतुकर्मणाम् । व्याहृत्याज्यंसुसंस्कृत्यहुत्वाकर्मयथाक्रमन् । कार्यमितिशेषः । प्रायश्चित्तंचसएवाह—एतेष्वेकैकलोपेपिपादकृच्छ्रंसमाचरेत् । चूडायाश्चार्धकृच्छ्रंस्यादापदित्वेवमीरितं । अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत् । मनुः—जातकर्मादिसंस्काराःस्वकालेनभवंतिचेत् । चौलादर्वाक्प्रकुर्वीतप्रायश्चित्तादनंतरम् । प्रायश्चित्तहोमेकृतेतत्कर्मकृताकृतम् । तथाचकारिका—प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै । कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितः । प्रायश्चित्तहोमस्तुप्रधानहोमात्पूर्वसमस्ताभिर्व्याहृतिभिःप्रतिकर्मलोपमेकैकाज्याहुतिःकार्येति ॥ ॥ अथचूडाकर्मप्रयोगः ॥ उक्तेतृतीयादौवर्षेउदगयनेशुक्लपक्षेप्रशस्ततिथिवारनक्षत्रयोगयुतेशुभेमुहूर्तेकुमारस्यचौलकर्मकरिष्यन्कर्तापूर्वेद्युःस्वस्तिवाचनपूर्वकंनांदीश्राद्धंग्रहयज्ञमंकुरार्पणंचकृत्वापरेद्युःकृतमंगलस्नानंकुमारमलंकृत्यब्राह्मणैःपुण्याहंवाचयित्वामात्रंकेकुमारंदक्षिणतउपवेश्यदेशकालौस्मृत्वा अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणेनबलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंचौलाख्यंकर्मकरिष्येइतिसंकल्प्य शुभेमुहूर्तेउपलेपादिसभ्याग्निप्रतिष्ठांतंकृत्वा पुनर्देशकालौनिर्दिश्यक्रियमाणेचौलकर्मणिहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचैताः

प्रधानदेवताआज्येन शेषेणस्विष्टकृतमित्याद्युक्त्वा समिद्वयमग्नावाधाय पूर्णपात्रनिधानांतंषट्पात्रप्रयोगादितंत्रंकृत्वाऽग्ने
रुदगास्तीर्णेषुदर्भेषुव्रीहियवमापतिलैःपृथक्पृथक्पूरितानिनवानिशरावाणिचत्वारिक्रमेणैकैकशःप्राक्संस्थान्यासादयेत् । मा
ताप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतःकुमारमुत्संगेकृत्वासीत । ततःकर्तामातुःपुरस्तात्पश्चाद्वाग्नेरानडुहगोमययुतशरावंशमीपर्ण
युतशरावंचनिदध्यात् । ततोब्रह्माएकविंशतिकुशपिंजूलान्यादायमातुर्दक्षिणतस्तिष्ठेत् । पितावातथातिष्ठेत् । अस्मिन्पक्षे
अन्यएवचौलकर्ता । ततःकुमारेणान्वारब्धःकर्तापुरस्तनमाघारांतंकर्मकृत्वा । अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः
अग्निःपवमानोदेवता गायत्रीछंदः चूडाकर्मप्रधानाज्यहोमेवि० । ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छु
नांस्वाहा । अग्नयेपवमानायेदंनममेतित्यागः । एवमग्रेपि । ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयंस्वा
हा । अग्नयेपवमानायेदं० । ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । अग्नयेपव० ॥ ३ ॥ प्रजापते
हिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । चूडाकर्मप्रधानाज्यहोमेवि० । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्का
मास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइदं० ॥ ४ ॥ ततःशीतमुष्णंचोभेजलेदक्षिणवामकराभ्यांक्रमे
णपात्रयोःपृथग्गृहीत्वाशिशोःपश्चिमदेशेस्थित्वातदुदकद्वयमन्यस्मिन्पात्रेपाणिभ्यां ॐ उष्णेनवायउदकनेहि इतिमंत्रेणयुगप
न्निनीय तदेकदेशंगृहीत्वा नवनीतेनदधिद्रप्सेनवामिश्रयित्वा कुमारस्यवामकर्णमारभ्यप्रदक्षिणं । ॐ अदितिःकेशान्वपत्वा
पउंदंतुवर्चसे इतिमंत्रेणशिरस्त्रिवारंक्लेदयेत् । प्रतिक्लेदनंमंत्रावृत्तिः । ततोब्रह्महस्तस्थितैकविंशतिकुशपिंजूलमध्येत्रीणिपिंजू

लान्यादाय । ॐ ओषधे त्रायस्वैनं इतिमंत्रेणकुमाराभिमुखंपश्चिमाग्राणितस्यदक्षिणेकेशभागेनिधाय तेपुताम्रमयंक्षुरं । ॐ
स्वधितेमैनंहिंसीः इतिमंत्रेणनिधाय । ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् । तेनब्रह्माणोवपतेदमस्यायुष्मा
न्जरदष्टिर्यथासत् । इतिमंत्रेणसकेशानिपिंजूलानिछित्त्वाप्रागग्राणिकृत्वाशरावस्थशमीपर्णैरेकीकृत्यमातुःकरेदद्यात् । साच
तानिसकेशान्यानडुहेगोमयेप्रागग्राणिनिदध्यात् । एवंद्वितीयादिच्छेदनेपुपिंजूलनिधानादि समंत्रकंकार्यम् । छेनदमंत्रेतुवि
शेषः । ॐ ओषधे त्रायस्वैनं । स्वधितेमैनं० । येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् । तेनतआयुषेवपामिसुश्लोक्यायस्व
स्तयै इतिद्वितीयच्छेदने । ॐ ओषधे० स्वधिते० । येनभूयश्चरात्र्यांज्योक्चपश्यातिसूर्यं । तेनतआयुषेवपामिसुश्लोक्यायस्व
स्तयै इतितृतीयच्छेदने । चतुर्थच्छेदनेतु । ॐ ओषधेत्रायस्वै०स्वधि० । येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ।
तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासत् । येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् । तेनतआयुषेवपामिसुश्लोक्याय
स्वस्तयै । येनभूयश्चरात्र्यांज्योक्चपश्यातिसूर्यं । तेनतआयुषेवपामिसुश्लोक्यायस्वस्तयै । इतित्रयोपिमंत्राः । एवंदक्षिणेकेश
भागेचत्वारिच्छेदनानिकृत्वोत्तरेपिकेशभागेएवमेवप्रत्येकंमंत्रैराद्यानित्रीणिछेदनानिकुर्यात् नतुसर्वमंत्रैश्चतुर्थं । ततः । यत्क्षुरे
णमर्चयतासुपेशसावप्तावपसिकेशान् । शुंधिशिरोमास्यायुःप्रमोषीः इतिमंत्रेणाग्रतआरभ्यामूलंक्षुरधारांनिमृज्यनापितमाहूय
शीतोष्णाभिरद्भिरवर्थंकुर्वाणोक्षण्वन्कुशलीकुर्विंतिप्रैषेणानुशास्य तंप्रैषार्थंचाववोध्य नापितेनपूर्वावशेषितशीतोष्णांबुभिरा
र्द्रीकृतंकुमारशिरोयथाकुलाचारंकल्पितशिखंवापयित्वा कुमारंस्नापयित्वा भूषयित्वा पूर्ववन्मातुरुत्संगेऽवस्थाप्य स्विष्टकृ

दादिहोमशेषंसमाप्य व्रीह्यादिपूर्णशरावचतुष्टयंनापितायदद्यात् । भूयसींदक्षिणांदत्त्वाब्राह्मणेभ्योदशसंख्याकेभ्योभोजनं
चसंकल्प्यकर्मसंपूर्णतांवाचयित्वायस्यस्मृत्येत्युक्त्वाविष्णुंनमस्कृत्याशिषोब्राह्मणोक्ताःस्वयंकुमारश्चगृह्णीयात् । एतत्सर्वंकुमा
र्याअप्यमंत्रकम् । होमस्तुसमंत्रकइति । मध्येशिरसिचूडास्याद्वासिष्ठानांतुदक्षिणे । उभयोःपार्श्वयोरत्रिकश्यपानांशिखामता ।
शिशोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् । पंचमाब्दादथोर्ध्वंतुगर्भिण्यामपिकारयेत् । सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते ।
इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेचूडाकर्मप्रयोगः ॥

अथोपनयनम् ॥ तद्गर्भाष्टमेषष्ठेवाब्देकार्यम् । मनुः—ब्रह्मवर्चसकामस्यकार्यंविप्रस्यपंचमे । ॥ ७ ॥
विद्याकामस्यसप्तमे । अष्टमेसर्वकामस्यनवमेकांतिमिच्छतः । विष्णुः—षष्ठेतुधनकामस्य
तथासंग्रहे—सप्तमेचाष्टमेवर्षेनवमेदशमेतथा । एकादशेद्वाद
शेवाह्युपनेयाद्द्विजातयः । ब्रह्मवर्चस्यमायुष्यंतेजोन्नाद्यंतथेंद्रियम् । पशून्कामयमानावैप्राप्नुवंतियथाक्रमं । नृसिंहः—उत्त
रायणगेसूर्येकर्तव्यंह्युपनायनम् । श्रुतिः—वसंतेब्राह्मणमुपनयीत । वराहः—माघादिपंचमासेषुमेखलाबंधनंशिशोः । ज्ये
ष्ठमासेनज्येष्ठस्य जन्ममासेनसर्वेषाम् । शुक्लपक्षेद्वितीयादिस्वाध्यायतिथिषुनानध्यायेननैमित्तिकानध्यायेपूर्वाह्णेशुभमुहूर्तेशु
भचंद्रादौगुरुशुक्रयोर्बाल्यवार्धक्यास्तराहित्यादौज्योतिर्वित्प्रोक्तेशुभकालेउपनयनंकार्यम् ॥ ॥ उपनयनेकर्तृक्रममाहवृ
द्धगर्गः—पितापितामहोभ्राताज्ञातयोगोत्रजाग्रजाः । उपानयेधिकारीस्यात्पूर्वाभावेपरःपरः । तथा—पितैवोपनयेत्पुत्रंतद
भावेपितुःपिता । तदभावेपितुर्भ्रातातदभावेतुसोदरः । अधिकारसिद्ध्यैप्रायश्चित्तमाह वृद्धविष्णुः—कृच्छ्रत्रयंचोपनेतात्री

न्कृच्छ्रांश्चवटुश्चरेत् । आचार्योद्वादशसहस्रगायत्रींजपेत् । तथा—नांदीश्राद्धेकृतेपश्चादनध्यायस्त्वकालिकः । मौंजीवंधंत दाकुर्याद्वेदारंभंनकारयेत् । अकालिकोगर्जननिर्घातादिनिमित्तकः । आश्वलायनानामुपनयनदिनेवेदारंभाभावात् । वेदारं भकरणंयजुर्वेदिविषयम् । आश्वलायनस्तुवृद्धिश्राद्धदिनात्पट्दिनमध्येमुहूर्तांतरेसतितेनैवनांदीश्राद्धेनतत्रोपनयनंकुर्यात् । तदूर्ध्वंतुमुहूर्तेश्राद्धांतरपूर्वकमुपनयनंयथाकालंकुर्यात् । इत्युपनयनोपयुक्तविचारः ॥ ॥ अथोपनयनप्रयोगः ॥ ॥ उक्त कालेउपनिनीषुराचार्यः पूर्वेद्युर्वटोःपरिधानार्थंशुक्लमीषद्धौतंनवंसदशंपरेणाधृतंवस्त्रमुत्तरीयार्थंचकाषायवस्त्रमजिनंवाकृष्ण मृगस्ययज्ञोपवीतंमौंजींमेखलांपालाशमव्रणमृजुंसौम्यदर्शनंवटोःकेशसंमितंसाग्रंदंडंकौपीनंतद्बंधनसूत्रंभिक्षाभाजनंचसंपाद्य स्वस्योपनेतृत्वाधिकारसिद्धयेकृच्छ्रत्रयंद्वादशसहस्रंगायत्रींचजप्त्वा कुमारेणापिकामचारकामवादकामभक्षणादिदोषापनोदा

---

१ प्रथममाचार्योममोपनेतृत्वयोग्यतासिद्ध्यर्थंकृच्छ्रत्रयंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यदानेनाहमाचरिष्ये तथाद्वादशाविक्रसह स्रगायत्रीजपमुपनेतृत्वयोग्यतासिद्ध्यर्थंकरिष्यइतिसंकल्पयेत् । यदिपूर्वसंस्काराव्यतीतास्तदा अस्यकुमारस्यपुंसवनादीनामथवाजातकर्मादीनांचौ लातानांसंस्काराणांकालातिपत्तिजनितप्रत्यवायपरिहारद्वाराश्रीपर० प्रतिसंस्कारमेकैकाभूर्भुवःस्वःस्वाहेतिसमस्तव्याहृत्याज्याहुतिहोष्यामीतिसंक ल्प्याग्निस्थापनेध्माधानादिपाकयज्ञतंत्रसहितावह्निस्थापनाज्यसंस्कारपात्रसमार्गमात्रसहितावाऽतीतसंस्कारसमसंख्यसमस्तव्याहृत्याज्याहुतीर्जुहुया त् । ततोऽस्यकुमारस्यपुंसवनानवलोभनसीमंतोन्नयनजातकर्मनामकरणसूर्यावलोकननिष्क्रमणोपवेशनान्नप्राशनचौलसंस्काराणांलोपनिमित्तप्रत्य वायपरिहारार्थंप्रतिसंस्कारपादकृच्छ्रप्रायश्चित्तचौलस्यार्धकृच्छ्रं बुद्धिपूर्वकलोपेप्रतिसंस्कारमर्धकृच्छ्रंचूडायाःकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथा

र्थंकृच्छ्त्रयंकारयित्वा स्वस्तिवाचनांकुरार्पणग्रहयज्ञनांदीश्राद्धानिसंकल्पपूर्वकंकृत्वामंडपप्रतिष्ठांकुर्यात् । तत्रसंकल्पः । अस्यकुमारस्योपनयनेग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्ये । ग्रहयज्ञंसमाप्याऽस्यकुमारस्यद्विजत्वसिद्धिवेदाध्ययनाधिकारार्थंश्वउपनयनंकरिष्ये । तदंगभूतमद्यगणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंमंडपप्रतिष्ठांकुलदेवतादिस्थापनंचकरिष्ये । उपनयनेनसहचौलकरणपक्षेतदपिसंकल्पेकीर्तयेत्। तंत्रेणचस्वस्तिवाचनग्रहयज्ञनांदीश्राद्धादीनिकुर्यात् । अथापरेद्युःकृतनित्यक्रियः कृतमंगलस्नानमलंकृतंकुमारमुक्तस्वस्त्ययनंकृतकौतुकबंधंमात्रुत्संगेभोजयित्वादेशकालौसंकीर्त्यअस्यकुमारस्योपनयनंकर्तुंतत्प्राच्यांगभूतंवापनादिकरिष्येइतिसंकल्प्य कृतवापनंस्नापितंबद्धशिखंकुमारंमौहूर्तिकोक्तेशुभमुहूर्तेस्वसमीपमानीयतन्मुखंसम्यगीक्षेत । ततस्तंस्वोरूपर्युपवेश्यब्राह्मणायेयज्ञेनेत्यादिमंत्रैर्यथाचारंहरिद्रादियुक्ताक्षतारोपणंकुर्युः । तइमेमंत्राः । ॐ येयज्ञेनदक्षिणयासमक्ताइंद्रस्यसख्यममृतत्वमानश । तेभ्योभद्रमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः । यउदाजन्पितरोगोमयंवस्वृतेनाभिंदन्परिवत्सरेवलं । दीर्घायुत्वमंगिरसोवोअस्तुप्रतिगृभ्णीतमामानवंसुमेधसः । यऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि । सुप्रजास्त्वमंगिरसोवोअस्तुप्र० ।अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन।सुब्रह्मण्यमंगिरसोवो०। विरूपासइदृषयस्तइद्गंभीरवेपसः।तेअंगिरसःसूनवस्तेअग्नेःपरिजज्ञिरे

शक्तिरजतद्रव्यदानेनाहमाचरिष्ये । चौलस्योपनीत्यासहकरणस्यकुलधर्मप्राप्तत्वे कालातिपत्तिहोमचौललोपप्रायश्चित्तचनकार्यं । ततोवटुर्ममकामचारकामवादकामभक्षादिदोषपरिहारद्वारोपनेयत्वयोग्यतासिद्ध्यर्थंकृच्छ्रत्रयप्रायश्चित्तंतत्प्रत्याम्नायेत्यादिज्ञेयम् ।

॥ १ ॥ येअग्नेःपारिंजज्ञिरेविरूपासोदिवस्परि । नवग्वोनुदशग्वोअंगिरस्तमःसचादेवेषुमंहते । इंद्रेणयुजानिःसृजंतवाघतोव्रजं
गोमंतमश्विनं । सहस्रंमेददतोअष्टकर्ण्यःश्रवोदेवेष्वक्रत । प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु । यःसहस्रंशताश्वंसद्योदा
नायमंहते । नतमश्नोतिकश्चनदिवइवसान्वारभं । सावर्ण्यस्यदक्षिणाविसिंधुरिवपप्रथे । उतदासापरिविषेस्मद्दिष्टीगोपरीणसा ।
यदुस्तुर्वश्चमामहे । सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा । सावर्णेर्देवाःप्रतिरंत्वायुर्यस्मिन्नश्रांताअसनामवाजं
॥२॥ परावतोयेदिधिषंतआप्यंमनुप्रीतासोजनिमाविवस्वतः । ययातेर्येनहुष्यस्यबर्हिषिदेवाआसतेतेअधिब्रुवंतुनः । विश्वाहिवो
नमस्यानिवंद्यानामानिदेवाउतयज्ञियानिवः । येस्थजाताअदितेरद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवं । येभ्योमातामधुमत्पिन्वते
पयःपीयूषंद्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँऽआदित्याँऽअनुमदास्वस्तये । नृचक्षसोअनिमिषंतोअर्हणा
बृहद्देवासोअमृतत्वमानशुः । ज्योतीरथाअहिमायाअनागसोदिवोवर्ष्माणंवसतेस्वस्तये । सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृता
दधिरेदिविक्षयं । ताँऽआविवासनमसासुवृक्तिभिर्महोऽआदित्याँऽअदितिंस्वस्तये ॥ ३ ॥ कोवस्तोमंराधतियंजुजोषथविश्वे
देवासोमनुषोयतिष्ठन । कोवोऽध्वरंतुविजाताअरंकरद्योनःपर्षदत्यंहःस्वस्तये । येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसा
सप्तहोतृभिः । तआदित्याअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये । यईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जगतश्चमंतवः ।
तेनःकृतादकृतादेनसस्पर्यद्यादेवासःपिपृतास्वस्तये । भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनं । अग्निंमित्रंवरुणंसातयेभ
गंद्यावापृथिवीमरुतःस्वस्तये । सुत्रामाणंपृथिवीद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं । दैवींनावंस्वरित्रामनागसमस्रवंतीमारु

र्थंकृच्छ्रत्रयंकारयित्वा स्वस्तिवाचनांकुरार्पणग्रहयज्ञनांदीश्राद्धानिसंकल्पपूर्वकंकृत्वामंडपप्रतिष्ठांकुर्यात् । तत्रसंकल्पः । अस्यकुमारस्योपनयनेग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्ये । ग्रहयज्ञंसमाप्याऽस्यकुमारस्यद्विजत्वसिद्धिवेदाध्ययनाधिकारार्थंश्चउपनयनंकरिष्ये । तदंगभूतमद्यगणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंमंडपप्रतिष्ठांकुलदेवतादिस्थापनंचकरिष्ये । उपनयनेनसहचौलकरणपक्षेतदपिसंकल्पेकीर्तयेत्। तंत्रेणचस्वस्तिवाचनग्रहयज्ञनांदीश्राद्धादीनिकुर्यात् । अथापरेद्युःकृतनित्यक्रियः कृतमंगलस्नानमलंकृतंकुमारमुक्तस्वस्त्ययनंकृतकौतुकवंधंमातुरुत्संगेभोजयित्वादेशकालौसंकीर्त्यअस्यकुमारस्योपनयनंकर्तुंतत्प्राच्यांगभूतंवापनादिकरिष्येइतिसंकल्प्य कृतवापनंस्नापितंवद्धशिखंकुमारंमौहूर्तिकोक्तेशुभमुहूर्तेस्वसमीपमानीयतन्मुखंसम्यगीक्षेत । ततस्तंस्वोरूपर्युपवेश्यब्राह्मणायेयज्ञेनेत्यादिमंत्रैर्यथाचारंहरिद्रादियुक्ताक्षतारोपणंकुर्युः । तइमेमंत्राः । ॐ येयज्ञेनदक्षिणयासमक्ताइंद्रस्यसख्यममृतत्वमानश । तेभ्योभद्रमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः । यउदाजन्पितरोगोमयंवस्वृतेनाभिंदन्परिवत्सरेवलं । दीर्घायुत्वमंगिरसोवोअस्तुप्रतिगृभ्णीतमामानवंसुमेधसः । यऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि । सुप्रजास्त्वमंगिरसोवोअस्तुप्र० । अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन । सुब्रह्मण्यमंगिरसोवो० । विरूपासइदृषयस्तइद्गंभीरवेपसः।तेअंगिरसःसूनवस्तेअग्नेःपरिजज्ञिरे

शक्तिरजतद्रव्यदानेनाहमाचरिष्ये । चौलस्योपनीत्यासहकरणस्वकुलधर्मप्राप्तत्वे कालातिपत्तिहोमचौललोपप्रायश्चित्तचनकार्यं । ततोवटुर्मम कामचारकामवादकामभक्षादिदोषपरिहारद्वारोपनेयत्वयोग्यतासिद्ध्यर्थंकृच्छ्रत्रयप्रायश्चित्तंतत्प्रत्याम्नायेत्यादिज्ञेयम् ।

ब्रह्माणोविचरंत्युत्वे। इमेयेनावाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकरासः। तएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वते अप्रजज्ञयः।
सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः। किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय। ऋचांत्वःपोषमास्तेपु
पुष्वान्गायत्रंत्वोगायतिशक्करीषु। ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः ॥२॥ तदस्तुमि० गृहाणांप्रतिष्ठासूक्तंत
त्प्रतिष्ठितंतमयावाचाशंसत्वंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा। नर्यप्रजांमे
गोपाय। अमृतत्वायजीवसे। जातांजनिष्यमाणांच। अमृतेमत्येप्रतिष्ठितां। अन्येपिमाध्यंदिनीयादीनांमंत्रायथाशाखंय
थावकाशंपठनीयाः॥ ॥ ततस्तंकुमारंस्वदक्षिणतउपवेश्यउपलेपाद्यग्निप्रतिष्ठांतंकृत्वा समिद्वयमादायतिथ्यादिसमुच्चार्यअ
स्यकुमारस्यद्विजतासिद्ध्यर्थंक्रियमाणेउपनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये। अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावा
ज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा व्याहृतिभिरग्नावाधायपरि
समूहनाद्याज्यसंस्कारांतंकृत्वा आचार्योग्नेःपश्चादवस्थायकुमारंप्राङ्मुखमवस्थाप्यकौपीनार्थंत्रिवृतंकार्पासमसूत्रंकटावावध्यकौ
पीनंपरिधाप्यद्वितीयजन्मन्युल्वप्रतिनिधिभूतमहतंशुक्लंवासःसमंत्रकंपरिधाप्यान्येनकाषायवाससातथैवप्रावरयेत्। तत्रमं
त्रः। युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप्। वासोधारणेवि०। ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंत
वोहसर्गाः। अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे। प्रावरणार्थंकृष्णाजिनंवा तच्च त्र्यंगुलंचबहिर्लोमय

१ समुद्रवोग्निरत्र।

हेमास्वस्तये ॥ ४ ॥ विश्वेयजत्रा अधिवोचतोतये त्रायध्वंनोदुरेवाया अभिह्रुतः । सत्यया वोदेवहूत्याहुवेमशृण्वतोदेवा अवसे
स्वस्तये । अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः । आरेदेवाद्वेषो अस्मद्युयोतनोरुणः शर्मयच्छतास्वस्तये ।
अरिष्टः समर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि । यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये । यंदेवासो
वथवाजसातौयंशूरसातामरुतोहितेधने । प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमास्वस्तये । स्वस्तिनःपथ्यासुधन्वसुस्व
स्त्य१प्सुवृजनेस्वर्वति । स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन । स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णःस्वत्यभियावाममे
ति । सानोअमासोअरणेनिपातुस्वावेशाभवतुदेवगोपा । एवाप्लतेःसूनुरवीवृधद्वोविश्वआदित्याअदितेमनीषी । ईशानासो
नरोअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ५ ॥ बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः । यदेषांश्रेष्ठंयदरिप्रमासीत्प्रे
णातदेषांनिहितंगुहाविः । सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत । अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्नि
हिताधिवाचि । यज्ञेनवाचःपदवीयमायन्तामन्वविंदन्नृषिषुप्रविष्टां । तामाभृत्याव्यदधुःपुरुत्रातांसप्तरेभाअभिसंनवंते ।
उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनां । उतोत्वस्मैतन्वं१विसस्रेजायेवपत्यउशतीसुवासाः । उतत्वंसख्येस्थिर
पीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु । अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पां ॥ १॥ यस्तित्याजसचिविदंसखायंनतस्यवा
च्यपिभागोअस्ति । यदींशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां । अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमावभूवुः । आद
घ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे । हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः । अत्राहत्वंविजहुर्वेद्याभिरोह

ब्रह्माणोविचरंत्युत्वे। इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकराम.। तएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वते अप्रजज्ञयः। सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः। किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवंतिवाजिनाय। ऋचांत्वःपोषमास्तेपु पुष्वान्गायत्रंत्वोगायतिशक्करीषु। ब्रह्मात्वोवदंतिजातविद्यांयज्ञस्यमात्राविमिमीतउत्वः ॥२॥ तदस्तुमि० गृहावैप्रतिष्ठासूक्तंत त्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूंल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा। नर्यप्रजांमे गोपाय। अमृतत्वायजीवसे। जातांजनिष्यमाणांच। अमृतेमत्येप्रतिष्ठितां। अन्येपिमाध्यंदिनीयादीनांमंत्रायथाशाखंय थावकाशंपठनीयाः॥ ॥ ततस्तंकुमारंस्वदक्षिणतउपवेश्यउपलेपाद्यग्निप्रतिष्ठांतंकृत्वा समिद्वयमादायतिथ्यादिसमुच्चार्यअ स्यकुमारस्यद्विजतासिद्ध्यर्थंक्रियमाणेउपनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये। अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावा ज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा व्याहृतिभिरग्नावाधायपरि समूहनाद्याज्यसंस्कारांतंकृत्वा आचार्योऽग्नेःपश्चादवस्थायकुमारंप्राङ्मुखमवस्थाप्यकौपीनार्थंत्रिवृतंकार्पाससूत्रंकटावावध्यकौ पीनंपरिधाप्यद्वितीयजन्मन्युल्वप्रतिनिधिभूतमहतंशुक्लंवासःसमंत्रकंपरिधाप्यान्येनकाषायवाससातथैवप्रावरयेत्। तत्रमं त्रः। युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप्। वासोधारणेवि०। ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंत वोहसर्गाः। अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे। प्रावरणार्थंकृष्णाजिनंवा तच्च त्र्यंगुलंचवहिर्लोमय

१ समुद्भवोऽग्निरत्र।

हेमास्वस्तये ॥ ४ ॥ विश्वेयजत्राअधिवोचतोतयेत्रायध्वंनोदुरेवायाअभिह्रुतः । सत्ययावोदेवहूत्याहुवेमशृण्वतोदेवाअवसे
स्वस्तये । अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः । आरेदेवाद्वेषोअस्मद्युयोतनोरुणःशर्मयच्छतास्वस्तये ।
अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि । यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये । यंदेवासो
वथवाजसातौयंशूरसातामरुतोहितेधने । प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमास्वस्तये । स्वस्तिनःपथ्यासुधन्वसुस्व
स्त्य१प्सुवृजनेस्वर्वति । स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन । स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णःस्वत्यभियावाममे
तिं । सानोअमासोअरणेनिपातुस्वावेशाभवतुदेवगोपा । एवाप्लुतेःसूनुरवीवृधद्वोविश्वआदित्याअदितेमनीषी । ईशानासो
नरोअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ५ ॥ बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः । यदेषांश्रेष्ठंयदरिप्रमासीत्प्रे
णातदेषांनिहितंगुहाविः । सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत । अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्नि
हिताधिवाचि । यज्ञेनवाचःपदवीयमायन्तामन्वविंदन्नृषिषुप्रविष्टां । तामाभृत्याव्यदधुःपुरुत्रातांसप्तरेभाअभिसंनवंते ।
उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनां । उतोत्वस्मैतन्वं१विसस्रेजायेवपत्यउशतीसुवासाः । उतत्वंसख्येस्थिर
पीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु । अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पां ॥ १॥ यस्तित्याजसचिविदंसखायंनतस्यवा
च्यपिभागोअस्ति । यदींशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां । अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमावभूवुः । आद
घ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे । हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः । अत्राहत्वंविजहुर्वेद्याभिरोह

ब्रह्माणोविचरंत्युत्वे । इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकरामः। तएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वते अप्रजज्ञयः।
सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः । किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय । ऋचांत्वःपोषमास्तेपु
पुष्वान्गायत्रंत्वोगायतिशक्करीषु । ब्रह्मात्वोवदंतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः ॥२॥ तदस्तुमि० गृहावैप्रतिष्ठासूक्तंत
त्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा । नर्यप्रजांमे
गोपाय । अमृतत्वायजीवसे । जातांजनिष्यमाणांच । अमृतेमर्त्येप्रतिष्ठितां । अन्येपिमाध्यंदिनीयादीनांमंत्रायथाशाखंय
थावकाशंपठनीयाः ॥ ॥ ततस्तंकुमारंस्वदक्षिणतउपवेश्यउपलेपाद्यग्निप्रतिष्ठांतंकृत्वा समिद्वयमादायतिथ्यादिसमुच्चार्यअ
स्यकुमारस्यद्विजतासिद्ध्यर्थंक्रियमाणेउपनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्याद्याघारांता
ज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिमद्योयक्ष्यइत्यंतमुक्त्वा व्याहृतिभिरग्नावाधायपरि
समूहनाद्याज्यसंस्कारांतंकृत्वा आचार्योग्नेःपश्चादवस्थायकुमारंप्राङ्मुखमवस्थाप्यकौपीनार्थंत्रिवृतंकार्पासमसूत्रंकटावाबध्यकौ
पीनंपरिधाप्यद्वितीयजन्मन्युल्वप्रतिनिधिभूतमहतंशुक्लंवासःसमंत्रकंपरिधाप्यान्येनकाषायवाससातथैवप्रावरयेत् । तत्रमं
त्रः । युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् । वासोधारणेवि० । ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंत
वोहसर्गाः । अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे । प्रावरणार्थंकृष्णाजिनंवा तच्च त्र्यंगुलंचबहिर्लोमय

१ समुद्भवोग्निरत्र ।

द्वास्याच्चतुरंगुलम् । अजिनंधारयेद्विप्रश्चतुर्विंशाष्टषोडशैः । इति । मित्रस्यचक्षुरित्यस्यवामदेवोऽजिनंत्रिष्टुप् । अजिन धारणेविनियोगः । ॐ मित्रस्यचक्षुर्धरुणंवलीयस्तेजोयशस्वीस्थविरंसमिद्धं । अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधे हं । ततोद्विजत्वचिह्नार्थयज्ञोपवीतंदद्यात् । यज्ञोपवीतमित्यस्यपरब्रह्मपरमात्मात्रिष्टुप् । श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं द्विजत्वसिद्ध्येयज्ञोपवीतधारणेवि० । ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञो पवीतंबलमस्तुतेजः । इतिमंत्रंवाचयित्वा तद्दक्षिणवाहुमुद्धार्यउपवीतंधारयित्वा कुमारमात्मनोऽग्नेश्चमध्येनयज्ञपात्रोत्तरभागंग मयित्वातत्रविधिवदाचमय्य पुनस्तथैवानीयस्वदक्षिणेउपवेश्य बर्हिरास्तरणादिस्रुवसंमार्जनांतंकृत्वाब्रह्मचार्यन्वारब्धइध्मा धानाद्याघारांतमाज्यभागवर्जंकुर्यात् । ततःअग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः अग्निःपवमानोदेवतागायत्रीच्छंदः ।

१ केशवनारायणमाधवेति नामभिराचमनम्, गोविंदनाम्ना दक्षिणकरमार्जनम्, विष्णुनाअधरंमृजेत्, मधुसूदनेनओष्ठमृजेत्, त्रिविक्रमेण ओष्ठावुन्मार्जयेत्, वामनेन उदकाभिमंत्रणंकृत्वा, श्रीधरेण वामहस्तप्रक्षालनम्, हृषीकेशेन दक्षिणपादस्पर्शनम्, पद्मनाभेन वामपाद०, दामोदरेण मस्तकप्रोक्षणम्, संकर्षणेन ऊर्ध्वोष्ठस्पर्शअंगुल्यग्रैः, वासुदेवेन दक्षिणनासामंगुष्ठतर्जनीभ्यांस्पृशेत्, प्रद्युम्नेन वामनासामंगुष्ठतर्जनीभ्यां, अनिरुद्धेन दक्षिणनेत्रंअंगुष्ठानामिकाभ्यांस्पृशेत्, पुरुषोत्तमेन वामनेत्रंतथा, अधोक्षजेन दक्षिणकर्णस्पर्श.अंगुष्ठकनिष्ठिकाभ्या, नारसिंहेन वामकर्णस्पर्शस्तथा, अच्युतेन नाभिस्पर्श.अंगुष्ठकनिष्ठिकाभ्यां, जनार्दनेन हृदयस्पर्शःतलेन, उपेंद्रेण मूर्धानपाणिनास्पृशेत्, हरिणा दक्षिणभुजस्पर्श.अंगुल्यग्रै., श्रीकृष्णेन वामभुजस्पर्शस्तथा । इतीविधिवदाचमनम् ।

॥ ८४ ॥

उपनयनप्रधानाज्यहोमेविनियोगः । ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनांस्वाहा । अग्नयेपव मानायेदंनममेतित्यागः । एवमग्रेपि । ॐअग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयंस्वाहा । अग्नये० । ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । अग्नये० । प्रजापतइत्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । उपन यनप्रधानाज्यहोमेवि० । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोर यीणांस्वाहा । प्रजापतयइदं० । अथाचार्यउत्तरतोग्नेःप्राङ्मुखस्तिष्ठेत् । कुमारोप्यग्न्याचार्ययोर्मध्येनगत्वाआचार्याभिमुख स्तिष्ठेत् । अथाचार्यःसंयतात्माकुमारस्यशुचित्वसिद्धयेसवितृदेवतातृप्तयेचांजलिक्षारणंकुर्यात् । तच्चेत्थं । शुद्धोदकेनशि ष्यांजलिमापूर्यस्वस्यांजलिमन्येनपूरयित्वा । तत्सवितुरित्यस्यश्यावाश्वःसवितानुष्टुप् । अवक्षारणेवि० । ॐ तत्सवितुर्वृणी महेवयंदेवस्यभोजनं । श्रेष्ठंसर्वधातमंतुरंभगस्यधीमहि । अनेनस्वांजल्युदकंशिष्यांजलाववक्षार्यतज्जलंकुमारांजलिनैवावक्षा रयेत् । ततःशिष्यत्वसिद्ध्यर्थंवटोर्हस्तंगृह्णीयात् । तत्रमंत्रः । ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांहस्तंगृह्णा मीतियजुरंतेमुकशर्मन्निति कुमारस्याभिवादनिकंनामशर्मातंसंबुद्ध्यानिर्दिश्य दक्षिणेनपाणिनाकुमारस्यसांगुष्ठंदक्षिणपाणिंगृ हीत्वा पुनरपिपूर्ववदुदकपूरणादिकृत्वा सवितातेहस्तमग्रभीदितिमंत्रांतेपूर्ववद्वटुनामोक्त्वाहस्तंगृहीत्वा पुनरपिपूर्ववत्पूरयि त्वाअग्निराचार्यस्तवेतिमंत्रांतेपूर्ववत्तन्नामनिर्दिश्यहस्तंगृह्णीयात् । अथाचार्योब्रह्मचारिणासहनिष्क्रम्यदेवसवितरेषतेब्रह्मचा रीतंगोपायसमामृतेत्युच्चार्यसंरक्षणार्थंव्रतपतयेआदित्यायवटुंददामीतिमनसास्मरन्ब्रह्मचारिणमादित्यमीक्षयेत् । ततःउभा

वपिपूर्ववदुत्तरतोग्नेरन्योन्याभिमुखौतिष्ठताम् । अथाचार्यःकस्यब्रह्मचार्यसिप्राणस्यब्रह्मचार्यसिकस्त्वाकमुपनयतेकायत्वापरि
ददामीतिमंत्रंजपन्कुमारंप्रजापतयेमनसासमर्प्य । युवासुवासाइत्यस्यकौशिकोविश्वामित्रोयूपस्त्रिष्टुप् पूर्वार्धर्चस्यप्रदक्षि
णावर्तनेउत्तरार्धर्चस्यपाणिभ्यांवटोर्हृदयालंबनेविनियोगः । ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ।
इत्यर्धर्चमुच्चारयन्वटुंप्रदक्षिणमावर्त्यप्राङ्मुखमवस्थापयेत् । ततःकुमारांसयोरुपरिस्वपाणीगमयित्वा । ॐ तंधीरासःकवय
उन्नयंतिस्वाध्योमनसादेवयंतः । इत्युत्तरार्धर्चमुच्चार्यतद्धृदयप्रदेशंसकृत्पाणिभ्यांस्पृशेत् । ततः आचार्यआत्मानमग्निंचांत
रावटुंनीत्वा प्रत्यगग्नेःस्वयमुपविश्यस्वस्यदक्षिणतःप्राङ्मुखंतमुपवेशयेत् । ततोवटुरग्नेःपरिसमूहनपर्युक्षणेकृत्वावृत्तिकारम
तेत्वकृत्वा । अग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती । समिदाधानेविनियोगः । ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ।
तयात्वमग्नेवर्धस्वसमिधाब्रह्मणावयंस्वाहेतिसमिधमाधाय अग्नयइदंनममेत्युद्देशत्यागौकृत्वा पाणिंप्रक्षाल्याग्निंस्पृष्ट्वा ॐ तेज
सामासमनज्मीतिसंवृतोष्ठद्वयंमुखमवाङ्निमृज्यपाणिंप्रक्षाल्यपुनरग्निंस्पृष्ट्वामंत्रेणतथैवमुखंनिमृज्यपाणिंप्रक्षाल्याग्निंस्पृष्ट्वामंत्रे
णतथैवमुखंनिमृज्यपाणिंप्रक्षालयेत् । ततस्तिष्ठन्प्रणतिमुद्रांकृत्वा । मयिमेधामितिपण्णांहिरण्यगर्भऋषिः पूर्वेषांत्रयाणाम
ग्नींद्रसूर्यादेवताः उत्तरत्रयाणामग्निर्देवता गायत्रीच्छंदः । अग्न्युपस्थानेवि० । ॐ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ।
मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु । मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु । यत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासं । यत्ते
अग्नेवर्चस्तेनाहंवर्चस्वीभूयासं । यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासं । इतिषण्मंत्रैरग्निमुपस्थाय । मानस्तोकइतिकुत्सोरुद्रोजगती ।

विभूतिग्रहणेविनियोगः । ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे। इत्यनेनभस्मादाययथाचारंत्र्यायुषंजमदग्नेरितिललाटे कश्यपस्यत्र्यायुषमितिकण्ठे अगस्त्यस्यत्र्यायुषमितिनाभौ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे । तन्मेअस्तुत्र्यायुषमितिवामस्कंधे सर्वमस्तुशतायुषमितिशिरसिधारयेत् । पुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांजलिस्तिष्ठन् ॐ चमेस्वरश्चमेयज्ञोपचंतेनमश्च । यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः । अग्नयेनमः स्वस्ति । श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलम् । आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन हव्यवाहनोऽन्नमइत्यग्निमुपस्थाय । अग्नेरुत्तरतोगत्वाप्रत्यङ्मुखीभूयाचार्याभिमुखोभूत्वादक्षिणजानुंभूतलेनिधायपाणिभ्यांयथासव्यदक्षिणंश्रोत्रेसंस्पृश्यव्यस्तपाणिराचार्यस्यदक्षिणपादंस्वदक्षिणहस्तेनसव्यंचसव्यहस्तेनजानुप्रभृतिपादपर्यंतंस्पृष्ट्वाऽमुकगोत्रोमुकशर्माहंभोअभिवादयइत्युच्चारयन्शिरोवनतिपूर्वकमभिवाद्याचार्येणायुष्मान्भवसौम्यदेवदत्तशर्मन्इतिप्रत्युक्ताशीर्वादोविनयावनतोभूत्वासावित्र्युपदेशंवांछन् । ( शिष्टाचारप्राप्तंसावित्रीपूजनंगोप्रदानंचकृत्वा ) । अधीहिभोःसावित्रींभोऽअनुब्रूहीत्याचार्यप्रत्युक्त्वास्ववामपाणिमुत्तानीकृत्यदक्षिणपाणिंन्यङ्मुखीकृत्यसंधायपाणिपृष्ठमंगुलीश्चांगुष्ठौचदृढीकृत्यकृतंब्रह्मांजलिंदक्षिणांकेनिक्षिप्याचार्यातिकआसीत । ( गायत्र्युपदेशस्त्वग्नेरुत्तरतएवस्यात् । यद्यपिआश्वलायनसूत्रेअग्नेरुत्तरतोदक्षिणतोवादेशस्यानुक्तत्वादिच्छयाविकल्पःप्राप्तस्तथापिसांख्यायनसूत्रेअग्नेरुत्तरएवोपदेशोविहितः । वेदैक्यात्तत्सूत्रमेवकार्यंसर्वशाखाप्रत्ययमेककर्मेत्युक्तत्वात् अविरुद्धमन्यतोग्राह्यमित्युक्तेश्चसांख्यायनसूत्रेचैवमुत्तरेणाग्निमुपविशतः ) । अथाचार्यस्तदंजलिं

तत्परिधानीयवाससाच्छाद्य स्वपाणिभ्यांतदंजलिंपरिगृह्य प्रणवव्याहृतिपूर्वकंसावित्रींप्रथमंपादशःस्वयमुक्त्वावाचयेत् ततो र्धर्चशस्ततःसर्वा । एवंग्रहणाशक्तौयथाशक्तिस्वयमुक्त्वावाचयेत् । तद्यथा । प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवता दैवी गायत्रीच्छंदः व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती गायत्र्याविश्वामित्रःसवितागायत्री उपनयनेवि० । ( भूर्भुवः स्वःपूर्वंतुसावित्रींवाचयेदथ । पादंपादंचसावित्र्याःस्वयमुक्त्वैववाचयेत् । ततस्त्वर्धर्चमर्धर्चंसर्वांतामथवाचयेत् । एवंवक्तु मशक्तश्चेत्तंयथाशक्तिवाचयेत् ) । गायत्रींवाचयित्वा । ततः ममव्रतइतिमंत्रस्यप्रजापतिर्ऋषिः बृहस्पतिर्देवता त्रिष्टुप्छंदः वटोर्हृदयेऊर्ध्वांगुलिपाणिनिधानेवि० । ॐ ममव्रतेहृदयंतेदधामिममचित्तमनुचित्तंतेअस्तु । ममवाचमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यं । इतिस्वपाणिमूर्ध्वांगुलिंब्रह्मचारिणोहृदयदेशेनिधाय तस्यरक्षार्थंशुद्ध्यर्थंचमेखलामाबध्नीयात् । इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप् । मेखलाबंधनेवि० । ॐ इयंदुरुक्तात्परिबाधमानाशर्मवरूथंपुनतीनआगात् । प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं । ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः । सानःसमंतमनुपरीहिभद्रयाभर्तारस्तेमेखलेमारिषाम । इतिमंत्रंवाचयित्वामेखलांत्रिरावर्त्यनाभिप्रदेशेग्रंथित्रयंकुर्यात् । तदाबद्धःसरहस्यांगसहित वेदत्रयेणावृतोहमितिमन्येत । ततस्तद्धर्मस्ययोगक्षेमार्थमधर्मनिवृत्तयेचकेशसंमितंपालाशंदंडंदद्यात् । स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् । दंडदानेवि० । ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः । स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना । ततोवटोस्तद्ग्रहणेमंत्रः । अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयं । दंडःकरेस्थितो

यस्मात्तस्माद्रक्षयतोभयमितिवाचयेत् । ततःकुमारस्याचारमादिशेत् । ब्रह्मचार्यसि । अपोशान । शास्त्रविहितंआचमनंकुरु । मूत्रपुरीषादौशुद्ध्यर्थमित्यर्थः । कर्मकुरु । संध्योपासनादिकर्मकुर्वित्यर्थः । दिवामास्वाप्सीः । आचार्याधीनोवेदमधीष्व । सायंप्रातर्भिक्षेथाः । सायंप्रातःसमिधमाधेहि । द्वादशवर्षाणिवेदग्रहणांतंवाब्रह्मचर्यंचरेति । प्रैषार्थान्वोधयेत् । ततःस्विष्टकृदादिहोमशेषंसमाप्याग्निंमेधाजननांतंरक्षेत् । तत्रैवसायंप्रातरग्निकार्यंकुर्यात् । ततोऽनुप्रवचनीयहोमब्राह्मणभोजनपर्याप्तांतंडुलरूपां भिक्षांयाचेत् । तत्रक्रमः । भिक्षापात्रमादायादौमातरं भवतीभिक्षांददात्विति । अथपितरं भवान्भिक्षांददात्विति । (आदिमध्यावसानेषुभवच्छब्दोपलक्षिता । ब्राह्मणक्षत्रियविशांभैक्ष्यचर्यायथाक्रममितिमनूक्तेः) । एवंमातुःस्वसारंस्वभगिनीमन्यानपिबांधवानप्रत्याख्यायिनोऽप्रत्याख्यायिनीश्चयाचयित्वाभैक्षमाचार्यायनिवेद्यबटुर्मध्याह्नसंध्यांकुर्यादितिप्रयोगपारिजाते । नेतिकृष्णभट्टीकारः । ततोब्राह्मणाशिषांग्रहणम् ॥ तत्रमंत्राः ॥ ॐ बृहस्पतेप्रथमंवाचइति सूक्तं । ॐतेंवदन्प्रथमाब्रह्मकिल्बिषेकूपारःसलिलोमातरिश्वा । वीळुहरास्तपउग्रोमयोभूरापोदेवीःप्रथमजाऋतेन । सोमोराजाप्रथमोब्रह्मजायांपुनःप्रायच्छदहृणीयमानः । अन्वर्तितावरुणोमित्रआसीदग्निर्होताहस्तगृह्यानिनाय । हस्तेनैवग्राह्यआधिरस्याब्रह्मजायेयमितिचेदवोचन् । नदूतायप्रह्येतस्थएषातथाराष्ट्रंगुपितंक्षत्रियस्य । देवाएतस्यामवदंतपूर्वेसप्तऋषयस्तपसेयेनिषेदुः । भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन् । ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमंगं । तेनजायामन्वविंदद्बृहस्पतिःसोमेननीतांजुह्वं१नदेवाः । पुनर्वैदेवाअददुःपुनर्मनुष्याउत । राजानःसत्यंकृण्वानाब्रह्मजायांपुनर्ददुः । पुनर्दायब्रह्मजायांकृत्वीदेवै

नैकिल्विषं । ऊर्जंपृथिव्याभक्त्वायौरुगायमुपासते ॥ ५ ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं । अशीमहि
गाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय । गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहा
नेवैनानाजिगमिषंतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा । आपस्तंबशाखायां । नयंप्रजांमेगोपाय । अमृतत्वायजीवसे । जातांज
निष्यमाणांच । अमृतेसत्येप्रतिष्ठितां । इति । द्वेशतेशतंवाब्राह्मणाउपनयनेभोज्याः । ततोगुरुसंनिधावचपलस्तिष्ठन्नहः
शेषंनीत्वासायंवंदितसंध्यऔपनायनिकाग्नेरंतिकआसीनःप्राणानायम्यसायमग्निकार्यंकरिष्येइतिसंकल्प्य परिसमूहनपर्युक्षणे
कृत्वा पूर्ववत्समिधमाधाय त्रिर्मुखंपूर्ववदवमृज्यउक्तपण्मंत्रैरुपस्थाय । ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वे
षुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे । इतिमंत्रेण भस्मादायत्र्यायुषमित्यादिमंत्रैस्तत्तत्स्थाने
षुपूर्ववद्धृत्वापुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांजलिस्तिष्ठन्नोंचमइत्युपतिष्ठेत ॥ ॥ अथानुप्रवचनीयहोमः । अथाचार्योऽस्त
मितेग्नेःपश्चात्स्वासीनःप्राणानायम्यब्रह्मचारिणंदक्षिणतउपवेश्यतिथ्यादिसंकीर्त्य उपनयनांगभूतमनुप्रवचनीयहोमंकरिष्येइ
तिसंकल्प्य । अत्रकरिष्यमाणेनुप्रवचनीयहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्ये
नेत्यंतमुक्त्वात्रप्रधानं सदसस्पतिंसवितारमृषीनितिप्रधानदेवताश्चरुद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा
भूर्भुवःस्वःस्वाहेतिसमिधौहुत्वापरिसमूहनादिप्रणीताप्रणयनांतंकृत्वा तद्भिक्षाद्रव्यंचतुरश्चतुरोमुष्टीन्तूष्णींदेवतात्रयस्यविप्र
त्रयस्यभोजनपर्याप्तंनिरुप्यतूष्णींप्रोक्ष्यत्रिःफलीकृत्यत्रिःप्रक्षाल्यश्रपयित्वाशृतःस्थालीपाकइत्याचार्यायनिवेदयेद्बटुः । वटोरे

वंकरणाशक्तौतद्बंधुनान्येनवाकारयेत् । ततोब्रह्मचारिणान्वारब्धोगुरुराज्यसंस्काराद्याघारातंकृत्वाप्रधानहोमंकुर्यात् । अवदानधर्मेणावदाय सदसस्पतिमित्यस्यकाण्वोमेधातिथिःसदसस्पतिर्गायत्री अनुप्रवचनीयप्रधानचरुहोमेविनि० । ॐ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं । सनिंमेधामयासिषंस्वाहा । सदसस्पतयइदं० । तत्सवितुरित्यस्यगाथिनोविश्वामित्रःसविता गायत्री । विनियोगउक्तवत् । ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात्स्वाहा । सवित्रइदं० । ॐ ऋषिभ्यःस्वाहा । ऋषिभ्यइदं० । एवंत्रिभिर्मंत्रैर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यतदवशिष्टान्नेनत्र्यवरान्ब्राह्मणान्भोजयित्वातैर्वेद समाप्तिंवाचयेत् । ततोब्रह्मचारीअक्षारालवणमन्नंभुक्त्वाधःशयीत । मेधाजननंयावत्तावदेवगुरुंप्रसादयन्वर्तेत । यदागर्जनाद्यनध्यायशंकातदादिवैवचरुंश्रपयेत् । होमस्तुसायंसंध्योत्तरमेवतदानानध्यायदोषः । तदुक्तंसंग्रहे नसंध्यागर्जितेकाले नवृष्ट्युत्पातदूषिते । ब्रह्मौदनंपचेद्विद्वान्नौपक्वंचेन्ननिवर्तते । तथा ब्रह्मौदनंपचेदह्निपक्वमन्नंनदुष्यति । तथाचोपनयनानुप्रवचनीयचरुश्रपणयोरंतरानध्यायेपुनरुपनयनम् । एषप्रयोगःस्वस्वकालकृतसंस्कारस्य । असंस्कृतस्यतुविशेषउच्यते । आचार्य उपनयनात्पूर्वदिनेवटुनासहमंगलस्नातःप्राणानायम्यतिथ्यादिसंकीर्त्यममकुमारस्यगर्भाधानपुंसवनसीमंतविष्णुबलिजातकर्म नामकरणनिष्क्रमणान्नप्राशनचौलांतानांनवसंस्काराणांकालातिपत्तिदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरिष्य इतिसंकल्प्योपलेपादिपूर्णपात्रनिधानांतंकृत्वा विधिवदाज्यंसंस्कृत्याघारांतंकृत्वातीतकर्मसंख्यया ॐ भूर्भुवःस्वःस्वाहे

त्वाज्याहुतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्य चौलातिरिक्तसंस्काराणाप्रमादादकरणेप्रत्येकंपादकृच्छ्रं चौलाकरणेऽर्धकृच्छ्रं बुद्धिपूर्वकंचौलातिरिक्ताकरणेप्रत्येकमर्धकृच्छ्रंचौलाकरणेकृच्छ्रंवटुनाकारयेत् । अशक्तौतत्प्रत्याम्नायत्वेनगोदानतिलाहुतिसहस्रदशसहस्रगायत्रीजपद्वादशब्राह्मणभोजनादिष्वेकंप्रायश्चित्तंकारयित्वाऽतीतानिजातकर्मादीनिकृत्वापूर्वोक्तप्रकारेणोपनयनतंत्रंसर्वमाचरेत् । उपनयनेनसहचौलकरणे पूर्वेद्युःसंस्कारद्वयंसंकीर्त्ययुगपत्स्वस्तिवाचनग्रहयज्ञनांदीश्राद्धानिकृत्वा परेद्युर्मंगलस्नानादिव्रीह्यादिपात्रचतुष्टयदानांतंपूर्वोक्तंचौलप्रयोगंसर्वंकृत्वा पुनस्तिथ्यादिसंकीर्त्य उपनयनसंकल्पाद्यनुप्रवचनीयहोमांतंसर्वंकार्यम् । इतिश्रीरामेश्वरभट्टसुतनारायणभट्टविरचितेप्रयोगरत्नेउपनयनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथमेधाजननम् ॥ ॥ प्रागुक्तक्रमेणचरितव्रतस्यब्रह्मचारिणोमेधासिद्ध्यर्थमाचार्यश्चतुर्थे[२]दिवसेमेधाजननाख्यंकर्मकुर्यात् । तत्रायंक्रमः । प्रत्यग्वायव्योदक्प्रागुदक्पूर्वान्यतमस्यांदिशिशाखावर्जितंपलाशंतदभावेसशाखंवातदभावेकुशस्तंबंवा तदसंभवेस्वगृहऐशानदिग्भागेसर्वतोद्वादशांगुलांत्रिमेखलांवेदिंकृत्वातस्यांपत्रांकुरसमन्वितामार्द्रांपलाशशाखांसमूलंकुशस्तंबंवाप्रति

१ पादकृच्छ्रार्धकृच्छ्रयोर्गोदानरुद्रैकादशिनीजपादिरूपप्रत्याम्नायासंभवात्तिलहोमाद्यन्यतमएवप्रत्याम्नायः । सचतुरीयांशरूपोऽर्धरूपइतिपादकृच्छ्रार्धकृच्छ्रानुसारेणकल्पनीयः । पादकृच्छ्रादीनामनुकल्पाः विष्णुः—पादकृच्छ्रेवस्त्रदानंकृच्छ्रार्धेतैलकांचनं । पादहीनेतुगामेकांकृच्छ्रेगोमिथुनंस्मृतंइतिस० । तैलयुक्तंकांचनंतैलकांचनम् । २ अत्रकालनिर्णयेनुकल्पाः—सावित्रीग्रहणादूर्ध्वंतद्दिनेवाचतुर्थके । प्रथमेव्देतृतीयेवा द्वादशेव्रतमुत्सृजेदितिगोभिलः ।

ष्ठाप्यब्रह्मचारिणान्वारब्धः संकल्पपूर्वकंपूजांकुर्यात् । तत्रक्रमः । तिथ्यादिसंकीर्त्यममकुमारस्योपनयनव्रतसमाप्तिवेदग्रह
णसामर्थ्यलक्षणमेधासिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमेधाजननाख्यंकर्मकरिष्ये इतिसंकल्प्य शौनकमतेपुण्याहवाचनमपि
कृत्वामेधाजननकर्मणिपूर्वोक्तफलसिद्ध्यर्थमेधापरनामकसावित्रीपूजनमहंकरिष्ये । इतिसंकल्पः । पलाशशाखायांमेधायैनम
इतिनाममंत्रेणावाहनाद्युपचारान्कृत्वा यावकसक्तुमोदकमिश्रमन्नंनिवेद्यपुनश्चपूर्ववदभ्यर्च्यब्रह्मचारिणाप्रणमय्यशुद्धजलपा
त्रोदकेनसेचनंकुर्वताबटुनात्रिःप्रदक्षिणंकारयन्मंत्रंवाचयेत्प्रणामयेच्च । ॐ सुश्रवःसुश्रवाअसियथात्वंसुश्रवःसुश्रवाअस्येवंमां
सुश्रवःसौश्रवसंकुरु । यथात्वंदेवानायज्ञस्यनिधिपोस्येवमहंमनुष्याणांवेदस्यनिधिपोभूयासंइति । प्रतिप्रदक्षिणंमंत्रावृत्तिंप्रणामं
चकारयेत् । ततोब्रह्मचारीस्नात्वानवान्यज्ञोपवीताजिनमेखलादंडानुपनयनवत्समंत्रकंधृत्वा पुराणानिपलाशसन्निधौवि
सृज्य पूर्वधृतवाससीगुरवेदत्वा मेधामह्यमितिसूक्तंविप्रैःपाठयित्वा विधिवत्स्वस्तिवाचनंकृत्वा ब्राह्मणेभ्योदक्षिणांयथाश
क्तिदत्वा तान्भोजयित्वानमस्कृत्याशिषोगृह्णीयात् । अथमेधामह्यमितिसूक्तम् । ॐ मेधामह्यमंगिरसोमेधांसप्तर्षयोददुः ।
मेधामिंद्रश्चाग्निश्चमेधांधातादधातुमे । मेधांमेवरुणोराजामेधांदेवीसरस्वती । मेधांमेअश्विनौदेवावाधत्तांपुष्करस्रजा । यामे
धाअप्सरस्सुगंधर्वेषुचयन्मनः । दैवीयामानुषीमेधासामामाविशतादिमाम् । यन्मेनोक्तंतद्रमतांशकेयंयदनुब्रुवे । निशामतं
निशामहैमयिव्रतंसहव्रतेषुभूयासंब्रह्मणासंगमेमहि । शरीरंमेविचक्षणंवाङ्मेमधुमद्दुहाम् । अवृद्धमहमसौसूर्योब्रह्मणानीस्थः
श्रुतंमेमाप्रहासीः । मेधादेवीमनसारेजमानांगंधर्वजुष्टांप्रतिनोजुषस्व । मह्यंमेधांवदमह्यंश्रियंवदमेधावीभूयासमजराजरिष्णु ।

सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं । सनिंमेधामयासिषं । यांमेधांदेवगणाःपितरश्चोपासते । तयामामेधयामेमेधाविनं कुरु । मेधाव्य१हंसुमनाःसुप्रतीकःश्रद्धामनाःसत्यमतिःसुशेवः । महायशाधारयिष्णुःप्रवक्ताभूयासमस्येस्वधयाप्रयोगे ॥ ॥ इतिनारायणभट्टविरचितेप्रयोगरत्नेमेधाजननांतउपनयनप्रयोगः ॥ ॥ ॥ ॥

अथमहानाम्न्यादिव्रतानि ॥ ॥ तत्राद्यंतावत् जन्मप्रभृतित्रयोदशेवर्षेउक्तोदगयनादिकालेमहानाम्नीव्रतंकार्यम् । पूर्वेद्युराचार्योब्रह्मचारिणासहसुस्नातःकृतनित्यक्रियःप्राणानायम्य तिथ्यादिसंकीर्त्यैनंब्रह्मचारिणंमहानाम्नीरध्यापयिष्यंस्तदादौ महानाम्नीव्रतसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमंकरिष्ये । तदंगतयास्वस्तिवाचनांकुरार्पणग्रहयज्ञाभ्युदयिकश्राद्धानिकरिष्ये इतिसंकल्प्य पूर्वोक्तवत्तानिकृत्वा पूर्वेद्युर्ब्रह्मचारिणावपनस्नानेकारयित्वा बद्धशिखंतंसुमुहूर्तेस्वदक्षिणतउपवेश्य विधिवत्कौतुकमाबध्य संकल्पपूर्वकमुपलेपनाद्यग्निप्रतिष्ठांतंकर्मकृत्वा समिद्द्वयमादायतिथ्यादिसंकीर्त्य अस्यब्रह्मचारिणोमहानाम्नीव्रतांगभूतंहोमंकर्तुंदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेऽग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा व्याहृतिभिरग्नावाधायोद्देशत्यागौकृत्वापरिसमूहनाद्याज्यसंस्कारांतंकृत्वा अथाचार्यउत्थायाग्नेःपश्चादवस्थाय ब्रह्मचारिणंप्राङ्मुखमवस्थाप्य कौपीनार्थंत्रिवृतंकार्पाससूत्रमाबध्यकौपीनंधारयित्वा । युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् । वासोधारणेविनियोगः । ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः । अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे । इतिमंत्रावृत्त्याऽहतंशुक्लंवासःपरिधायान्ये

नकाषायवस्त्रेणप्रावृणुयात् । ततोयज्ञोपवीतंसमंत्रकंधारयित्वा तमात्माग्न्योर्मध्येनयज्ञपात्रोत्तरभागंगमयित्वा तत्रविधिव
दाचमय्यतथैवानीयोपवेश्यवर्हिष्याज्यासादनांतंकृत्वा ब्रह्मचारिणादक्षिणहस्तेनस्पृष्टःसन्नाघारांतंकृत्वा आज्यभागवर्जमग्न
आयूंषीत्यादिभिश्चतुर्भिश्चतस्रआज्याहुतीर्जुहुयात् । अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः अग्निःपवमानोदेवता गाय
त्रीछंदः । महानाम्नीप्रधानाज्यहोमेवि० । ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनांस्वाहा । अग्नये
पवमानायेदं० । ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयंस्वाहा । अग्नये० । ॐ अग्नेपवस्वस्वपाअ
स्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । अग्नये० । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । महा० प्रधानाज्यहो० । ॐ प्रजा
पतेनत्वदेतान्यन्योविश्वाजातानिपरितांबभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइदं० ।
ततआचार्यउत्तरतोग्नेःप्राङ्मुखोब्रह्मचारीचाचार्याग्न्योर्मध्येनगत्वाचार्यस्यपुरतोभिमुखस्तिष्ठेत् । ततःआचार्यःसंयतःसूर्या
त्मासंस्तस्यशुचित्वसिद्धयेसवितृदेवतातृप्तयेचांजलिक्षारणंकुर्यात् । तत्रक्रमः । जलपात्रोदकेनशिष्यांजलिमापूर्यस्वस्यांज
लिमन्येनपूरयित्वा । तत्सवितुरित्यस्यश्यावाश्वःसवितानुष्टुप् अंजलिक्षारणेविनियोगः । ॐ तत्सवितुर्वृणीमहेवयंदेवस्य
भोजनं । श्रेष्ठंसर्वधातमंतुरंभगस्यधीमहि । इतिस्वांजलिस्थोदकंशिष्यांजलावक्षार्यतज्जलंवटोरंजलिनैवावक्षारयेत् । तत
आचार्योवटोर्हस्तंगृह्णीयात् । तत्रमंत्रः । देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांहस्तंगृह्णाम्यमुकशर्मन्निति
वटोरभिवादनीयंनामशर्मांतंसंबुद्ध्यामंत्रांतेनिर्दिश्य दक्षिणपाणिनासांगुष्ठंवटोर्दक्षिणपाणिंगृहीत्वा पुनरपिपूर्ववदुदकपूरणा

दिकृत्वा सवितातेहस्तमग्रभीदितिमंत्रांतेपूर्ववन्नामनिर्दिश्य हस्तंगृहीत्वा पुनरपिपूर्ववत्पूरयित्वा अग्निराचार्यस्तवेतिमंत्रांते पूर्ववन्नामनिर्दिश्यहस्तंगृह्णीयात् । ततोवटुसंरक्षणार्थंव्रतपतयेआदित्यायवटुंददामीतिमनसास्मरन्दद्यात् । तत्रमंत्रः । वटुनासहनिष्क्रम्य देवसवितरेषतेब्रह्मचारीतंगोपायसमामृतेत्युच्चार्यतमादित्यमीक्षयेत् । ततउभावप्युत्तरतोग्नेःपूर्ववदन्योन्याभिमुखौतिष्ठताम् । अथाचार्यःकस्यब्रह्माचार्यसिप्राणस्यब्रह्मचार्यसिकस्त्वाकमुपनयतेकायत्वापरिददामीतिमंत्रंजपन् । प्रजापतयेवटुंमनसासमर्प्य पूर्ववदुपविश्य इयंदुरुक्तेतिमंत्रेणमेखलामावध्यस्वस्तिनइति अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयम् । दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयमितिदंडंप्रदायपुराणानियज्ञोपवीतादीनिजलेनिक्षिप्यस्विष्टकृदादिहोमशेषंसमापयेत् । अथगुरुणामहानाम्नीव्रतंचरेतिब्रह्मचारीप्रेपितश्चरिष्यामीत्युक्त्वा संवत्सरपर्यंतंकेशश्मश्रुनखलोमधारणभिक्षाचरणादिव्रतंपूर्ववच्चरेत् । पूर्णेवर्षेउदगयनेशुक्लपक्षेवटुर्गुरोर्महानाम्नीःश्रोष्यन्ग्रामाद्बहिर्विविक्तंशुचिदेशेदेवालयादौगच्छेत् । तत्रगुरुस्तिथ्यादिसंकीर्त्य अस्यब्रह्मचारिणोमहानाम्नीश्रवणांगभूतव्रतपरिपूर्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंतदंगहोमंकर्तुमुपलेपादिकंकरिष्यइतिसंकल्प्य स्थंडिलोल्लेपनाद्यग्निप्रतिष्ठापनांतंकृत्वा पुनस्तिथ्यादिसंकीर्त्यास्मिन्होमेदेवतापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुपीआज्येनेत्यंतमुक्त्वा अग्निं संराधनीं अग्निं अग्निअसूयंतीं अनुमतिं प्रदातारं अग्निं वायुं सूर्यं कृसरान्नद्रव्येण शेपेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यन्वाधाय परिसमूहनादिपूर्णपात्रनिधानांतंकुर्यात् । ततोवटुःस्थालीपाकविधानेनहोमायात्मभोजनायचपर्याप्तांस्तंडुलान्नवभ्योदेवताभ्यस्तूष्णींनिरुप्यतथैवप्रोक्ष्यमहानाम्नीदेवताप्रीत्यर्थंतत्रतिलान्प्रक्षि

प्यश्रपयित्वाआचार्याय शृतःस्थालीपाकइतिविज्ञापयेत् । ततआचार्योब्रह्मचारिणंव्रतलोपान्पृष्ट्वातेनव्रतलोपउक्तेतस्यगौरव
लाघवेविचार्यगुरुचेदत्रोक्तप्रायश्चित्तंकारयित्वापुनःसंवत्सरव्रतमादिशेत् । लघुचेत्प्रायश्चित्तमेवकारयित्वाशुद्धेनतेनान्वा
रब्धेआज्यसंस्काराद्याज्यभागांतंकृत्वावदानधर्मेणचरुमवदायाग्नावग्निरित्यादिभिरेकश्रुत्योक्तैःपण्मंत्रैर्व्यस्ताभिर्व्याहृतिभिश्च
नवाहुतीर्जुहुयात् । तेचमंत्राः । अग्नावग्निश्चरतिप्रविष्टऋपीणांपुत्रोअधिराजएपः । तस्मैजुहोमिहविपाघृतेनमादेवानांमो
मुहद्भागधेयंमोअस्माकंमोमुहद्भागधेयंस्वाहा । अग्नयइदं० । यास्तिरश्चीनिपद्यतेहंविधरणीइति । तांत्वाघृतस्यधारयायजे
संराधनीमहंस्वाहा । संराधन्याइदं० । यस्मैत्वाकामकामायवयंसम्राड्यजामहे । तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिवस्वाहा ।
अग्नयइदं० । अयंवोअग्निर्वरिवःकृणोत्वयंमृधःपुरएतुप्रभिंदन् । अयंशत्रूञ्जयतुजर्हृपाणोयंवाजंजयतुवाजसातौस्वाहा ।
अग्नयइदं० । असूयंत्यैचानुमत्यैचस्वाहा । असूयंत्यैचानुमत्यैचेदंनमम । प्रदात्रेस्वाहा । प्रदात्रइदंन० ॥ ६ ॥ ॐ भूःस्वाहा
अग्नयइदं० । ॐ भुवःस्वाहा वायवइदं । ॐ स्वःस्वाहा सूर्यायेदं० ॥ ९ ॥ एवंनवाहुतीर्हुत्वास्विष्टकृदर्थंस्रुचिचरुमवदायतां
बर्हिषिनिधायब्रह्मचारिणंशास्ति एतंस्थालीपाकंसर्वमशान इति । सचसर्वंचरुमश्नीयात् । आचार्योभुक्तवंतमाचांतंव्रत
वंतमादित्यंव्रतपूर्तयेउपतिष्ठस्वेतिप्रेषयेत् । ततःसः—त्वंव्रतानांव्रतपतिरसिव्रतंचरिष्यामितच्छकेयंतेनशकेयंतेनराध्यासंइत्या
दित्यमुपतिष्ठमानोद्भिःपूर्णांजलिंसिंचेत् । तदाचार्यस्तेनमंत्रेणकृतांजलिंबटुमादित्यमुपस्थापयेत् । ततः अनालोक्यालोक
नासंभाष्यासंभाषणनिवृत्तयेबटुनाक्षिसंमीलनंवाग्यमनंचकारयित्वा त्रयस्त्रिंशद्देवताप्रीत्यर्थंवेदत्रयमनुसरन्नहतेनवाससाब

टोर्मुखसहितंशिरोवामकर्णदेशमारभ्यत्रिःप्रदक्षिणंवेष्टयित्वा यथातद्वासोनपतिततथावध्वाएकरात्रंत्रिरात्रंचैवंभूतोस्वपन्भव
इतिप्रेष्यस्विष्टकृदादिहोमशेषंसमापयेत् । वटुस्त्ववश्यकर्तव्यसंध्यावंदनादन्यत्स्नानभोजनाद्यकुर्वाणस्तंकालंनयेत् । ततए
करात्रपक्षेद्वितीयदिनेग्रामाद्वहिरपराजितायांदिशिस्त्रीसंचारशून्येशुचौदेशेअन्योब्रह्मचारीअग्निस्थंडिलादुत्तरतोसिमुदककमं
डलुमश्मानंचनिधायतत्प्रत्यगुदग्देशेमहानाम्न्यसंश्रवणस्थलेपिसंगतानांयोगिनामाश्रयार्थ रम्यांरक्तांद्विवर्षावत्सतरीं तदसं
भवेश्वेतांवावध्वाचार्यायनिवेदयेत् । ततआचार्यस्तत्स्थंडिलेउल्लेखनादिपर्युक्षणाद्यग्निप्रतिष्ठापनांतंकृत्वा तत्पश्चात्प्रागग्रे
षुतृणेषुऐशानस्थान्देवान्समानयन्निवतदभिमुखउपविशेत् । ततःशिष्योवेष्टितवस्त्रंकिंचिदपसार्य मुखंप्रक्षाल्यकंठस्नानं
कृत्वाचम्याचार्यमग्निंचप्रदक्षिणीकृत्यगुरुमभिवाद्यतस्यैवासनदर्भमूलेष्वेवनैर्ऋतिस्थान्राक्षसान्निरीक्षणेननिर्दहंस्तदभिमुखउ
पविश्यरक्षसामंतरागमननिर्हरणार्थस्वपृष्ठमाचार्यपृष्ठेनसहसंधाय महानाम्नीर्भोअनुब्रूहीतिमनसागुरुंवदेत् । ततोगुरुःकालप्र
माणेनतदुक्तिंज्ञात्वापुनस्तदहरुत्पन्नव्रतलोपान्पृष्ट्वाऽनुतापिनेश्रद्दधानायवटवेस्वयमक्षिणीसंमील्यविदामघवन्नित्याद्यानवर्चः
एवाह्येवैवाह्यग्नाइत्यादिनवपुरीषपदानिचत्रिवारंब्रूयात् । शिष्योपित्रिवारंपठेत् । तेचमंत्राः । ॐ वि॒दाम॑घवन्वि॒दागा॒तु
मनु॑शंसि॒षो॑दिशः । शिक्षा॑शचीनांपतेपूर्वी॒णांपुरूवसो । आ॒भिष्ट्वम॒भिष्टि॑भि॒ःप्रचेतन॒प्रचेतय । इंद्र॑द्युम्नाय॒नइ॒षएवाहिश॒क्रः ।
रा॒येवाजा॑यवज्रिवः॒शविष्ठवज्रिन्नृं॑जसे । मंहि॑ष्ठवज्रिन्नृंजसआया॑हिपिब॒मत्स्व । वि॒दारा॒यःसु॒वीर्य॒भुवो॑वाजा॑ना॒ंपति॒र्वशाँअनु॑ ।
मंहि॑ष्ठवज्रिन्नृं॑जसे॒यःशविष्ठः॒शूराणां । योमंहि॑ष्ठोम॒घोनां॑चिकि॒त्वोऽअ॒भिनोनय । इंद्रोवि॒दे॒तमु॑स्तु॒षेवशी॒हिश॒क्रः ।

तमूतयेहवामहेजेतारमपराजितं । सनःपर्षदतिद्विषःक्रतुश्छंदऋतंबृहत् । इंद्रंधनस्यसातयेहवामहेजेतारमपराजितम् ।
सनःपर्षदतिद्विषःसनःपर्षदतिस्त्रिधः । पूर्वस्ययत्तेअद्रिवःसुम्नआधेहिनोवसो । पूर्तिःशविष्ठशस्यतईशेहिशक्रः । नूनं
तंनव्यंसन्यसेप्रभोजनस्यवृत्रहन् । समन्येपुब्रवावहैशूरोयोगोपुगच्छति । सखासुगेवोअद्वयाः । इत्येतानवर्चः । ॐ
एवाह्येवैवाह्यग्नाइ३इ । एवाह्येवैवाहींद्रं । एवावैह्येवाहिविष्णा३उ । एवाह्येवैवाहिपूपन् । एवाह्येवैवाहिदेवाः । ए
वाहिशक्रोवशीहिशक्रोवशाँअनु । आयोमन्यायमन्यवउपोमन्यायमन्यवे । उपेहिविश्वध । विदामघवन्विदोम् इति ।
ततस्तस्यशिरोवेष्टनमुन्मुच्यादित्यमीक्षस्वेतिवदेत् । ततोवटुः । मित्रस्यत्वाचक्षुपाप्रतीक्षे । मित्रस्यत्वाचक्षुपासमीक्षे ।
इतिमंत्रद्वयेनादित्यमवेक्षेत । ततोस्यादिसंभारयुतादिशोमित्रस्यवश्चक्षुपानुवीक्षेइतीक्षेत । पुनरादित्यमीक्षस्वेत्युक्ते । मित्रस्य
त्वाचक्षुषाप्रतिपश्यामियोस्मान्द्वेष्टियंचवयंद्विष्मस्तंचक्षुषोर्हेतुर्ऋच्छतुइत्यादित्यमीक्षेत । ततोग्नइळेत्याद्यष्टमंत्रैर्भुवमुपस्पृशेत् ।
तेचमंत्राः । ॐअग्नइळानमइळानमऋषिभ्योमंत्रकृद्भ्योमंत्रपतिभ्योनमोवोअस्तुदेवेभ्यः । शिवानःशंतमाभवसुमृळीकायसरस्व
तिमातेव्योमसंदृशि । भद्रंकर्णेभिरितिराहूगणोगोतमोविश्वेदेवास्त्रिष्टुप् । भूमिस्पर्शनेविनियोगः । ॐ भद्रंकर्णेभिःशृणुयाम
देवाभद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः । शंनइद्राग्नीतिवसिष्ठोविश्वेदेवास्त्रिष्टुप् ।
भूम्युपस्पर्शनेविनियोगः । ॐ शंनइंद्राग्नीभवतामवोभिःशंनइंद्रावरुणारातहव्या । शमिंद्रासोमासुविताययशंयोःशंनइंद्रा
पूषणावाजसातौ । स्तुषेजनंसुव्रतमित्यृजिश्वोविश्वेदेवास्त्रिष्टुप् । भूम्युपस्पर्शनेवि० । ॐ स्तुषेजनंसुव्रतंनव्यसीभिर्गीर्भिर्मि

त्रावरुणासुम्नयंता । तआगमंतुतइहश्रुवंतुसुक्षत्रासोवरुणोमित्रोअग्निः । कयानश्चित्रइतितृचस्यवामदेवइंद्रोगायत्री । भूम्यु
पस्प० । ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता । कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ।
दृढाचिदारुजेवसु । अभीषुणःसखीनामविताजरितॄणां । शतंभवास्यूतिभिः । स्योनापृथिवीमेधातिथिर्भूमिर्गायत्री । भूम्यु
पस्प० । ॐ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः ॥ ८ ॥ इत्येतैर्मंत्रैर्भूमिंस्पृष्ट्वावत्सतरींगुरवेदत्वाऽनुप्र
वचनीयार्थमुपनयनवत्तंडुलान्भिक्षित्वागुरवेनिवेद्यदिवैवब्रह्मौदनहोमंकुर्यात् । तत्रक्रमः । देशकालौनिर्दिश्य ममहाना
म्न्यध्ययनांगभूतमनुप्रवचनीयहोमंकरिष्यइतिसंकल्प्योल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वा पुनर्देशकालौनिर्दिश्यात्रानुप्रवचनीय
होमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये इत्याद्याघारावाज्येनेत्यंतमुक्त्वा सदसस्पतिं महानाम्नीः ऋषींश्च एताःप्रधानदेवता
श्चरुद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिद्द्वयमाधायोद्देशत्यागौकृत्वा परिसमूहनादिपूर्णपात्रनिधानां
तंकृत्वा भैक्षतंडुलांश्चतुरश्चतुरोमुष्टींस्तूष्णींदेवतात्रयस्यविप्रत्रयभोजनायचनिरुप्यतथैवप्रोक्ष्यश्रपयित्वाशृतोऽनुप्रवचनीयइ
तिगुरवेनिवेदयेत् । ततःशिष्येणान्वारब्धआज्यसंस्काराद्याघारांतंकृत्वाज्यभागवर्जमवदानधर्मेणचरुमवदाय । सदसस्प
तिंकाण्वोमेधातिथिःसदसस्पतिर्गायत्री । अनुप्रवचनीयप्रधानचरुहोमेवि० । ॐ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं । सनिं
मेधामयासिषंस्वाहा । सदसस्पतयइदंनमम । इतिप्रथमाहुतिम् । महानाम्नीभ्यःस्वाहाइतिद्वितीयाम् । ऋषिभ्यःस्वाहाइति
तृतीयाहुतिंहुत्वा स्विष्टकृदादिहोमशेषंसमाप्य कर्मांतेकर्तव्यस्वस्तिवाचनंकृत्वाब्राह्मणान्भोजयित्वा वेदसमाप्तिरस्त्वितिभ

वंतोऽनुवंत्विति तान्वदेत् । तेपिवेदसमाप्तिरस्त्विति प्रतिब्रूयुरिति ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेमहानाम्नीव्रतप्रयोगः ॥
अथमहाव्रतप्रयोगः ॥ आचार्यःपूर्ववदुदगयनादौस्वस्तिवाचनादिहोमशेषसमाप्त्यंतंमहानाम्नीव्रतवत्कृत्वा संवत्सरंमहाव्रतमा
चरेतिवटुंप्रेष्यतेनसंवत्सरव्रतआचरितेग्रामाद्बहिःशुद्धेदेशेप्रागग्रेषुदर्भेषुप्राङ्मुखउपविश्यशिष्येणविधिवदभिवादनपूर्वकंमहा
व्रतंभोअनुब्रूहीतिवचनेनैवोक्तस्तंप्राङ्मुखमुपवेश्य अथमहाव्रतंएषपंथाएतत्कर्म इत्येतदारण्यकंत्रिर्ब्रूयात् । ततःशिष्यस्तथैव
त्रिवारमुक्त्वापूर्ववन्मंत्रद्वयेनादित्यमवेक्षेत । ततोगुरुशिष्यौमहानाम्नीव्रतोक्तैरग्नइळादिभिरष्टमंत्रैर्भूमिंस्पृशेताम् । ततःशि
ष्योदिवाब्रह्मौदनंश्रपयित्वाचार्यायनिवेदयेत् । ततआचार्योमहानाम्नीभ्यःस्वाहेतिस्थानेमहाव्रतायस्वाहेतिद्वितीयाहुतिंहु
त्वासर्वमनुप्रवचनीयंकुर्यात् ॥ इतिमहाव्रतप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
अथोपनिषद्व्रतप्रयोगः ॥ ॥ आचार्यःपूर्ववद्धोमसमाप्त्यंतंमहानाम्नीव्रतवत्कृत्वासंवत्सरमुपनिषद्व्रतमाचरेतिवटुंप्रेष्यतेन
तथाव्रतेकृते प्राग्वदुपनिषदंभोअनुब्रूहीत्युक्तस्तंप्राङ्मुखमथातःसंहितायाउपनिषदित्यारण्यकंत्रिर्ब्रूयात्। शिष्यस्तथैवत्रिरुक्त्वा
पूर्ववदादित्यावेक्षणभूस्पर्शब्रह्मौदनश्रपणनिवेदनानिकुर्यात् । ततआचार्योमहाव्रतस्थानेउपनिषदेस्वाहेतिहुत्वापूर्ववदनुप्रव
चनीयंकुर्यात् । आचार्याभावेशिष्यःस्वयमेवमहाव्रताध्ययनादिकंकुर्यादिति । इत्युपनिषद्व्रतम् ॥
अथगोदानप्रयोगः ॥ ॥ जन्मतःषोडशेवर्षेउदगयनेशुक्लपक्षेचौलोक्ततिथ्यादौगोदानंकुर्यात् । तत्रपूर्वेद्युराचार्यःकृतनित्य
क्रियःकृतस्नानोब्रह्मचारिणंस्वदक्षिणतउपवेश्यप्राणानायम्यतिथ्यादिसंकीर्त्य अस्यब्रह्मचारिणोगोदानंकर्तुंतदंगस्वस्तिवाच

नांकुरार्पणग्रहयज्ञाभ्युदयिकानिकरिष्ये इतिप्रत्येकंसंकल्प्य तानिक्रमेणकृत्वा परेद्युःकृतनित्यक्रियःकृतनित्यक्रियंवटुंद क्षिणतउपवेश्यकौतुकमावध्य सुमुहूर्तेउपलेपनाद्यग्निप्रतिष्ठापनांतंकृत्वा पुनर्देशकालौस्मृत्वा मयाक्रियमाणेगोदानहोमेदेव तापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्याद्याधारावाज्येनेत्यंतमुक्त्वा त्रिरग्निंपवमानंप्रजापतिंचैताःप्रधान देवताआज्येनशेषेणस्विष्टकृतमित्याद्युक्त्वा समिद्द्वयमग्नावाधायपूर्णपात्रनिधानांतंकृत्वा उदगग्नेरास्तीर्णदर्भेषुव्रीहियवमा षतिलैःपृथक्पृथक्पूरितनवशरावचतुष्टयंक्रमेणैकैकशःप्राक्संस्थमासाद्य प्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतोवटोर्माताप्राङ्मुख्या सीत । मातुःपुरस्तादग्नेःपश्चादानडुहशकृच्छरावंशमीपर्णशरावंचसंस्थापयेत् । ततोब्रह्मैकविंशतिकुशांकुरान्दधानोमातुर्दक्षि णेतिष्ठेत् । ततोबटुनान्वारब्धःकर्तापूर्वतंत्रमाधारांतंकृत्वा । अग्नआयूंषीत्यादिचतुर्भिर्मंत्रैःपूर्ववदाज्याहुतीर्हुत्वोद्देशत्या गौकृत्वा शीतोष्णजलेपात्राभ्यांपृथगानीयबटोःपश्चिमतःस्थित्वातदुदकमन्यस्मिन्पात्रेप्रसार्य उष्णेनवायउदकेनेहीतियुगप न्निनीय तदेकदेशंनवनीतेनदध्नावामेलयित्वावटोर्वामश्मश्रुप्रदेशमारभ्यप्रदक्षिणमदितिःश्मश्रूणिवपत्वापउंदंतुवर्चसइतिमंत्रा वृत्त्यात्रिःश्मश्रूण्येवक्लेदयित्वा ब्रह्महस्तस्थैकविंशतिकुशांकुरेषुत्रीनंकुरानादायवटोरभिमुखंपश्चिमाग्रान्कृत्वा ॐ ओषधेत्रा यस्वैनंइतिदक्षिणश्मश्रुभागेनिधायतेष्वंकुरेषुताम्रमयंक्षुरं । ॐ स्वधितेमैनंहिंसीःइतिनिधाय । ॐ येनावपत्सविताक्षुरेणसो मस्यराज्ञोवरुणस्यविद्वान् । तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासत् इतिसश्मश्रुकान्कुशांकुरांश्छित्त्वाप्रागग्रान्छरा वस्थशमीपर्णैरेकीकृत्यमातुःकरेदद्यात् । साचतानानडुहेगोमयेप्रागग्रान्निदध्यात् । एवंद्वितीयादिच्छेदनेकुशांकुरत्रयनिधा

नादिसमंत्रकंकार्यम् । विशेषस्तु । ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् । तेनतआयुषेवपामिसुश्लोक्यायस्वस्तयेइति मंत्रोद्वितीयच्छेदने । ॐ येनभूयश्चरात्र्यांज्योक्पश्याति‌सूर्यं । तेनतआयुषेवपामिसुश्लोक्यायस्वस्तयेइतितृतीयच्छेदने । चतुर्थेत्वेतेत्रयोपिमंत्राः । एवंदक्षिणश्मश्रुभागेचत्वारिछेदनानिकृत्वोत्तरभागेप्येवंत्रीणिछेदनान्यादितोमंत्रत्रयेणकुर्यान्नच तुर्थम् । ततःक्षुरधारां ॐ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिश्मश्रूणि । शुंधिशिरोमुखंमास्यायुःप्रमोषीःइत्यग्रतआरभ्या मूलमवमृज्य नापितमाहूयशीतोष्णाभिरद्भिरवर्थकुर्वाणोऽक्षण्वन्कुशलीकेशश्मश्रुलोमनखान्युदक्संस्थानिकुर्विति‌प्रेष्यतंप्रैषा र्थेचावबोध्यतेनपूर्वसेकावशिष्टैःशीतोष्णांबुभिरग्रपाणिनार्द्रीकृत्यकेशश्मश्रुलोमनखान्युदक्संस्थानिवापयित्वास्नातंवटुंपूर्वव दुपवेश्यस्विष्टकृदादिहोमशेषंसमाप्यतद्व्रीह्यादिपात्रचतुष्टयंनापितायदद्यात् । ततोवटुरहःशेषंमौनेननीत्वावंदितसायंसंध्यो गुरोरंतिकंगत्वावरंददामीतिवाचंविसृज्यतस्माअनड्वाहंगांचदक्षिणात्वेनयाचयित्वावादद्यात् । ततःपरेद्युःसंवत्सरंगोदान व्रतमाचरेत्याचार्येणोक्तेब्रह्मचारीसंवत्सरंकेशश्मश्रूणिधृत्वापूर्वोक्तब्रह्मचारीनियमेनगुरुसमीपेव्रतंचरेत् ॥ ॥ इतिश्रीभट्टरा मेश्वरसूनुनारायणभट्टकृतेप्रयोगरत्नेगोदानव्रतप्रयोगः ॥ ॥ ॥ ॥

अथब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ ॥ तत्रबौधायनः—अत्रशौचाचमनसंध्यावंदनदर्भपाणिभिक्षाग्निकार्यराहित्यशूद्रादि स्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदिवास्वापछत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनानुलेपनांजन जलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपजनितसकलदोषपरिहारार्थंब्रह्म

चारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहोमंचकुर्यात् । तद्यथा लौकिकाग्निंप्रतिष्ठाप्यान्वादध्यात् । देशकालादिस्मृत्वाक्रियमाणेमहा व्याहृत्यादिहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वात्रप्रधानं अग्निं वायुं सूर्यं प्रजापतिं अग्निंपृथिवींमहांतं आदित्यंदिवंमहांतं वायुमंतरिक्षंमहांतं चंद्रमसंनक्षत्राणिदिशोमहांतं अग्नएनसं विश्ववेदसं विभावसुं शतक्रतुं द्विवारमग्निं अग्निं वायुं सूर्यं प्रजापतिंचाज्येन शेषेणस्विष्टकृतमित्याद्यन्वाधाय आज्यभागांतंकृत्वा प्रथमंव्यस्तसमस्तव्याहृतिभिश्चतस्रआज्याहुतीर्हुत्वा ततोभूरग्नयेचेत्यादिमंत्रैर्होमयेत् । तच्चैवं ॐ भूःस्वाहा अग्नय इदंनमम । ॐ भुवःस्वाहा वायवइदं० । ॐ स्वःस्वाहा सूर्यायेदं० । ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदं० । ॐ भूरग्नयेच पृथिव्यैचमहतेचस्वाहा अग्नयेपृथिव्यैमहतेचेदं० । ॐ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा वायवेंऽतरिक्षायमहतेचेदं० । ॐ सुवरादित्यायचदिवेचमहतेचस्वाहा । आदित्यायदिवेमहतेचेदं० । ॐ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेच स्वाहा चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतेचेदं० । ॐ पाहिनोअग्नएनसेस्वाहा अग्नएनसइदं० । पाहिनोविश्ववेदसेस्वाहा विश्ववेदसइदं० । यज्ञंपाहिविभावसोस्वाहा विभावसवइदं० । सर्वंपाहिशतक्रतोस्वाहा शतक्रतवइदं० । ॐ पुनरूर्जानिवर्तस्वपुनरग्नइहायुषा । पुनर्नःपाह्यंहसःस्वाहाअग्नयइदं० । ॐ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया । विश्वप्स्न्याविश्वतस्परिस्वाहा । अग्नयइदं० । पुनर्व्याहृतिभिर्हुत्वास्विष्टकृदादिहोमशेषंसमापयेदिति । एतदल्पधर्मलोपेप्रायश्चित्तं । बहुधर्मलोपेतुप्रायश्चित्तविशेषोऋग्विधानेशौनकेनोक्तः—तंवोधियाजपेन्मंत्रंलक्षंचैवशिवालये । ब्रह्मचारीस्वधर्मंचन्यूनंचेत्पूर्णमेवतदिति । महानाम्न्या

दिव्रतेषुलुप्तेषुतारतम्येनत्रीन्षड्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंप्रारभेतेतिस्मृत्यर्थसारे ॥ इतिब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥
अथसमावर्तनप्रयोगः ॥ ॥ आचरितब्रह्मचारिनियममहानाम्न्यादिव्रतचतुष्टयोब्रह्मचारीविद्यांतेगुरुमर्थदानेनसंपूज्यतेना
नुज्ञातोज्योतिर्विदोक्तेशुभकालेआचार्यगृहेसमावर्तनंनामकर्मकुर्यात् । ब्रह्मचारिनियमव्रतचतुष्टयलोपपक्षेप्रायश्चित्तंकृत्वा
शुद्धःसन्निदंकुर्यात् । तत्रायंक्रमः । पूर्वेद्युस्तिथ्यादिसंकीर्त्य ममशौचाचमनादिसर्वब्रह्मचर्यनियमलोपप्रायश्चित्तद्वाराश्री
परमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमाचरिष्येइतिसंकल्प्य लौकिकाग्निंप्रतिष्ठाप्याज्यहोमधर्मेणान्वाधानपूर्वकंपूर्वोक्ताष्टादशा
ज्याहुतीर्हुत्वा कृच्छ्रत्रयप्रत्याम्नायत्वेनकल्पितगोदानसहस्रतिलहोमदशसहस्रगायत्रीजपादिष्वन्यतमंचरित्वाहोमशेषंसमाप
येत् । महानाम्न्यादिव्रतलोपपक्षेप्रत्येकंगायत्र्याशतसंख्याष्टाविंशतिमष्टौवाज्याहुतीर्हुत्वाएकैकंकृच्छ्रंचरित्वाशुभदिनेमहाना
म्नीव्रतंकृत्वातथैवमहाव्रतादिव्रतत्रयंकृत्वागुरवेदक्षिणांदत्वातेनानुज्ञातोमण्यादीन्येकादशोपकल्पयेत् । तानिच । मणिकुंड
लेवस्त्रयुगंदंडंस्रजंएकबीजकरंजफलपिष्टंश्रीखंडाद्यनुलेपनमंजनमुष्णीषमिति एतान्यात्मनेचाचार्यायच । यद्युभयोर्नविंदे
ताचार्यायैवसंपाद्यानि । यस्मिन्नहनिसमावर्तनंतस्मिन्प्रातरपराजितायांदिशिगत्वायज्ञियवृक्षस्यैशानींशाखांछित्त्वात्मप्रादेश
मितांसमिधमाहृत्यभूमेरन्यत्रोपरिनिदध्यात् । तत्रक्रमः । ब्रह्मचारीकृतनित्यक्रियःकृतप्रातरग्निकार्यश्चप्राणानायम्यतिथ्या
दिसंकीर्त्य ममगृहस्थाद्याश्रमांतरप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनंकरिष्ये इतिसंकल्प्य तदंगभूतस्वस्तिवाचनांकुरार्पण
ग्रहयज्ञाभ्युदयिकानिसंकल्पपूर्वकंकृत्वा प्रागुक्तलक्षणांसमिधमाहृत्योपरिनिधायब्रह्मचर्यव्रतसंपूर्तयेब्राह्मणायगांदत्वाद्विजा

न्भोजयित्वाविधिवत्कौतुकमावध्य शुभकालेस्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वा पुनर्देशकालौनिर्दिश्यसमिद्द्वयमादाय क्रियमाणेसमावर्तनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वा त्रिरग्निं पवमानंप्रजापतिंचैताःप्रधानदेवताआज्येन अग्निमूर्ध्वसमिधा विश्वान्देवान्दशसमिद्भिः शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्य इत्यंतमुक्त्वासमिद्द्वयमग्नावाधाय पूर्णपात्रनिधानांतंपुरस्तनंतंत्रमनुष्ठायोदगग्नेरास्तीर्णेषुदर्भेषुव्रीहियवमाषतिलैःपृथक्पूरिता निचत्वारिशरावाणिक्रमेणैकैकशःप्राक्संस्थान्यासादयेत् । ताम्रमयंलोहंवाक्षुरंशीतमुष्णंचोदकंनवनीतंदधिद्रप्सान्वा मण्या द्येकविंशतिद्रव्याणिचाग्नेरुत्तरतआसादयेत् । ततःप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतोमाताप्राङ्मुख्यासीत । तस्याःपुरःअग्नेः पश्चात् एकस्मिन्शरावेशमीपर्णान्यपरस्मिन्नानडुहंगोमयमासादयेत् । ततोब्रह्मैकविंशतिकुशांकुरान्दधानोमातुर्दक्षिणतस्ति ष्ठेत् । ततोब्रह्मचारीपुरस्तनंतंत्रमाघारांतंकृत्वा अग्नआयूंषीतितिसृणांशतंवैखानसाअग्निःपवमानोगायत्री समावर्तनप्रधा नाज्यहोमेवि० । ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनांस्वाहा । अग्नयेपवमानायेदं० । ॐ अग्निर्ऋ षिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयंस्वाहा । अग्नयेपवमानायेदं० । ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । अग्नयेपवमानायेदं० । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् समावर्तनप्रधानाज्यहोमेवि० । ॐप्रजा पतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइ दं० । ततोब्रह्माशीतोष्णवारिणीपात्राभ्यांपृथगानीयवटोःपश्चिमदेशेस्थित्वातदुदकमन्यस्मिन्पात्रे ॐ उष्णेनवायउदकेनेहि

इतिमंत्रेणयुगपन्निनीयतदेकदेशंगृहीत्वानवनीतेनदध्नावामिश्रयित्वाबटोर्वामश्मश्रुप्रदेशमारभ्यप्रदक्षिणम् । ॐ अदितिः श्मश्रूणिवपत्वापउंदंतुवर्चसे इतिमंत्रंप्रतिक्लेदनमावर्तयन्त्रिवारंश्मश्रूण्येवक्लेदयित्वा स्वहस्तस्थितेष्वेकविंशतिकुशांकुरेषुत्रीनं कुरानादायदक्षिणश्मश्रुभागेब्रह्मचार्यभिमुखंपश्चिमाग्रंनिदध्यात् । तदाब्रह्मचारी ॐ ओषधेत्रायस्वमाम् । इतिजपेत् । ततोब्रह्मातेषुकुशांकुरेषुताम्रमयंक्षुरंनिदध्यात् । तदाब्रह्मचारी ॐ स्वधितेमामाहिंसीः । ॐ येनावपत्सविताक्षुरेणसो मस्यराज्ञोवरुणस्यविद्वान् । तेनब्रह्माणोवपतेदमआयुष्मान्जरदष्टिर्यथासम् । इतिजपेत् । ततोब्रह्मचारिणायेनावप दितिमंत्रेउच्चारितेब्रह्मासश्मश्रुकान्कुशांकुरांश्छित्त्वातानंकुरान् प्रागग्रान्छरावस्थशमीपर्णैःसहैकीकृत्यमातुःकरेदद्यात् । साचतान्सश्मश्रुशमीपर्णकुशांकुरानानडुहेगोमयेनिदध्यात् । एवंद्वितीयादिच्छेदनेषुकुशांकुरत्रयनिधानादिसमंत्रकंकार्यम् । छेदनमंत्रेविशेषः । ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् । तेनमआयुषेवपामिसुश्लोक्यायस्वस्तयेइतिद्वितीयच्छेदने मंत्रः । ॐ येनभूयश्चरात्र्यांज्योक्चपश्यामिसूर्यं । तेनमआयुषेवपामिसुश्लोक्यायस्वस्तये । इतितृतीयच्छेदने । चतुर्थेतु ॐ येनावपत्० ॐ येनधाता० ॐ येनभूयश्चेतित्रयोपिमंत्राः । एवंदक्षिणश्मश्रुभागेचत्वारिच्छेदनानिकृत्वोत्तरश्मश्रुभागे प्यनयारीत्याद्यानित्रीणिछेदनानिप्रत्येकंमंत्रैःकुर्यात् नतुसर्वमंत्रैश्चतुर्थं । ततःक्षुरधारां । यत्क्षुरेणमर्चयतासुपेशसावप्तावप सिश्मश्रूणि । शुंधिशिरोमुखंमामआयुःप्रमोषीः । इत्यनेनाग्रतआरभ्यामूलमवमृज्यनापितमाहूय शीतोष्णाभिरद्भिरत्रर्थकु र्वाणोक्षण्वन्कुशलीकुर्विति प्रैषेणानुशास्यप्रैषार्थंचावबोध्यनापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृत्यकेशश्मश्रुलोमनखान्यु

दक्संस्थानिवापयित्वातद्व्रीह्यादिशरावचतुष्टयंनापितायदद्यात् । ततःकरंजबीजपिष्टेनस्वशरीरमुद्वर्त्यशीतोष्णैरुदकैःस्नात्वा
द्विराचम्यपुनर्वह्नेरंतिकंगत्वाएकंवस्त्रंसमंत्रकंपरिधायान्यद्वस्त्रंप्रावृणुयात् । तत्रमंत्रः । युवंवस्त्राणीत्यस्यदीर्घतमामित्राव
रुणौत्रिष्टुप् । वासोधारणेविनियोगः । ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः । अवातिरतमनृतानिविश्व
ऋतेनमित्रावरुणासचेथे । ततोद्विराचम्यपाणिनांजनमादाय । ॐ अश्मनस्तेजोसिचक्षुर्मेपाहि । इतिमंत्रावृत्त्यासव्यदक्षिण
चक्षुषीक्रमेणांक्त्वातथैव । ॐ अश्मनस्तेजोसिश्रोत्रंमेपाहि । इत्यनेनकुंडलाभ्यांदक्षिणसव्येश्रोत्रेलंकृत्य कुंकुमाद्यनुलिप्ताभ्यां
पाणिभ्यांपूर्वमुखमनुलिप्यपश्चादितरांगान्यनुलिप्यकरौप्रक्षाल्य । ॐ अनार्तास्यनार्तोहंभूयासं । इत्यनेनशिरसिस्रजंबध्वा ।
ॐ देवानांप्रतिष्ठेस्थःसर्वतोमापातं । इत्यनेनचर्ममय्यावुपानहौदक्षिणसव्यपादाभ्यामारुह्य । ॐ दिवश्छद्मासिइतिमंत्रेणछत्रं
धृत्वा । ॐ वेणुरसिवानस्पत्योसिसर्वतोमापाहि । इतिवैणवंदंडंगृहीत्वा । आयुष्यमितिसूक्तेनसुवर्णमणिंकंठेवध्नीयात् ।
आयुष्यमितिसूक्तस्यसनकसनंदनसनातनादयऋषयः हिरण्यंदेवता आद्याश्चतस्रोनुष्टुभः पंचमीत्रिष्टुप् षष्ठ्यनुष्टुप् सप्तमी
शक्वरी अष्टमीनवम्यौत्रिष्टुभौदशम्यनुष्टुबेकादशीजगती । कंठेमणिधारणेवि० । ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदम् ।
इदंहिरण्यंवर्चस्वज्जैत्रायाविशतादिमाम् । उच्चैर्वाजिपृतनापाट्सभासाहंधनंजयम् । सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्त्स
माहिताः । शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ । तेनमांसूर्यत्वचमकरंपुरुप्रियं । सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा ।
लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज । अग्नेःप्रजातंपरियद्धिरण्यममृतंजज्ञेअधिमर्त्येषु । यएनद्वेदसइदेनमर्हतिजरा - त्युर्भ

र्वतियोविभर्ति॥१॥यद्वेदुराजावरुणोयदुदेवीसरस्वती। इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे। नतद्रक्षांसिनपिशाचास्तरंतिदेवाना
मोजःप्रथमजंह्येतत्। योविभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः। यदावध्नन्दाक्षायणाहिर
ण्यंशतानीकायसुमनस्यमाना। तन्नआवध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत्। घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधार
यिष्णु। ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय। प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु। प्रियंविश्वेषुगोप्तेषुमयिधेहि
रुचारुचं। अग्निर्येनविराजतिसूर्योयेनविराजति। विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकुरु। अनंतरमुष्णी
षेणप्रादक्षिण्येनशिरःसंवेष्ट्यउपानहौसंत्यज्यउपरिनिहितांप्रागुक्तांसमिधंगृहीत्वातिष्ठन्नेव स्मृतंचमइत्यादीन्स्वाहांतान्मंत्रानु
क्त्वाग्नावादध्यात्। स्मृतंचमइत्यादीनांमंत्राणांप्रजापतिरग्निरष्टी। समिदाधानेवि०। ॐ स्मृतंचमेअस्मृतंचमेतन्मउभयव्रतम्।
निंदाचमेअनिंदाचमेतन्मउभयव्रतम्। विद्याचमेअविद्याचमेतन्मउभयव्रतं। श्रद्धाचमेअश्रद्धाचमेतन्मउभयव्रतं। प्रज्ञाचमेअ
प्रज्ञाचमेतन्मउ०। इष्टंचमेअनिष्टंचमेतन्म०। दत्तंचमेअदत्तंचमेतन्म०। अधीतंचमेअनधीतंचमेतन्म०। कृतंचमेअकृतंचमेत
न्म०। सत्यंचमेअसत्यंचमेतन्म०। श्रुतंचमेअश्रुतंचमे०। व्रतंचमेअव्रतंचमेतन्मउभयव्रतम्। यदग्नेसेंद्रस्यसप्रजापतिकस्यस
ऋषिकस्यसऋषिराजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्यस्यसमनुष्यराजन्यस्यसाकाशस्यसातीकाशस्यसानूकाशस्यस
प्रतीकाशस्यसदेवमनुष्यस्यसगंधर्वाप्सरस्कस्यसहारण्यैश्चपशुभिर्ग्राम्यैश्चयन्मआत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिदमहमग्नेसर्व
व्रतोभवामिस्वाहा इति। अग्नयइदंनमम। अथोपविश्यान्याःप्रादेशसंमितादशसमिधोममाग्नेवर्चोविहवेष्वित्यनेनसूक्तेनप्रत्यृचं

ऋगंतेन्नावादध्यात् पश्चात्स्वाहाकारमुच्चारयेत् । ममाग्नेवर्चइतिसूक्तस्यविहव्यऋषिः विश्वेदेवादेवता आद्याजगत्यन्यास्त्रि
ष्टुभः । समिदाधानेवि० । ॐ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम । मह्यंनमंतांप्रदिशश्चतस्त्रस्त्वयाध्यक्षेणपृतना
जयेमस्वाहा । विश्वेभ्योदेवेभ्यइ० । एवमग्रेपिसर्वत्रत्यागः । ॐ ममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः । ममांतरि
क्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन्स्वाहा । विश्वे० । ॐ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः । दैव्या
होतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वासुवीराःस्वाहा । विश्वे० । ॐ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु । एनोमा
निगांकतमच्चनाहंविश्वेदेवासोअधिवोचतानःस्वाहा । विश्वे० । ॐ देवीःषळुर्वीरुरुणःकृणोतविश्वेदेवासइहवीरयध्वम् । माहा
स्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन्स्वाहा । विश्वे० ॥ १ ॥ ॐ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिन
स्त्वम् । प्रत्यंचोयंतुनिगुतःपुनस्तेऽमैषांचित्तंप्रबुधांविनेशत्स्वाहा । विश्वे० । ॐ धाताधातृणांभुवनस्ययस्पतिर्देवंत्रातारमभि
मातिषाहम् । इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात्स्वाहा । विश्वे० । ॐ उरुव्यचानोमहिषःशर्मयंसद
स्मिन्हवेपुरुहूतःपुरुक्षुः । सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाःस्वाहा । विश्वे० । ॐ येनःसपत्नाअपतेभवंत्विं
द्राग्निभ्यामववाधामहेतान् । वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन्स्वाहा । विश्वे० । ॐ अर्वांचमिंद्र
ममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः । इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वास्वाहा । विश्वेभ्योदेवेभ्यइदंनमम
॥ २ ॥ १० ॥ इतिदशमंत्रैर्दशाहुतीर्हुत्वाततःस्विष्टकृदादिहोमशेषंसमापयेत् । ततःस्नातकोनैमित्तिकंविनानक्तंनग्नश्चनस्नामि

मैथुनादन्यत्रनग्नांस्त्रियंनेक्षे वर्षतिनधावामि वृक्षंनारोहामि कूपंनावरोहामि नबाहुभ्यांनदींतरेय प्राणसंशयंनाभ्यापद्ये इत्येवं संकल्पयेत् । ततःकौपीनंमेखलांचविसृजेत् । केशश्मश्रुनखलोमान्यपराजितायांदिशिनिखनति । ततोयत्रमधुपर्कादि पूजास्यसंभावितातत्रैतांरात्रिंवसेत् । समावर्तनानंतरंत्रिरात्रमाशौचंकुर्यात् ॥ इतिश्रीरामेश्वरभट्टसुतनारायभट्टविरचिते प्रयोगरत्नेसमावर्तनप्रयोगः ॥ ॥ ॥

अथक्रमप्राप्तोविवाहः ॥ ॥ तत्रतावत्तदुपयोगितयाकिंचित्संक्षेपेणोच्यते । अनाश्रमीनतिष्ठेतक्षणमेकमपिद्विजः । आश्र मेणविनातिष्ठन्प्रायश्चित्तीयतेहिसइतिदक्षस्मृतेः । गुरवेतुवरंदत्त्वास्नायीततदनुज्ञया । वेदव्रतानिवापारंनीत्वाह्युभयमेववा । अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् । अनन्यपूर्विकांकांतामसपिंडांयवीयसीम् । अरोगिणींभ्रातृमतीमसमानार्षगोत्रजा मितिचयाज्ञवल्क्योक्तेस्त्रिविधोपिवेदव्रतोभयस्नातकोविलंबेनलक्षणादिविशिष्टांस्त्रियं नपुंसकव्यावृत्तयेस्त्रीत्वेनपरीक्षितामु द्वहेत् । तत्रापिकुलमग्रेपरीक्षेतेतिगृह्यवचनाददौसदाचारादिगुणवत्तयाहीनक्रियात्वादिदोषहीनतया चपरीक्ष्यकुलंतज्जोद्भ्वा। तदनुलक्षणादपिपरीक्ष्य। लक्षणानिचशुभाशुभसूचकानितनुलोमकेशदशनत्वादीनिप्रत्यक्षगम्यानिबाह्यान्याभ्यंतराणि चाष्टौपिंडान्कृत्वेत्यादिनागृह्योक्तानिविविधान्यपिमहाग्रंथेभ्योज्ञेयानि । विस्तरभियात्विहनोच्यंते । दानेनोपभोगेनवापुरुषां

---

१ प्रायश्चित्तमयूखे—अनाश्रमीसंवत्सरंस्थितश्चेत्प्राजापत्यंचरित्वाऽश्रममुपेयात् । द्वितीयेऽतिकृच्छ्रंतृतीयेकृच्छ्रातिकृच्छ्रंततऊर्ध्वंचांद्रायणं । प्राजापत्येगामेकां अतिकृच्छ्रेद्वय कृच्छ्रातिकृच्छ्रेत्रयं चांद्रायणेविकल्पेनत्रयचतुष्टयपंचादिव्यवस्था ।

तरपूर्विकानभवतिसानन्यपूर्विकाताम् । अनेनवाग्दत्तामनोदत्ताग्निपरिगतासप्तमंपदंनीताभुक्तागृहीतगर्भाप्रसूताचेतिसप्तपु
नर्भुवोव्यावर्त्यंते । कांतांवोढुर्मनोनयनयोराह्लादकरीम् । समानएकःपिंडःपिंडदानक्रियामूलपुरुपशरीरंवायस्यानविद्यते
सासपिंडाताम् । कथंचिदेकपिंडक्रियानुप्रवेशेननिर्वाप्यसापिंड्यंकेचिदाहुः । एकशरीरावयवान्वयेनावयवसापिंड्यंविज्ञाने
श्वरादयोनिर्दोपंमेनिरे । अत्रवहुतरंवक्तव्यंविचाररत्नतापत्त्याप्रयोगरत्नताभंगभीत्यानोच्यते । नन्वेवंविधातृशरीरावयवा
न्वयेनसापिंड्यातिप्रसंगेननकाप्यसपिंडेत्यतआहयाज्ञवल्क्यः—पंचमात्सप्तमादूर्ध्वंमातृतःपितृतस्तथेति । मातृपक्षेपंचमा
त्पितृपक्षेसप्तमादूर्ध्वसापिंड्यंनिवर्ततइतिविशेपः । कूटस्थमारभ्यात्रगणना । तदुक्तम्—वध्वापरस्यवातातःकूटस्थाद्यदि
सप्तमः । पंचमीचेत्तयोर्मातातत्सापिंड्यंनिवर्ततइति । कूटस्थोमूलपुरुपो यतःसंतानभेदः । एवंचमातृपितृद्वारकसापिंड्य
वतीनांकन्यकानामियंसंख्यासंकलना । उद्वोढुःपितरौपितुश्चपितरौतज्जन्मकृद्दंपतीद्वंद्वंतस्यचतुष्कमष्टकमतोप्यस्यक्रमात्षो
डशम् । वंशारंभकदंपतीप्रमितिरित्यासप्तकक्ष्यंरदाएकैकान्वयकन्यकाःपितृकुलेत्वासप्तकक्ष्यंब्रुवे ॥ १ ॥ यद्यप्येकस्यत्रह्वयो
पिसुताःस्युस्तदपीहतु । संवंधसाम्यादेकैवगणितेत्यवधार्यताम् ॥ २ ॥ एकस्मान्मिथुनात्सुतोथदुहिताद्वंद्वद्वयंतद्वयात्तस्मा
द्वंद्वचतुष्कमष्टचततोऽतःपोडशातोरदाः । यावत्सप्तमकक्ष्यमग्निऋतवःकन्याइहैकान्वयेतादंतैर्गुणितारसैकखदशोवंशेसपिं
डाःपितुः ॥ ३ ॥ मातुर्जन्मददंपतीचमिथुनद्वंद्वंतयोःसागरास्तस्याःपंचमकक्ष्यमश्वमतिरित्येकान्वयःपुंसुते । द्वंद्वाद्वंद्वयुगं
ततोऽधयइतोष्टापंचकक्ष्यंशरक्षोण्यःसप्तगुणाःशराभ्रविधवोमातुःसपिंडाःकुले ॥ ४ ॥ कुलद्वयस्वकन्यकायुतामिथःसपिं

डका। हिमांशुदग्धराद्दशो २१२१ विवाहकर्मवर्जिताइति ॥ ५ ॥ यवीयसींस्वापेक्षयावयसावपुषाचन्यूनाम् । अरोगि णींअचिकित्स्यराजयक्ष्मादिरोगरहिताम् । भ्रातृमतीमितिपुत्रिकाकरणशंकानिवृत्त्यर्थम् । यत्रतुपुत्रिकाकरणाभावनिश्चयस्ता मभ्रातृकामप्युद्वहेत् । असमानार्पगोत्रजांऋपेरिदमार्पं । गोत्रप्रवर्तकस्यमुनेर्व्यावर्तकःप्रवरइत्यर्थः। गोत्रंवंशपरंपराप्रसिद्धम् । स्वसमानेआर्षगोत्रेयस्यतज्ज्ञानभवतिताम् । यास्कवाधूलमौनमौकानांभिन्नगोत्राणामपिभार्गववैतहव्यसावेतसेतिप्रवरैक्य मस्तितत्रविवाहोमाभूदित्यसमानार्पगोत्रजामित्युक्तम् । आंगिरसांवरीपयौवनाश्वेतिमांधात्रांवरीपयौवनाश्वेति । आंगिरस मांधातृप्रवरभेदेपियौवनाश्वेगोत्रैक्यं तादृशेविवाहवारणायासमानगोत्रजामित्युक्तम् । तथाचगोत्रप्रवरौपृथक्पर्युदासेनि मित्तभूतौ । प्रवरैक्येविशेषमाहबौधायनः—पंचानांत्रिपुसामान्यादविवाहस्त्रिपुद्वयोः । भृग्वंगिरोगणेष्वेवंशेपेष्वेकोपिवा रयेदिति । गोत्रप्रवरनिर्णयःसपिंडसप्रवरसगोत्रविवाहप्रायश्चित्तादिचमहाग्रंथतोऽवसेयं विस्तरभियेहनोच्यते। सपत्नमाता महकुलेप्यतिदेशिकात्सापिंड्यादविवाहः । तथाचसुमंतुः—पितृपत्न्यःसर्वामातरस्तद्भ्रातरोमातुलास्तद्भगिन्योमातृष्वसारस्त दुहितरश्चभगिन्यस्तदपत्यानिभागिनेयान्यन्यथासंकरकारिणःस्युरिति । अत्रयावद्वचनंवाचनिकमितिन्यायेनपरिगणितेष्वे वातिदेशिकंसापिंड्यंनतुपंचसप्तपर्यंतम् । क्वचित्तुवचनादेवविवाहनिषेधः । तथागृह्यपरिशिष्टे—अथविवाहइत्युपक्रम्यम ध्येअविरुद्धसंबंधामुपयच्छेतेत्युक्त्वांतेदंपत्योर्मिथःपितृमातृसाम्येविरुद्धसंबंधोयथाभार्यास्वसुर्दुहितापितृव्यपत्नीस्वसाचेति स्वयमेवविरुद्धसंबंधेनिवृत्ते । तथानारदः—प्रत्युद्वाहोनैवकार्योनैकस्मैदुहितृद्वयम् । नचैकजातयोःपुंसोरेकजन्येचकन्यके।

नैवंकदाचिदुद्वाहोनैकदामुंडनद्वयम् । अन्यत्रापि—एकजन्येतुकन्येद्वेपुत्रयोर्नैकजन्मनोः । नपुत्रीद्वयमेकस्मैप्रदद्यात्तुकदाचनेति ॥ ॥ अथवरगुणाः—तत्रबुद्धिमतेकन्यांप्रयच्छेदितिगृह्यम् । यमः—कुलंचशीलंचवयश्चरूपंविद्यांचवित्तंचसनाथतांच । एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषमचिंतनीयम् । अन्योपिगुणदोषविचारोग्रंथांतरादवसेयः । अन्यच्च—कुलेऋतुत्रयादर्वाङ्मंडनान्नतुमुंडनम् । पुत्रोद्वाहान्नैवपुत्रीविवाहोपिऋतुत्रये । अब्दांतरान्मुंडनंचनैकदामुण्डनद्वयम् । अब्दभेदेतुनदोषइतिसंहितासारावल्याम्—फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने । भेदादब्दस्यकुर्वीतनर्तुत्रयविलंबनमिति । देयकन्याकालोमहाग्रंथतोज्ञेयः । वधूवरयोःबृहस्पत्यादिशुद्धिर्विवाहेकालशुद्धिर्वर्णवश्यादिघटनातेषुसाधकबाधकव्यवस्थाचज्योतिषग्रंथेभ्योविवेचनीयेतिदिक् । तथा ज्येष्ठमासेज्येष्ठगर्भस्यजन्मभादौचसर्वेषांमंगलकार्यनिषिद्धंरत्नकोशे—जन्मर्क्षेजन्मदिवसेजन्ममासेशुभंत्यजेत् । ज्येष्ठमासाद्यगर्भस्यशुभंवर्ज्यस्त्रियाअपीति ॥ ॥ अथकन्यादातारः । तत्रयाज्ञवल्क्यः—पितापितामहोभ्रातासकुल्योजननीतथा । कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः । अप्रयच्छन्समाप्नोतिभ्रूणहत्यामृतावृतौ । गम्यंत्वभावेदातॄणांकन्याकुर्यात्स्वयंवरम् । स्वकुल्यप्रत्यासत्तिक्रमेणादौपितृकुलस्थस्तदभावेमातामहकुलस्थःसर्वाभावेजननी । प्रकृतिस्थउन्मादादिदोषहीनः । गम्यंगमनार्हंसावर्ण्यादिगुणयुक्तम् । नारदोपि—पितादद्यात्स्वयंकन्यांभ्राताचा

१ भ्रातॄणांसंस्कृतानामेवाधिकारः—असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैरितिवचनात् तेनानुपनीतभ्रातृमात्रादिसत्त्वेमात्रादेरेवाधिकारो नतुभ्रातुः । मातुर्दातृत्वेतयैवस्वयंसंकल्पंकृत्वान्यद्वारानांदीश्राद्धकार्यं । तत्रजीवत्पतिकायाः स्वीयान्येवमातृपितृमातामहपार्वणानि । भर्तृप्रति

नुमतेपितुः । मातामहोमातुलश्चसकुल्योबांधवस्तथा । मातात्वभावेसर्वेषांप्रकृतौयदिवर्तते । तस्यामप्रकृतिस्थायांकन्यांद द्युःस्वजातयः । यदातुनैवकश्चित्स्यात्कन्याराजानमाव्रजेदिति ॥ ॥ अथविवाहभेदाः ॥ मनुः—ब्राह्मोदैवस्तथाचार्षः प्राजापत्यस्तथासुरः । गांधर्वोराक्षसश्चैवपैशाचस्त्वष्टमोमतः । एतेषांलक्षणंफलंचाऽलंकृत्यकन्यामितिगृह्यखंडेऽवगंतव्यम् । एतेषांव्यवस्थास्मृतौ—चत्वारोब्राह्मणस्याद्याराज्ञांगांधर्वराक्षसौ । राक्षसश्चासुरोवैश्येशूद्रेचांत्यस्तुगर्हितः । अंत्यःपैशाचः । गांधर्वादिष्वपिभार्यापतिभावायपश्चाद्धोमादिसप्तपद्यंतंकार्यम् । गांधर्वासुरपैशाचाविवाहोराक्षसश्चयः । पूर्वंपरिग्रहस्तेषुप श्चाद्धोमोविधीयतइतिपरिशिष्टात् । होमाद्यभावेवरांतरायदेया सतितुनेति । बौधायनआह—बलादपहृताकन्यामंत्रैर्यदि नसंस्कृता । अन्यस्मैविधिवद्देयायथाकन्यातथैवसेति । बलादितिछलादेरप्युपलक्षणम् । इत्यादिसर्वविचार्यपरिवित्तिपरि वेत्तृत्वदिधिषुत्वादिचयथानस्यात्तथाविवाहःकार्यः । अस्माभिस्तुविस्तरभीतेर्नलिख्यते ॥ ॥ ॥

अथवाग्दानम् ॥ ॥ अथमुख्यब्राह्मविवाहांगभूतवाग्दानविधिर्गृह्यपरिशिष्टाचारसंमत्योच्यते । ज्योतिर्विदादिष्टेविवाह नक्षत्रादियुतेशुभकालेद्वौचत्वारोष्टादयोवाप्रशस्तवेषाःवरेणतत्पित्रादिनावा । ॐ अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंति

---

निधित्वेनकरणेतुभर्तुं पार्वणत्रयदेवताः । विधवातुपार्वणद्वयकुर्यात् । तथाचस्मृतिचद्रिकाया—स्वभर्तृप्रभृतित्रिभ्य स्वपितृभ्यस्तथैवच । विधवा कारयेच्छ्राद्धयथाकालमतद्रिता । वरस्तुसस्कृतभ्रात्रभावेस्वयमेवनादीश्राद्धंकुर्यान्नमाता । पुत्रसत्वेतस्या.श्राद्धनिपेधादितिप्रयोगचिंतामणौ निर्णयसिधौचविस्तरोज्ञेयः ।

नोवरेयम् । समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः । इति—प्रहितास्तावतीभिःपुरंध्रीभिर्मंगलगीततूर्यैश्चसहशकुनदर्शनपूर्वकमलंकृतवरयुतास्तदयुतावाकन्यास्वगृहमेत्यशुभेवस्त्रपीठासनेप्राङ्मुखींसालंकारांसुवेषांकन्यामुपवेश्य तद्धस्तेफलतांबूलादिदत्त्वातत्पित्रादिपुरतःश्रीगणपत्यादिस्मरणपूर्वकंप्राङ्मुखासीनाःप्रत्यङ्मुखावा अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवराय अमुकप्रवरोपेताममुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नींकन्यांभार्यात्वायवृणीमहेइतिब्रूयुः । अथदाताभार्याज्ञातिबंध्वनुमतिंकृत्वायथोक्तमनूद्याननूद्यवा वृणीध्वंइतिवदेत् । एवंद्विःपुनःप्रयुज्यप्रदास्यामीतिचोच्चैस्त्रिर्वदेत् । ततोवरपित्रादिर्गंधाक्षतशुभवस्त्रयुग्मभूषणतांबूलपुष्पादिभिःकन्यांपूजयेत्संप्रदायागतमंत्रैः ॥ ततःकन्यादाताप्राङ्मुखःकन्यांवामतउपवेश्यआचम्यदेशकालौस्मृत्वा करिष्यमाणविवाहांगभूतंवाग्दानमहंकरिष्ये । तदंगंगणपतिपूजनंकरिष्यइतिसंकल्प्यगंधादिदक्षिणांतैरुपचारैर्गणपतिंपूजयित्वाचयथाचारंकलशपूजनादिकृत्वास्वस्थानेकन्यापूजयितारमुपवेश्यस्वयंतत्प्राच्यांप्रत्यङ्मुखउपविश्यगंधतांबूलादिनापूजयेत्सचदातारम् । ततोदाताआचारतोहरिद्राखंडपंचाष्टदृढपूगफलानिचगंधाक्षतालंकृतानिगृहीत्वा । अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवरायामुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्यममपुत्रीममुकनाम्नीमिमांकन्यांज्योतिर्विदादिष्टेमुहूर्तेदास्येइतिवाचासंप्रददेइतिचोक्त्वा॥अव्यंगेऽपतितेऽक्लीबेदशदोषविवर्जिते। इमांक

१ दशदोषाःसंग्रहे—उन्मत्ता १ वृत्तिहीनाश्च २ तथापास्मार ३ दूषिताः । दूरस्थाः ४ कुष्ठिनो ५ मूर्खा ६ मोक्षमार्गानुसारिणः ७ । शूरा

न्यांप्रदास्यामिदेवाग्निद्विजसन्निधौ । इतिवरपित्रादिर्वस्त्रप्रांतेतानिपूगफलानिप्रक्षिप्यप्रतिष्ठामंत्रेणतदस्त्वित्यादिनावस्त्रेवध्वा ग्रंथिंचंदनेनचर्चयेदित्याचारप्राप्तम् । ततोहरिद्राखंडंपंचपूगफलानितथैववरपित्रादिर्गृहीत्वामुकगोत्रामुकवरविपयेभवंतो निश्चिताभवंत्वितिदातृवस्त्रप्रांतेप्रक्षेपादिकुर्यात् । ततोदाता । वाचादत्तामयाकन्यापुत्रार्थस्वीकृतात्वया । वरावलोकनविधौनिश्चितस्त्वंसुखीभवेतिदातारंप्रतिपठेत् । भ्रात्रादौस्वीकर्तरिभ्रात्रर्थमित्याद्यूहःकार्यः । ततोब्राह्मणाः । शिवाआपःसंतु । सौमनस्यमस्तु । अक्षतंचारिष्टंचास्तु । दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु । एतद्वःसत्यमस्त्वित्युक्त्वा । ॐ समानीव आकूतिःसमानाहृदयानिवः । समानमस्तुवोमनोयथावःसुसहासति । ॐ प्रसुग्मंताधियसानस्यसक्षणिंवरेभिर्वराँअभिषुप्रसीदतः । अस्माकमिंद्रउभयंजुजोषतियत्सोम्यस्यांधसोबुबोधति । इतिमंत्रौपठेयुः । ततोदातापात्रस्थसिततंदुलपुंजेशचीमावाह्यषोडशोपचारैःपूजयेत्तांचकन्यैवंप्रार्थयेत् । देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि । विवाहंभाग्यमारोग्यंपुत्रलाभंच देहिमेइति । ततःपुरंध्रीभिर्नीराजनादिमांगलिकंकार्यं । विप्राश्चगंधतांबूलादिपूजिताआशीर्मंत्रान्पठेयुः । तेच । ॐ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् । दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ १ ॥ ॐ समिद्धस्यश्रयमाणःपुरस्ताद्ब्रह्मवन्वानोअजरंसुवीरं । आरेअस्मदमतिंबाधमानउच्छ्रयस्वमहतेसौभगाय ॥ २ ॥ ॐ वनस्पतेशतव

८ अवेद्या ९ निवृत्ता १० दशदोषयुतावराः । [ अवेद्या अक्षरशून्याः । निवृत्ता विवाहेच्छापराङ्मुखा. ] तथाषंढाश्चपतिताश्चक्षुःश्रोत्रविवर्जिता । वर्जनीया.प्रयत्नेनकन्यादानेनसंशयः ॥ इतिसंस्काररत्नमाला ।

ल्शोविरोहसहस्रंवल्शाविवयंरुहेम । यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय ॥ ३ ॥ ॐ इंदुर्देवानामुपसख्य
मायन्त्सहस्रधारःपवतेमदाय । नृभिस्तवानोअनुधामपूर्वमगन्निंद्रंमहतेसौभगाय ॥ ४ ॥ ॐ अस्यपिवक्षुमतःप्रस्थितस्येंद्रसो
मस्यवरमासुतस्य । स्वस्तिदामनसामादयस्वार्वाचीनोरेवतेसौभगाय ॥ ५ ॥ ॐ घृतादुल्लुप्तंमधुमत्सुवर्णधनंजयंधरुणंधार
यिष्णु । ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ ६ ॥ इतिसौभगायपदांताःषट् । तदस्तुमित्रावरुणातदग्नेशं
योरस्मभ्यमिदमस्तुशस्तम् । अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय । गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्त
व्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा । सुप्रतिष्ठितमस्तु । सुमुहूर्तमस्तु ।
इतिमंत्रैःकन्याशिरस्यक्षतप्रक्षेपेणाशीर्दानंकुर्युः ॥ इतिनारायणभट्टविरचितेप्रयोगरत्नेवाग्दानप्रयोगः ॥ ॥ ॥
ततोवैवाहिकेशुभेमुहूर्तेवधूवरयोस्तैलहरिद्रारोपणादियथाचारंकार्यम् । वाग्दानोत्तरंदेशांतरगतेवरेनारदः—प्रतिगृह्यतुयः
कन्यांवरोदेशांतरंव्रजेत् । त्रीनृतूनसमतिक्रम्यकन्याऽन्यंवरयेद्वरम् । वरमरणेतुवसिष्ठः—अद्भिश्चवाचादत्तायांम्रियेता
दौवरोयदि । नचतौदंपतीस्यातांकुमारीपितुरेवसा । यस्यैवाग्दत्तातस्यदोपयोगेप्रशस्तवरांतरलाभेचतस्मैनदेयेत्याह
याज्ञवल्क्यः—दत्तामपिहरेत्पूर्वाच्छ्रेयांश्चेद्वरआव्रजेदिति । अत्रचपूर्वस्यदोपयोगइतिविज्ञानेश्वरः । प्रतिश्रुत्याप्यधर्मेणसं
युक्तायनदद्यादितिचस्मृतिः । अन्यथाहरणेतुसएवदंडमाह—सकृत्प्रदीयतेकन्याहरंस्तांचोरदंडभागिति ॥ ॥
अथविवाहेमंडपप्रकारमाहवसिष्ठः—षोडशारत्निकंकुर्याच्चतुर्द्वारोपशोभितम् । मंडपंतोरणैर्युक्तंतत्रवेदिंप्रकल्पयेत् ।

अष्टहस्तंतुरचयेन्मंडपंवाद्विपट्करम् ॥ वेदिकानिर्माणप्रकारमाहनारदः—हस्तोच्छ्रितांचतुर्हस्तैश्चतुरस्त्रांसमंततः । स्तंभैश्चतुर्भिःसुश्लक्ष्णांवामभागेतुसद्मनः । समांतथाचतुर्दिक्षुसोपानैरुपशोभिताम् । प्रागुदक्प्रवणांरंभास्तंभहंसशुकादिभिः । विचित्रामंकितांकुंभैर्विहितैस्तोरणांकुरैः । शृंगारपुष्पनिकरैर्वर्णकैःसमलंकृताम् । विप्राशीर्वचनैःपुण्यैस्त्रीभिर्दीपैर्मनोरमाम् । वादित्रनृत्यगीताद्यैर्हृदयानंदिनींशुभाम् । एवंविधामारुरुक्षेन्मिथुनंसाग्निवेदिकामिति । हस्तोऽत्रवध्वाः । सोपानकरणंपश्चिमभागेउपरिचतुर्दिक्षुवाअधोयथाचारम् । सोपानातिरेकेणचतुर्हस्ताचतुरस्त्रा । इतिविवाहवेदी ॥ ॥

अथविवाहपूर्वदिनकर्तव्यं ॥ ॥ वधूपितावरपिताचविवाहदिनात्पूर्वेद्युःपूर्वाह्णेसपत्नीकःकृताभ्यंगोधृतमांगलिकवेषःकृतलेपनरंगमांगलिकेप्रांगणेशुभासनेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींतद्दक्षिणतःकन्यांवरंवोपवेश्याचम्यप्राणानायम्येष्टदेवतागुर्वादिनमस्कारंकृत्वा देशकालौसंकीर्त्यअस्यामुकशर्मणःपुत्रस्यश्वःकरिष्यमाणविवाहांगभूतंस्वस्तिवाचनमंकुरार्पणंनांदीश्राद्धंग्रहयज्ञंमंडपदेवताप्रतिष्ठांचकरिष्यइतिसंकल्प्य उक्तरीत्यास्वस्तिवाचनादीनिकुर्यात् । ततोनांदीश्राद्धात्पूर्ववंशपात्रोपरिवस्त्रेगणपत्याद्यागौर्यादिषोडशब्राह्म्यादिसप्तमातृकास्तंडुलपुंजेपूक्तरीत्याप्रतिष्ठापूर्वकंपूज्याः । प्रयोगपारिजातकारैस्तुनांदीश्राद्धमात्रंपितृकर्तृकं स्वस्तिवाचनादितुवरकर्तृकमित्युक्तम् । तद्विचारणीयम् । कन्यापितापि। अस्याअमुकनाम्न्याःकन्यायाःश्वइत्यादिविशेषेणसंकल्प्यसर्वंकुर्यात् । ततोवरपिताआचार्येणकौतुकवंधार्थसूत्रद्वयंपूर्वोक्तरीत्याकारयेत् । तद्द्वयमाचार्यःकौतुकवंधोक्तमंत्रैस्तंत्रेणाभिषिच्यजातवेदसइत्यृचामंत्रावृत्त्यागंधेनलेपयित्वाशुद्धदेशेऽप्रज्ञातंनिदध्यात्॥ ॥ मंडपदेवतादि

प्रतिष्ठाचेत्थंकार्या ॥ दूर्वाशमीपल्लवकुलदेववृक्षपल्लवानाम्रादिप्रशस्तवृक्षपत्रवेष्टितान्सूत्रेणषोढावेष्टयेत् । तत्रैकत्रमुसलमेक
त्रचक्षुरिकादिशस्त्रंमध्येप्रक्षिप्यवेष्टयेत् । तानिपड्वंशपात्रेनिधायतन्मध्येउदक्संस्थेषुचतुर्षुक्रमेणनंदिनीनलिनीमैत्रोमास्तदुत्तर
स्थेमुसलगर्भेपशुवर्धिनींतदुत्तरस्थेशस्त्रगर्भेभगवतींतंडुलपूर्णेहरिद्राखंडपूगीफलयुतेहरिद्रादिमंडितेन्युब्जशरावेणसहसूत्रवेष्टि
तेसूक्ष्मकलशेअविघ्नसंज्ञंगणपतिंचावाह्यतदस्तुगृहावैप्रतिष्ठेतिप्रतिष्ठाप्यनीराज्यआसनाद्याचमनीयांतोपचारैःपूजयित्वातैलो
द्वर्तनोष्णोदकैरभ्यंगस्नानंपर्णावेष्टितानांकारयित्वागंधादिदक्षिणांतपंचोपचारैःपूजयेत् । पुष्पांजलिंदत्वानीराज्योत्थायसप
त्नीकआग्नेयकोणस्थमंडपस्तंभोपरिनंदिनीनामकंवेष्टितं । तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् । अशीमहिगा
धमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय । गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवै
नानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा । सुप्रतिष्ठितमस्तु । सुमुहूर्तमस्तु । इतिस्थापयित्वातत्रनंदिनींपूजयेत् ।
तच्चेत्थं । ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ।
ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणायचक्षसे । इतिमंत्राभ्यांप्रोक्ष्य । ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरी
षिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं । इतिगंधाक्षतान् । ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः । सुरभि
नोमुखाकरत्प्रणआयूंषितारिषत् । इतिदधि । ॐ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच ।
इतिदूर्वापुष्पाणिसमर्पयेत् । ततोनैर्ऋत्यवायव्येशानस्तंभेषुमंडपमध्योपरिभागेकोष्ठेचक्रमेणनलिनीमैत्रोमापशुवर्धिनीनामक

वेष्टितानिउक्तवत्स्थापयित्वापूजयेत् । ॐ याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयः पावकास्ताआपोदेवीरिहमामवंतु । इतिनलिन्याःप्रोक्षणेमंत्रः । ॐ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् । मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु । इतिमैत्रायाः । ॐ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु । इत्युमायाः । ॐ समुद्रज्येष्ठाइत्यादिचत्वारोपिपशुवर्धिन्याः । अन्यत्सर्वसमानम् । ततोवंशपात्रेणसहभगवतीगौर्यादिमातृकास्थापनवंशपात्रंचस्वयंगृहीत्वाअविघ्नकलशंचपल्याग्राहयित्वा ब्राह्मणः । ॐ कनिक्रदज्जनुषंप्रब्रुवाणाइयर्तिवाचमरितेवनावं । सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् । मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता । पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह । अवक्रंदद क्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते । मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ १ ॥ इतिसुमंगलसूक्तंपठन्मंगलवाद्यघोषेणगृहांतरंगत्वाप्रशस्तालंकृतैशानदेशेतंदुलादिपुंजत्रयोपरित्रीण्यपिस्थापयित्वातदस्तुगृहावैइतिपठित्वाचंदनादिनापूजयेत् । अन्यदपियथाकुलधर्मंसर्वंकुर्यात् । एवमेवमंडपदेवकप्रतिष्ठाउपनयनेपिज्ञेया । ततःकर्मांगदेवताकुलदेवताप्रीत्यर्थंद्विजसुवासिन्यादिभोजनंकार्यम् । अगतौतुसर्वमेतद्विवाहदिनएवपूर्वंकुर्यात् ॥ इतिप्रयोगरत्नेमंडपदेवतादिप्रतिष्ठा ॥ अथवरस्यवधूगृहगमनं ॥ वरःकृतनित्यक्रियविधिवत्स्वस्तिवाचनोब्राह्मणैःसहसात्विकाहारंभुंक्त्वाअभुक्त्वावा ईषद्धौतंन

१ व्यासः—भुक्त्वासमुद्वहेत्कन्यासावित्रीग्रहणतथा । उपोषित.सुतांदद्यादर्चितायद्विजायतु । गंधर्वासुरयोरेवभुक्त्वैवपरिदीयते । ब्राह्मादिपु

वंश्वेतंसदशंपरेणाधृतंवस्त्रयुगुलंधृत्वालंकृतःस्रग्वीष्टदेवताःपित्रादींश्चनमस्कृत्यतैरनुमोदितोयथाविभवमश्वादियानमारुह्यधृतसितच्छत्रःस्वार्चितैर्ज्ञातिबांधवैः कनिक्रदज्जनुपमितिसुमंगलसूक्तपठनपरैर्ब्राह्मणैःपुरंध्रीभिःपूर्णकलशदर्पणकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मंगलगीततूर्यैश्चसहवधूगृहंगत्वातद्द्वारदेशेप्राङ्मुखस्थितो नीराजनपूर्णकुंभयुतैःपुरंध्रीजनैःप्रत्युद्यातोनीराजितोंतर्गृहंप्रविश्यतदंगणेमंडपाधःसोत्तरच्छदेहरितदर्भास्तीर्णेचतुष्पादभद्रपीठेप्राङ्मुखउपविशेत् ॥ ॥ ॥

अथमधुपर्कः ॥ ॥ तत्रकन्यादातावरस्यपुरतः सुस्नातामलंकृतामहतवाससंगंधादिलिप्तांगींस्रग्विणींभुक्तवतींकन्यांतथाविधासनेप्रत्यङ्मुखीमुपवेश्य तांपुरस्कृत्यसामात्यःसपत्नीकउपविश्यागतायवरायतच्छाखोक्तविधिनामधुपर्ककुर्यात् । तत्रायंक्रमः । पाद्यार्थमर्घ्यार्थंमंत्रवत्त्रिराचमनीयार्थंशुद्धाष्टाचमनीयार्थंचजलपात्रचतुष्टयंमधुयुक्तदध्याख्यंमधुपर्ककांस्यपात्रंगांपंचविंशतिदर्भैरवागग्रवामावर्तेनकृतंविष्टरंचसंपाद्याचम्यप्राणानायम्यदेशकालौस्मृत्वाकन्यार्थिनेगृहागतायास्मैस्नातकायवरायकन्यादानांगभूतंमधुपर्ककरिष्यइति कन्यार्थिनमित्यादिद्वितीयांतमुक्त्वामधुपर्केणार्हयिष्यइतिवा संकल्प्य प्रागुक्तलक्षणंदर्भमयकूर्चविष्टरोविष्टरोविष्टरइतित्रिर्निवेद्यासनार्थवरहस्तेदद्यात् । वरस्तु । अहंवर्ष्मेत्यस्यवामदेवोविष्टरोनुष्टुप् । विष्टरोपवेशनेविनियोगः । ॐ अहंवर्ष्मसजातानांविद्युतामिवसूर्यः । इदंतमधितिष्ठामियोमाकश्चाभिदासति इतिमंत्रेणोदगग्रेविष्टरउप

---

विवाहेपुभोजनंनेतिकश्यपः । कन्यादाननिशीथेचेद्दिवाभोजनमिष्यते । पुनःस्नात्वाजपेद्देवीपिताकन्यांप्रयच्छति । इतिस्मृतिरत्ने । १ विष्टरंचसमैर्दर्भैर्द्वादशांगुलदीर्घकं । चतुरंगुलमग्रंस्याद्ग्रंथिमेकांगुलंतथा । विष्टरेसर्वयज्ञेपुलक्षणंपरिकीर्तितं । स्मृ. र. ।

विशेत् । विष्टरंमंत्रेणपद्भ्यामाक्रम्यवासीत । प्रयोगपारिजातकारादयस्तुसौत्रमंत्रेऋष्यादिस्मरणंनेच्छंति । ततोर्चकेनपाद्यं पाद्यंपाद्यमितित्रिर्निवेदितंपाद्यंवरोगृह्णीयात् । ततोर्चकस्तेनोदकेनवरस्यदक्षिणसव्यपादौक्रमेणक्षालयेत् । ततोवरोलौकिकेन जलेनाचम्य गंधमाल्यजलफलादिसंयुतंपूर्ववत्रिर्निवेदितमर्घ्यमंजलिनाप्रतिगृह्य पूर्वसंपादितशुद्धजलमाचमनीयपात्रंत्रिर्नि वेदितंहस्तेगृहीत्वा भूमौनिधाय तस्यैकदेशंगृहीत्वा अमृतोपस्तरणमसीतिपीत्वा लौकिकजलेनाचम्यानीयमानंमधुपर्कं मित्र स्यत्वाचक्षुषाप्रतीक्ष इत्यवेक्ष्य मधुपर्कोमधुपर्कोमधुपर्कइतित्रिर्दात्रानिवेदितंमधुपर्कं देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपू ष्णोहस्ताभ्यांप्रतिगृह्णामीतिमंत्रेणांजलिनाप्रतिगृह्यांजलिस्थमेवमधुवाताइतितृचेनावेक्षयेत् । मधुवाताइतितृचस्यराहूगणो गोतमोविश्वेदेवागायत्री । मधुपर्कावेक्षणेवि० । ॐ मधुवाताऋतायतेमधुंक्षरंतिसिंधवः । माध्वीर्नःसंत्वोषधीः । मधुनक्तमु तोपसोमधुमत्पार्थिवंरजः । मधुद्यौरस्तुनःपिता । मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः । माध्वीर्गावोभवंतुनः । इतितृचेन तत्पात्रंसव्यहस्तेगृहीत्वांगुष्ठोपकनिष्ठिकाभ्यांमधुपर्कंत्रिःप्रदक्षिणमालोड्यांगुलिगतंमधुपर्कलेपं वसवस्त्वागायत्रेणच्छंदसाभ क्षयंत्वितिपुरस्तान्निक्षिपेत् । एवंरुद्रास्त्वात्रैष्टुभेनच्छंदसाभक्षयंत्वितिदक्षिणतः । आदित्यास्त्वाजागतेनच्छंदसाभक्षयंत्वि तिपश्चात् । विश्वेत्वादेवाआनुष्टुभेनच्छंदसाभक्षयंत्वित्युत्तरतःक्षिप्त्वा भूतेभ्यस्त्वेतित्रिरावृत्तेनमंत्रेणमध्यात्किंचिद्गृहीत्वात्रि रूर्ध्वंक्षिप्त्वामधुपर्कपात्रंभूमौनिधाय मधुपर्कैकदेशंगृहीत्वा विराजोदोहोसि इतिप्राश्य लौकिकोदकेनाचम्य पुनर्गृहीत्वा विरा

१ अत्रांगुलिगतलेपस्यैवचतुर्दिक्षुप्रक्षेपोनपुन.पुनर्ग्रहण । त्रिरूर्ध्वक्षेपणेतुपुन पुनर्ग्रहणमितिव्यवस्था ।

जोदोहमशीय इतिप्राश्य पूर्ववदाचम्य पुनर्गृहीत्वा मयिदोहःपद्यायैविराज इतिप्राश्य पूर्ववदाचम्य मधुपर्कशेषमुदगुपवि
ष्टायप्रयच्छेत् । लोकविद्विष्टत्वादप्सुवानिक्षिप्य पूर्वनिवेदिताचमनीयैकदेशं अमृतापिधानमसि इतिपीत्वालौकिकोदकेना
चम्याचमनीयजलशेषंसर्वगृहीत्वा सत्यंयशःश्रीर्मयिश्रीःश्रयतां इतिप्राश्यलौकिकोदकेनद्विराचामेत् । ततोदात्रागौर्गौर्गौ
रितित्रिर्निवेदितांगां मातारुद्राणामित्यस्यभार्गवोजमदग्निर्गौस्त्रिष्टुप् । गोरुत्सर्जनेवि० । ॐ मातारुद्राणांदुहितावसूनांस्व
सादित्यानाममृतस्यनाभिः । प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट इतिमंत्रंजपित्वा । ॐउत्सृजतेत्युक्त्वा
विसृजेत् । ततोदातागंधमाल्यवस्त्रयुगोपवीतयुगाभरणादिभिर्यथाविभवंवरंपूजयेत् । ततोवरेणसहागतांस्तद्बंधूनपिपूज
येत् ॥ ॥ अथविष्टरलक्षणंपरिशिष्टे—पंचाशताभवेद्ब्रह्मातदर्धेनतुविष्टरः । ऊर्ध्वकेशोभवेद्ब्रह्मालंबकेशस्तुविष्टरः । दक्षि
णावर्तकोब्रह्मावामावर्तस्तुविष्टरइति । यद्वा—पंचविंशतिदर्भाणांवेण्यग्रेग्रंथिभूषितः । विष्टरःसर्वयज्ञेषुलक्षणंपरिकीर्तितम् ।
मधुपर्केदध्यलाभेपयोजलंवाप्रतिनिधिः मध्वलाभेघृतंगुडोवा । वरशाखयामधुपर्कदानमुक्तंगृह्यपरिशिष्टे—वरस्ययाभवे
च्छाखातच्छाखागृह्यचोदितः । मधुपर्कःप्रदातव्योह्यन्यशाखेपिदातरीतिमधुपर्कः ॥ ॥ ॥
अथकन्यास्नातापरिहिताहतवस्त्रागृहांतःसूत्रवेष्टितोपलसहितदृषदुपरिहरिद्रानिर्मितांगौरीहरौसौभाग्यादिकामनयापूजयि
त्वा इंद्राणींचतत्रैवाक्षतपुंजेपूजयित्वाप्रार्थयेत्—देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि । विवाहंभाग्यमारोग्यंपुत्रलाभंचदे
हिमेइति । ततोगौरींसौभाग्यादिप्रार्थयमानातत्रैवतिष्ठेत् । अथकन्यादानाद्यर्थजलशुद्धिः । पुरोधावरदक्षिणतउदङ्मुख

उपविश्यमध्येप्रागग्रानुदगग्रान्वादर्भानास्तीर्यतेषुतैजसंशुद्धतीर्थादिजलपूर्णकलशंनिधायव्रीहियवानोप्यगंधपुष्पादिभिरलंकृ
त्यदूर्वापल्लवैर्मुखमवस्तीर्याब्लिंगाभिर्ऋग्भिरभिमंत्रयेत् ।अथकन्यादानादि। ब्राह्मणाःस्वलंकृतेवेश्मनिसुमंगलगीततूर्यादिनिर्घो
षेक्रियमाणेपूर्वापरभागयोर्हस्तांतरालंविहायप्रत्येकंप्रस्थमितसिततंडुलैर्द्वौराशीकृत्वामध्येकुंकुमादिकृतस्वस्तिकांकितमंतःपटं
राश्योर्मध्येउत्तरदशंधारयेयुः । अथपूर्वराशौप्रत्यङ्मुखंवरंपश्चिमराशौप्राङ्मुखींकन्यांतंडुलगुडजीरकयुतांजलीउभाववस्था
प्य द्विजाःसत्येनोत्तभितेतिसूक्तंपठेयुः । तच्चसूक्तम् । ॐ सत्येनोत्तभिताभूमिःसूर्येणोत्तभिताद्यौः । ऋतेनादित्यास्तिष्ठंति
दिविसोमोअधिश्रितः । सोमेनादित्याबलिनःसोमेनपृथिवीमही । अथोनक्षत्राणामेषामुपस्थेसोमआहितः । सोमंमन्यतेप
पिवान्यत्संपिंषंत्योषधिम् । सोमंयंब्रह्माणोविदुर्नतस्याश्नातिकश्चन । आच्छद्विधानैर्गुपितोवार्हतैःसोमरक्षितः । ग्राव्णामि
च्छृण्वन्तिष्ठसिनतेअश्नातिपार्थिवः। यत्त्वादेवप्रपिबंतिततआप्यायसेपुनः । वायुःसोमस्यरक्षितासमानांमासआकृतिः ॥ १ ॥
रैभ्यासीदनुदेयीनाराशंसीन्योचनी । सूर्यायाभद्रमिद्वासोगाथयैतिपरिष्कृतम् । चित्तिराउपबर्हणंचक्षुराअभ्यंजनम् । द्यौर्भू
मिःकोशआसीद्यदयात्सूर्यापतिम् । स्तोमाआसन्प्रतिधयःकुरीरंछंदओपशः । सूर्यायाअश्विनावराग्निरासीत्पुरोगवः ।
सोमोवधूयुरभवदश्विनास्तामुभावरा । सूर्यायत्पत्येशंसंतींमनसासवितादददात् । मनोअस्याअनआसीद्यौरासीदुतच्छदिः ।
शुक्रावनड्वाहावास्तांयदयात्सूर्यागृहम् ॥ २ ॥ ऋक्सामाभ्यामभिहितौगावौतेसामनावितः । श्रोत्रंतेचक्रेआस्तांदिविपंथा
श्चराचरः । शुचीतेचक्रेयात्याव्यानोअक्षआहतः । अनोमनस्मयंसूर्यारोहत्प्रयतीपतिम् । सूर्यायावहतुःप्रागात्सवितायमवा

सृजत् । अघासुहन्यंतेगावोर्जुन्योःपर्युह्यते । यदश्विनापृच्छमानावयातंत्रिचक्रेणवहतुंसूर्यायाः । विश्वेदेवाअनुतद्वामजान
न्पुत्रःपितरावविवृणीतपूषा । यदयातंशुभस्पतीवरेयंसूर्यामुप । क्वैकंचक्रंवामासीत्क्वदेष्ट्रायतस्थथुः ॥ ३ ॥ द्वेतेचक्रेसूर्येब्रह्माण
ऋतुथाविदुः । अथैकंचक्रंयद्गुहातदद्धातयइद्विदुः । सूर्यायैदेवेभ्योमित्रायवरुणायच । येभूतस्यप्रचेतसइदंतेभ्योकरंनमः ।
पूर्वापरंचरतोमाययैतौशिशूक्रीळंतौपरियातोअध्वरम् । विश्वान्यन्योभुवनाभिचष्टऋतूँरन्योविदधज्जायतेपुनः । नवोनवो
भवतिजायमानोह्नांकेतुरुषसामेत्यग्रम् । भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः । सुकिंशुकंशल्मलिंविश्वरूपं
हिरण्यवर्णंसुवृतंसुचक्रम् । आरोहसूर्येअमृतस्यलोकंस्योनंपत्येवहतुंकृणुष्व ॥ ४ ॥ उदीर्ष्वातःपतिवतीह्येषाविश्वावसुंनम
सागीर्भिरीळे । अन्यामिच्छपितृषदंव्यक्तांसतेभागोजनुषातस्यविद्धि । उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा । अन्यामिच्छ
प्रफर्व्यं१संजायांपत्यासृज । अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं । समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयम
मस्तुदेवाः । प्रत्वामुंचामिवरुणस्यपाशाद्येनत्वाबध्नात्सवितासुशेवः । ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ।
प्रेतोमुंचामिनामुतःसुबद्धाममुतस्करम् । यथेयमिंद्रमीढ्वःसुपुत्रासुभगासति ॥ ५ ॥ पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रव
हतांरथेन । गृहान्गच्छगृहपत्नीयथासोवशिनीत्वंविदथमावदासि । इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि ।
एनापत्यातन्वं१संसृजस्वाधाजिव्रीविदथमावदाथः । नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते । एधंतेअस्याज्ञातयःपतिर्बंधेषु
बध्यते । परादेहिशामुल्यंब्रह्मभ्योविभजावसु । कृत्यैषापद्वतीभूत्व्याजायाविशतेपतिम् । अश्रीरातनूर्भवतिरुशतीपापया

मुया । पतिर्यद्बध्वो३वासंसास्वमंगमभिधित्सते ॥ ६ ॥ येवध्वश्चंद्रंवहतुंयक्ष्मायंतिजनादनु । पुनस्तान्यज्ञियादेवानयंतुय
तआगताः । माविदन्परिपंथिनोयआसीदंतिदंपती । सुगेभिर्दुर्गमतीतामपद्रांत्वरातयः । सुमंगलीरियंवधूरिमांसमेतपश्यत ।
सौभाग्यमस्यैदत्वायाथास्तंविपरेतन । तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे । सूर्यायोब्रह्माविद्यात्सइद्वाधूयमर्हति ।
आशसनंविशसनमथोअधिविकर्तनम् । सूर्यायाःपश्यरूपाणितानिब्रह्मातुशुंधति ॥ ७ ॥ गृभ्णामितेसौभगत्वायहस्तंमयाप
त्याजरदष्टिर्यथासः । भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः । तांपूषन्छिवतमामेरयस्वयस्यांबीजंमनुष्या३व
पंति । यानऊरूउशतीविश्रयातियस्यामुशंतःप्रहरामशेपम् । तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह । पुनःपतिभ्योजायांदाअग्नेप्र
जयासह । पुनःपत्नीमग्निरदादायुषासहवर्चसा । दीर्घायुरस्यायःपतिर्जीवातिशरदःशतम् । सोमःप्रथमोविविदेगंधर्वोवि
विदउत्तरः । तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥ ८ ॥ सोमोददद्गंधर्वायगंधर्वोददद्ग्नये । रयिंचपुत्रांश्चादादग्निर्मह्य
मथोइमाम् । इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतम् । क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे । आनःप्रजांजनयतुप्रजापतिराज
रसायसमनक्त्वर्यमा । अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे । अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाः
सुवर्चाः । वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे । इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु । दशास्यांपुत्रानाधेहिपति
मेकादशंकृधि । सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव । ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु । समंजंतुविश्वेदेवाःसमापो
हृदयानिनौ । संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ । ततःपुरंध्र्योमंगलगीतीःकुर्युः । वधूवरौमनसेष्टदेवतांध्यायंतौसमा

हितौतिष्ठेताम् । अथज्यौतिषिकेनमंगलपद्यपाठपूर्वकंसुमुहूर्तोस्तुतदेवलग्नमितिपठितेप्रदिष्टेकालेसद्योंतःपटमुदगपसार्यकन्या वराभ्यापरस्परंनिरीक्षणंचकारणीयम् । तदावरः । अभ्रातृघ्नींवरुणापतिघ्नींबृहस्पते । इंद्रापुत्रघ्नींलक्ष्म्यंतामस्यैसवितुःसवे तिजपन्वीक्षेत । ॐ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः । वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे । इतिकन्ययावेक्ष्यमाणोजपित्वादर्भाग्रेणतस्याभ्रुवोर्मध्यं ॐ भूर्भुवःस्वरितिव्याहृतिभिःपरिमृज्य दर्भंनिरस्यापउपस्पृशेत् । ततस्त्रिवारंपंचवारंवापरस्परंशिरसिऋक्चवाइत्यादिखंडांतेवधूपूर्वकमंजलिस्थपीताक्षतारोपणंकारणीयमाचारात्॥ ॥ तद्यथा। ॐ ऋक्चवाइदमग्रेसामचास्तांसैवनामऋगासीदमोनामसामसावाऋक्सामोपावदन्मिथुनंसंभवावप्रजात्याइतिनेत्यब्रवीत्साम ज्यायान्वाअतोममहिमेतितेद्वेभूत्वोपावदतांतेनप्रतिचनसमवदतताास्तिस्रोभूत्वोपावदंस्तत्तिसृभिःसमभवद्यत्तिसृभिःसमभ वत्तस्मात्तिसृभिःस्तुवंतितिसृभिरुद्गायंतितिसृभिर्हिसामसंमितंतस्मादेकस्यबह्व्योजायाभवंतिनैकस्यैबहवःसहपतयोयद्वैतत्सा चामश्चसमभवतांतत्सामाभवत्तत्साम्नःसामत्वंसामन्भवतियएवंवेदयोवैभवतियःश्रेष्ठतामश्नुतेससामन्भवत्यसामन्यइतिहि निंदंतितेवैपंचान्यद्भूत्वापंचान्यद्भूत्वाकल्पेतामाहावश्चहिंकारश्चप्रस्तावश्चप्रथमाचऋगुद्गीथश्चमध्यमाचप्रतिहारश्चोत्तमाचनि धनंचवषट्कारश्चतेयत्पंचान्यद्भूत्वापंचान्यद्भूत्वाकल्पेतांतस्मादाहुःपांक्तोयज्ञःपांक्ताःपशवइतियदुविराजंदशिनीमभिसमप द्येतांतस्मादाहुर्विराजियज्ञोदशिन्यांप्रतिष्ठितइत्यात्मावैस्तोत्रियःप्रजानुरूपःपत्नीधाय्यापशवःप्रगाथोगृहाःसूक्तंसवाअस्मिंश्च लोकेमुष्मिंश्चप्रजयाचपशुभिश्चगृहेषुवसतियएवंवेद ॥ १ ॥ स्तोत्रियंशंसत्यात्मावैस्तोत्रियस्तंमध्यमयावाचाशंसत्यात्मानमेवत

त्संस्कुरुतेनुरूपंशंसतिप्रजावाअनुरूपःसउच्चैस्तरामिवानुरूपःशंस्तव्यःप्रजामेवतच्छ्रेयसीमात्मनःकुरुतेधाय्यांशंसतिपत्नीवैधा
य्यासानीचैस्तरामिवधाय्याशंस्तव्याप्रतिवादिनीहास्यगृहेषुपत्नीभवतियत्रैवंविद्वान्नीचैस्तरांधाय्यांशंसतिप्रगाथंशंसतिसस्वर
वत्यावाचाशंस्तव्यःपशवोवैस्वरःपशवःप्रगाथःपशूनामवरुध्याइंद्रस्यनुवीर्याणिप्रवोचमितिसूक्तंशंसतितद्वाएतत्प्रियमिंद्रस्यसू
क्तंनिष्केवल्यंहैरण्यस्तूपमेतेनवैसूक्तेनहिरण्यस्तूपआंगिरसइंद्रस्यप्रियंधामोपागच्छत्सपरमंलोकमजयदुपेंद्रस्यप्रियंधामगच्छ
तिजयतिपरमंलोकंयएवंवेदगृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिग
मिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ २ ॥ उत्तमाप्रतिष्ठातद्दैवंक्षत्रंसाश्रीस्तदाधिपत्यंतद्ब्रध्नस्यविष्टपंतत्प्रजापतेरायतनंतत्स्वा
राज्यमृध्नोत्येतमेवैताभिरेकविंशत्यैकविंशत्या ॥ ३ ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयति
पुण्यांलक्ष्मींसंस्कुरुते ॥ ४ ॥ यच्चावांचोद्यावापृथिवीयंशंसतिद्यावापृथिवीवैप्रतिष्ठेइयमेवेहप्रतिष्ठासावमुत्रतद्यद्द्यावापृथिवी
यंशंसतिप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयति ॥ ५ ॥ द्वंद्वमिंद्रेणदेवताःशस्यंतेद्वंद्वंवैमिथुनंतस्माद्द्वंद्वान्मिथुनंप्रजायतेप्रजात्यैप्रजा
यतेप्रजयापशुभिर्यएवंवेदाथहैतेपोत्रीयाश्चनेष्ट्रीयाश्चचत्वारऋतुयाजाःषळृचःसाविराड्दशिनीतद्विराजियज्ञंदशिन्यांप्रतिष्ठाप
यंतिप्रतिष्ठापयंति ॥ ६ ॥ महीद्यौःपृथिवीचनस्तेहिद्यावापृथिवीविश्वशंभुवेतिद्यावापृथिवीयेशंसतिद्यावापृथिवीवैप्रतिष्ठेइय
मेवेहप्रतिष्ठासावमुत्रतद्यद्द्यावापृथिवीयेशंसतिप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयति ॥ ७ ॥ धारयन्धारयन्निर्तिशंसतिप्रस्त्रंसाद्वा
अंतस्यविभायतद्यथापुनराग्रंथंपुनर्निग्रंथमंतंबध्नीयान्मयूखंवांततोधारणायनिहन्यात्तादृक्तद्यद्धारयन्धारयन्निर्तिशंसतिसंत

त्यैसंततैर्ह्यहैरव्यवच्छिन्नैर्यतियएवंद्वांसोयंतियंति ॥ ८ ॥ दक्षिणाअनुसुब्रह्मण्यासंतिष्ठतेवाग्वैसुब्रह्मण्यान्नंदक्षिणान्ना द्यएवतद्वाचियज्ञमंततःप्रतिष्ठापयंतिप्रतिष्ठापयंति ॥ ९ ॥ हिरण्यकशिपावासीनआचष्टेहिरण्यकशिपावासीनप्रतिगृणाति यशोवैहिरण्यंयशसैवैनंतत्समर्धयत्योमित्यृचःप्रतिगरएवतथेतियथायाऽओमितिवैदैवंतथेतिमानुषंदैवेनचैवैनंतन्मानुषेणचपा पादेनसःप्रमुंचतितस्माद्योराजाविजितीस्यादप्ययजमानआख्यापयेतैवैतच्छौनःशेपमाख्यानंनहास्मिन्नल्पंचनैनःपरिशिष्यते सहस्रमाख्यात्रेदद्याच्छतंप्रतिगरित्रएतेचैवासनेश्वेतश्चाश्वतरीरथोहोतुःपुत्रकामाहाप्याख्यापयेरंल्लभंतेहपुत्रान्लभंतेहपुत्रान्
॥ १० ॥ देवसवितर्देवयजनंमेदेहिदेवयज्यायाऽइतिदेवयजनंयाचतिसयत्तत्रयाचितउत्तरांसर्पत्योंतथाददामीतिहैवतदाहत स्यहनकाचनरिष्टिर्भवतिदेवेनसवित्राप्रसूतस्योत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यंयएवमुत्थाययाचित्वादे वयजनमध्यवसायदीक्षतेक्षत्रियःसन् ॥ ११ ॥ तेऽएतेऽअभ्यनूच्येतेअग्नेर्गायत्र्यभवत्सयुग्वेतिकल्पतेहवाअस्मैयोगक्षेमउत्त रोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यम् ॥ १२ ॥ साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमा धिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ १३ ॥ ध्रुवाद्यौर्ध्रुवापृ थिवीध्रुवासःपर्वताइमे । ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयम् । ध्रुवंतेराजावरुणोध्रुवंदेवोबृहस्पतिः । ध्रुवंतइंद्रश्चाग्निश्च राष्ट्रंधारयतांध्रुवम् । तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् । अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसाद नाय । इत्यादिखंडानिपठेयुः । ततः अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयम् । समर्यमासंभगोनोनिनीयात्संजा

स्पत्यंसुयमंमस्तुदेवाः । इति । ततोवरंप्राङ्मुखंवधूंप्रत्यङ्मुखींचकृत्वापित्रादिर्दातावरदत्तवस्त्रादिरहितांस्वदेयाभरणाद्यलंकृतांवधूवस्त्रसंज्ञकाहतवस्त्रपरिधानांउक्तस्वस्त्ययनायवरायदद्यात् । तत्रायंक्रमः । दातावधूवरदक्षिणतःस्वदक्षिणहस्तदेशस्थपत्नीसहितउदङ्मुखउपविश्यबद्धशिखःशुचिराचम्यकुशपाणिःप्राणानायम्यदेशकालावनुकीर्त्य ममसमस्तपितॄणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तयेअनेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान्द्वादशपरान्पुरुषांश्चपवित्रीकर्तुमात्मनश्चलक्ष्मीनारायणप्रीतयेब्राह्मविवाहविधिनाकन्यादानमहंकरिष्येइतिकुशाक्षतयुतजलेनसंकल्प्य सपत्नीकउत्थायोदङ्मुखएवकन्यांसंप्रगृह्य । कन्यां[1]कनकसंपन्नांकनकाभरणैर्युताम् । दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया । विश्वंभरःसर्वभूताःसाक्षिण्यःसर्वदेवताः । इमांकन्यांप्रदास्यामिपितॄणांतारणायचेतिमंत्रौपठित्वा स्वदक्षिणस्थभार्यादत्तपूर्वकल्पितजलधारामविच्छिन्नांनवकांस्यपात्रोपरिधृतकन्यांजल्युपरिस्थवरांजलिंदक्षिणहस्तेक्षिपन्वदेत् । कन्यातारयतु । पुण्यंवर्धतां । शिवाआपःसंतु । सौमनस्यमस्तु । अक्षतंचारिष्टंचास्तु । दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु । यच्छ्रेयस्तदस्तु । यत्पापंतत्प्रतिहतमस्तु । पुण्याहंभवंतोब्रुवंतु । स्वस्तिभवंतोब्रुवंतु । ऋद्धिंभवंतोब्रुवंतु । श्रीरस्त्वितिभवंतोब्रुवंतु । अमुकगो

---

१ कन्यादानेविशेष.—कन्यांकनकसंपन्नामित्युक्तेःकन्याहस्तेदानसमयेकिंचिद्धिरण्यदेयं । तदाहहरिहर —दशसौवर्णिकंशृंगेखुराःपंचपलान्विता । वस्त्रंचत्रिगुणधेन्वादक्षिणाचचतुर्गुणाइति । जाबालेनचकन्यादानभूदानगोदानानांसाम्यत्वेनाभिधानाद्धर्मसाम्यमायाति । कइदंकस्माअदादित्यस्मिन्सूत्रेवृत्तिकारेणापिगोदानस्यकन्यादानसाम्यकथनात् । तेनदशसौवर्णिकेत्यादिद्रव्यसाहित्येनैवकन्यादानस्यसालंकृतत्वसिद्धिरितिहरिहरः ।

त्रोमुकशर्माहंममसमस्तेत्यादिप्रीतयेइत्यंतंपूर्वोक्तमुक्त्वा अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपु त्रायामुकशर्मणेश्रीधररूपिणेवराय अमुकप्रवरोपेताममुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्यपुत्रीममुकनाम्नींकन्या श्रीरूपिणींप्रजापतिदैवत्यांप्रजोत्पादनार्थंतुभ्यमहंसंप्रददेनमम कन्यांप्रतिगृह्णातुभवान् इतिवरहस्तेसकुशाक्षतजलंक्षिपन्प्रजा पतिःप्रीयतामितिमनसास्मरेत्। कन्यादानेनममेतिनवाच्यमितिकेचित्। एवंवारत्रयंकन्यातारयत्वित्यादिकन्यादानंकार्यमि तिशौनकआह। वरः ॐ स्वस्तीत्युक्त्वाकन्यायादक्षिणांसमभिमृश्य। कइदंकस्माअदात्कामःकामायादात्कामोदाताकामःप्रति ग्रहीताकामंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिकामैतत्तेवृष्टिरसिद्यौस्त्वाददातुपृथिवीप्रतिगृह्णातुइतिजपित्वा धर्मप्रजासिद्ध्य र्थंकन्यांप्रतिगृह्णामीतिवदेत्। दाता। गौरींकन्यामिमांविप्रयथाशक्तिविभूषिताम्। गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय। कन्येममग्रतोभूयाःकन्येमेदेविपार्श्वयोः। कन्येमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम्। ममवंशकुलेजातापालितावत्सरा ष्टकम्। तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी। न्यूनवयस्कायांपालितासप्तवर्षकमित्याद्यूहःकार्यः। धर्मेचार्थेचकामेच नाति चरितव्यात्वयेयम्। नातिचरामीतिवरः। दातादेशकालौस्मृत्वाकृतस्यकन्यादानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांतुभ्यमहं संप्रददेइतिसजलंयथाशक्तिसुवर्णदानंदक्षिणात्वेनवरहस्तेदत्वानममेतिवदेत्। ॐ स्वस्तीतिवरः। ततोदाताजलभाजनभो जनभाजनगोमहिष्यश्वदासीदासभूवाहनालंकारादियथाविभवंसंकल्पपूर्वकंवरायदद्यात्। तत्रमंत्राः—यज्ञसाधनभूताया विश्वस्याघप्रणाशिनी। विश्वरूपधरोदेवःप्रीयतामनयागवा। इतिगोः। सर्वसस्याश्रयाभूमिर्वराहेणसमुद्धृता। अनंतसस्य

फलदाअतःशांतिंप्रयच्छमे । इतिभूमेः । इयंदासीमयातुभ्यंश्रीवत्सप्रतिपादिता । सदाकर्मकरीभोग्यायथेष्टंभद्रमस्तुते । इतिदास्याः । अशून्यंशयनंनित्यमनूनांश्रियमुन्नतिम् । सौभाग्यंदेहिमेनित्यंशय्यादानेनकेशव । इतिशय्यायाः । हिरण्यगर्भसंभूतंसौवर्णचांगुलीयकम् । सर्वप्रदंप्रयच्छामिप्रीणातुकमलापतिः । इत्यंगुलीयकस्य । क्षीरोदमथनेपूर्वमुद्धृतंकुंडलद्वयम् । श्रियासहसमुद्भूतंददेश्रीःप्रीयतामिति । इतिकुंडलयोः । इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतम् । तवविप्रप्रसादेनमामस्त्वभिमतंफलम् । इतिगृहस्य । इंद्रादिलोकपालानांयाराज्यमहिषीशुभा । महिषासुरस्यजननीसास्तुमेसर्वकामदा । इतिमहिष्याः । परापवादपैशून्यादभक्ष्यस्यचभक्षणात् । उत्पन्नपापंदानेनताम्रपात्रस्यनश्यतु । इतिताम्रपात्रस्य । यानिपापान्यनेकानिकामोत्थानिकृतानिच । कांस्यपात्रप्रदानेनतानिनश्यंतुमेसदा । इतिकांस्यपात्रस्य । अगम्यागमनंचैवपरदाराभिमर्शनम् । रौप्यपात्रप्रदानेननश्यंत्वस्यचसर्वदा । इतिरौप्यपात्रस्य । देवदेवनमस्तुभ्यंसहस्रार्कसमद्युते । दीप्तदीपप्रदानेनसमेविष्णुःप्रसीदतु । इतिदीपस्य ॥ ॥ अथवरः । यत्कक्षीवांसंवननोविश्वेदेवाअनुष्टुप् । वधूकुक्ष्यभिमर्शनेवि० । ॐ यत्कक्षीवांसंवननंपुत्रोअंगिरसाभवेत् । तेननोद्यविश्वेदेवाःसंप्रियांसमजीजनन् । इत्यनेनकन्याकुक्षिमभिमृशेत् । अथपुरोधाः । कांस्यपात्रेपूर्वार्चितकलशजलमासिच्य । अनाधृष्टमित्यस्यवामदेवआपोबृहती । उदकाभिमंत्रणेविनि० । ॐ अनाधृष्टमस्यनाधृष्यंदेवानामोजोऽभिशस्तिपाः । अनभिशस्त्यंजसासत्यमुपगेषंस्वितेमाधाः । इतिजलमभिमंत्र्यसहिरण्यपवित्रयासकुशदूर्वापल्लवयौदुंबर्यार्द्रयाशाखयावधूवरावभिषिंचेत् । तत्रमंत्राः । आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्री ।

आद्याजगतीद्वितीयात्रिष्टुप्अंत्येद्वेअनुष्टुभौ । अभिषेकेवि० । ॐ आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ।
अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे । अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः । वीरसूर्देवका
मास्योनाशंनोभवद्विपदेशंचतुष्पदे । इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु । दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि । सम्राज्ञी
श्वशुरेभवसम्राज्ञीश्वश्र्वांभव । ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ ४ ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ।
अभिषे० । ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभोरराद्रताआपोदेवीरिहमामवंतु ।
याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु । यासांराजा
वरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां । मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु । यासुराजावरुणोयासुसो
मोविश्वेदेवायासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ ४ ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधु
द्वीपआपोगायत्री । अभिषे० । ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणायचक्षसे । योवःशिवतमोरसस्तस्यभाजयते
हनः । उशतीरिवमातरः । तस्माअरंगमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः । वरएवोदकाभिमंत्रणकन्याभिषेकौ
कुर्यादितिकश्चित् । ततोदुग्धाक्तेनद्विगुणशुक्लसूत्रेण दंपतीकंठदेशेकटिदेशेचैशानीमारभ्यपंचवारंचतुर्वारंवाप्रदक्षिणंवेष्टयेत्
पुरोधाएतैर्मंत्रैः । ॐ परित्वागिर्वणोगिरइमाभवंतुविश्वतः । वृद्धायुमनुवृद्धयोजुष्टाभवंतुजुष्टयः । तान्वोमहोमरुतएववया
नोविष्णोरेषस्यप्रभृथेहवामहे । हिरण्यवर्णान्ककुहान्यतस्रुचोब्रह्मण्यंतःशंस्यंराधईमहे । दशावनिभ्योदशकक्ष्येभ्योदशयो

क्रेभ्योदशयोजनेभ्यः । दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः । तेअद्रयोदशयंत्रासआशवस्तेषामाधानं पर्येतिहर्यतं । तऊसुतस्यसोम्यस्यांधसोंशोःपीयूषंप्रथमस्यभेजिरे । तेसोमादोहरीइंद्रस्यानिंसतेंशुंदुहंतोअध्यासतेगवि । तेभिर्दुग्धंपपिवान्त्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषायते । वृषावोअंशुर्नकिलारिषाथनेळावंतःसदमित्स्थनाशिताः । रैवत्येवमहसाचारवस्थनयस्यग्रावाणोअजुषध्वमध्वरम् ॥ ६ ॥ ततःकंठदेशस्थसूत्रमधोनिष्काश्यकुंकुमाक्तमूर्णायुतंचकृत्वातेनहरिद्राखंडंबध्वातद्वधूवामहस्तप्रकोष्ठेवरोवध्नीयात् । ॐनीललोहितंभवतिकृत्यासक्तिर्व्यज्यते । एधंतेअस्याज्ञातयःपतिर्बंधेषुबध्यते । इतिमंत्रेण । कटिदेशस्थसूत्रमुपरिनिष्काश्यतादृशंकृत्वावरहस्तप्रकोष्ठेवधूर्बध्नीयात् । यद्वासूत्रवेष्टनाद्यकृत्वैवपूर्वसंपादितकौतुकसूत्रद्वयमध्येएकंसूत्रंपुरोधसा । ॐ विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते । पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे । इतिमंत्रेपठितेकन्यावरस्यदक्षिणहस्तेबध्नीयात् । वरोप्यपरंसूत्रंतथैवकन्यायावामहस्ते । यदिसूत्रवेष्टनंक्रियतेतदातत्सूत्रबंधनमेव । कौतुकसूत्रसंपादनंतुपूर्वोक्तंनकार्यम् । ततः । अग्नेविश्वेभिर्वीतहव्योग्निस्त्रिष्टुप् । ऊर्णास्तुकबंधने० । ॐअग्नेविश्वेभिःस्वनीकदेवैरूर्णावंतंप्रथमःसीदयोनिम् । कुलायिनंघृतवंतंसवित्रेयज्ञंनययजमानायसाधु । इतिमंत्रेणवरोवध्वा दक्षिणोत्तरकेशपक्षयोःक्रमेणमंत्रावृत्त्याऊर्णादशांबध्नीयात् । ऊर्णास्तुकबंधनमाचारतःकृताकृतम् । शिखेविमुंचतियदिकृतेभवतइत्यग्रेसूत्रनिर्देशात् । अथवधूवरावायुर्वर्धनकरमक्षतारोपणंकुर्याताम् । तद्यथा । तैजसपात्रेगव्यक्षीरेघृतमासिच्यपात्रांतरेणार्द्रानक्षतशुक्लशालितंडुलानादायवरःक्षालितपाणिःप्रक्षालितवध्वंजलौक्षीरघृतंस्वहस्तद्वयांगुलिभिर्द्वि

रुपस्तीर्यद्विवारंतथैवतंडुलानोप्यतथैवद्भिरभिघारयेत् । ततोवरांजलावप्येवमेवदात्रान्येनवापूरितेदातातदंजल्योःसुवर्णनिधायवरांजलिंकन्यांजल्युपरिनिधाय । कन्यातारयतु । दक्षिणाःपांतु । बहुदेयंचास्तु । पुण्यंवर्धतां । शांतिःपुष्टिस्तुष्टिश्चास्तु । तिथिकरणमुहूर्तनक्षत्रसंपदस्त्वित्युच्चार्य कन्यामुद्धृत्यतयांजलिस्थानक्षतान्भगोमेकामःसमृद्ध्यतामितिवरमूर्धन्यारोपयेत् । ततोवरःस्वांजलिस्थान्यज्ञोमेकामःसमृध्यतामितिकन्याशिरसिक्षिपेत् । एवंपुनर्द्विवारंकार्यम् । तत्रद्वितीये श्रियोमेकामःसमृध्यतामितिवधूः । धर्मोमेकामःसमृध्यतामितिवरः । तृतीयेप्रजामेकामःसमृद्ध्यतामितिवधूः । यशोमेकामःसमृध्यतामितिवरः । ततःकन्यावरांजलिंद्विरुपस्तीर्यद्विस्तंडुलैरापूर्यद्विरभिघारयेत् । ततोदात्रान्येनवापूर्ववत्कन्यांजलावापूरितेदातापूर्ववद्धिरण्यंनिधायकन्यांजलिंवरांजलौनिधायपूर्ववत्कन्यातारयत्वित्यादिवाक्यषट्कंवदेत् । ततोवरः यज्ञोमेकामःसमृध्यतामितिकन्यामूर्धन्यक्षतान्क्षिपेत् । कन्यातुभगोमेकामःसमृध्यतामितिवरमूर्धनि । एवंपुनर्द्विवारंकार्यम् । तत्र द्वितीयेधर्मोमेकामःसमृद्ध्यतामितिवरः । श्रियोमेकामःसमृद्ध्यतामितिवधूः । तृतीये यशोमेकामःसमृद्ध्यतामितिवरः । प्रजामेकामःसमृद्ध्यतामितिवधूः । अथवरोवध्वंजलिंपूर्ववदापूर्यस्वांजलिमन्येनपूर्ववत्पूरयित्वोभौवधूपूर्वकंतूष्णीमक्षतानारोपयेताम् । एवंसप्तवारमक्षतारोपणंकार्यम् । केचिदक्षतारोपणेभगोमइत्यादिमंत्रान्नेच्छंति । अथवरः स्वशिरःपुष्पमेकंक्षीरघृतेनाप्लाव्यतेनकन्याललाटेतिलकंकुर्यात् । सापिस्वशिरःपुष्पेणतथैववरललाटेतिलकंकृत्वापुष्पमालांवरकंठेनिदध्यात् । वरोपिकन्याकंठे । ततोवरपक्षसुवासिनीवधूवरौप्राङ्मुखावुपवेश्याचारप्राप्तंअष्टपुत्रीसंज्ञकंवस्त्रद्वयंसकंचुकंकृष्णमणिसूत्रयुतंवध्वैसमर्प्यतामेकंपरिधाप्यापरमुत्त

रीयंकुर्यात् । ततोवरस्तत्सूत्रम् । मांगल्यतंतुनानेनममजीवनहेतुना । कंठंबध्नामिसुभगेसाजीवशरदांशतंइतिमंत्रेणेष्टदेवतां
स्मरन्वधूकंठेबध्नीयात् । भूपणैश्चायुष्यंवचस्यमितिसूक्तंपठन्भूषयेत् । तच्चसूक्तम् । ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदम् ।
इदंहिरण्यंवर्चस्वज्जैत्रायाविशतादिमाम् । उच्चैर्वाजिपृतनापाट्सभासाहंधनंजयम् । सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्त्समाहि
ताः । शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ । तेनमांसूर्यत्वचमकरंपूरुषंप्रियम् । सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा । लक्ष्मी
राष्ट्रस्ययामुखेतयामामिंद्रसंसृज । अग्नेःप्रयातंपरियद्धिरण्यममृतंजज्ञेअधिमर्त्येषु । यएनद्वेदसइदेनदर्हतिजरामृत्युर्भवतियो
बिभर्ति ॥ १ ॥ यद्वेदराजावरुणोयद्वुदेवीसरस्वती । इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे । नतद्रक्षांसिनपिशाचास्तरंतिदेवा
नामोजःप्रथमजंह्येतत् । योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः । यदाबध्नंदाक्षाय
णाहिरण्यंशतनीकायसुमनस्यमाना । तन्नआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् । घृतादुल्लुप्तंमधुमत्सुवर्णंधनंज
यंधरुणंधारयिष्णु । ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय । प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु । प्रियंविश्वेषु
गोप्त्रेषुमयिधेहिरुचारुचम् । अग्निर्येनविराजतिसूर्योयेनविराजति । विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधं
कुरु ॥ २ ॥ इतिसूक्तंपठित्वा । ततोहरिद्राखंडयुतानिपंचपंचपूगानिआचाराल्लड्डुकयुतानिपात्रेनिधायतत्रपुरोधाउभाभ्यांग
णपतेरावाहनादिदक्षिणांतोपचारैः । ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमम् । ज्येष्ठराजंब्रह्मणांब्रह्मणस्प
तआनःशृण्वन्नूतिभिःसीदसादनम् । ॐ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय । महाहस्तीदक्षिणेन । इतिमंत्राभ्यांपूजांकार

येत् । ततोब्राह्मणेभ्योवरेणयथाशक्तिगणपतिप्रीतयेदक्षिणादेया । ततःपुरोधास्तानिहरिद्राखंडयुतानिपूगानिदंपत्योरुत्तरी
यांतयोःपृथक्पृथग्विवाहव्रतरक्षकंगणपतिमनुस्मृत्यपूजामंत्राभ्यांवध्नीयात् । वधूवरौविवाहव्रतसमाप्त्यंतंतद्ग्रंथिद्वयंनविसृजे
ताम् । ततःपुरोधाः । नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते । एधंतेअस्याज्ञातयःपतिर्बंधेषुबध्यते । इतिमंत्रेणतयोरुत्तरीयां
तौमिथोबध्नीयात् । ततःसभार्योदातावृद्धाःपुरंध्र्योज्ञातिबांधवाश्चक्रमादाशीर्भिराद्राक्षतारोपणंकुर्युः । ततोदंपतीपात्रस्थसि
ततंडुलपुंजत्रयेउदक्संस्थयामहालक्ष्मींपार्वतींशचींचषोडशोपचारैर्नाममंत्रेणाभ्यर्च्यसौभाग्यादिप्रार्थयेताम् । अथतिथ्यादि
संकीर्त्यचतुर्थदिवसपर्यंतंविवाहव्रतंचरिष्यावहेइतिसंकल्प्यप्रथमदिनेरोहिणीसोमौभूत्वादाक्षायणींचपूजयेताम् । ततोवधूर्ह
रिद्राजीरकादिमंगलद्रव्यपरिपूर्णवंशपात्रेवायनानिसुवासिनीभ्योलक्ष्म्यादिदेवतात्रयप्रीत्यैयथाशक्तिदद्यात् । अथद्विजैरा
शिषोदेयाः । तेचायुःपदांताःषण्मंत्राः । ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभि
र्व्यशेमदेवहितंयदायुः । ॐ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् । द्रविणोदावीरवतीमिषंनोद्रविणोदारास
तेदीर्घमायुः । ॐ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् । सवितानःसुवतुसर्वतातिंसवितानोरास
तांदीर्घमायुः । ॐ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ।
ॐ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण । हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः । ॐ दक्षिणावता
मिदिमानिचित्रादक्षिणावतांदिविसूर्यासः । दक्षिणावंतोअमृतंभजंतेदक्षिणावंतःप्रतिरंतआयुः ॥ ६ ॥ ततोवधूवरौपरस्पर

हस्तधारणेनवहिरंगणस्थांपूर्वोक्तलक्षणांवेदिंमंत्रघोषेणागच्छेताम् । प्रयोगपारिजातेतुगृह्यपरिशिष्टानुसारेणकन्यादानतत्प्र
तिग्रहजवनिकापूर्वकमंत्रवन्निरीक्षणाक्षतारोपणदास्यादिदानपुरोधःकर्तृकाभिषेकपरस्परक्षीरघृततिलककरणमालारोपणपूर्वं
संपादितकौतुकसूत्रवंधनगणपतिपूजनक्रमुकवंधनादीत्ययमनुष्ठानक्रमउक्तःसचदेशाचारवशेनानुसर्तव्यः । अथखलूच्चावचा
जनपदधर्माग्रामधर्माश्चतान्विवाहेप्रतीयादितिसूत्रतःपदार्थस्वरूपइवतत्क्रमेपिसमत्वाद्देशाचारप्रामाण्यस्येतिदिक् ॥ ॥ इ
तिनारायणभट्टकृतेप्रयोगरत्नेकन्यादानप्रयोगः ॥ ॥ ॥ ॥

अथविवाहहोमः ॥ ॥ वरःप्रागुक्तवेदिकायांपीठाद्यासनेप्राङ्मुखउपविश्यपश्चिममार्गेणनियमितवाचंवधूमानीयस्वद
क्षिणतउपवेश्यद्विराचम्यप्राणानायम्यदेशकालौसंकीर्त्यप्रतिगृहीतायामस्यांवध्वांभार्यात्वसिद्धयेगृह्याग्निसिद्धयेचविवाहहोमं
करिष्ये । तदंगंस्थंडिलोल्लेपनाद्यग्निप्रतिष्ठापनांतंकरिष्यइतिसंकल्प्याग्निप्रतिष्ठापनांतंकृत्वाग्नेःप्रत्यग्दृपदंसोपलांप्रतिष्ठाप्यप्रा
गुदीच्यांधान्यराशेरुपर्युदकपूर्णकुंभंनिधायतंपल्लवैरपिधायगंधपुष्पैरलंकृत्योदगग्नेःसप्ततंडुलराशीनुपकल्प्य समिद्द्वयमादाय
अस्मिन्विवाहहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदे
वतेआज्येन । अत्रप्रधानम् । त्रिरग्निंपवमानं सकृदग्निं प्रजापतिंचाज्येन अर्यमाग्निं वरुणाग्निं पूषाग्निं प्रजापतिंच - लाजद्र
व्येण शेषेणस्विष्टकृतमित्याद्युक्त्वासमस्तव्याहृतिभिरग्नावाधायप्रजापतयइदं० इत्युक्त्वापरिसमूहनादिकृत्वापात्रासादनंकु
र्यात् । तत्रप्रोक्षणींस्रुवंचमसाज्यभाजनेइध्माबर्हिषीआसाद्य पात्रात्पश्चिमतोलाजशूर्पंचासाद्याज्याधिश्रयणांतंकृत्वाज्यंलाजैः

सहत्रिःपर्यग्निकृत्वाज्योत्पवनमात्रेकृते लाजांस्त्रिःप्रोक्ष्यस्रुवंसंमृज्यवध्वान्वारब्धइध्माधानाद्याघारहोमौकुर्यात्। आज्यभा
गौनस्तः। अथप्रधानहोमः। अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः अग्निःपवमानोदेवता गायत्रीछंदः। विवाहप्र
धानाज्यहोमेवि०। ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः। आरेबाधस्वदुच्छुनांस्वाहा। अग्नयेपवमानायेदंनमम। ॐ
अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः। तमीमहेमहागयंस्वाहा। अग्नयेपव०। ॐअग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यम्। दधद्र
यिंमयिपोषंस्वाहा। अग्नयेपव०। त्वमर्यमावसुश्रुतोग्निस्त्रिष्टुप्। विनियोगःप्राग्वत्। ॐत्वमर्यमाभवसियत्कनीनांनामस्व
धावन्गुह्यंबिभर्षि। अंजंतिमित्रंसुधितंनगोभिर्यद्दंपतीसमनसाकृणोषिस्वाहा। अग्नयइदं०। प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रि
ष्टुप्। विनियोगःप्रा०। ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव। यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयो
रयीणांस्वाहा। प्रजापतयइ०। एवंपंचाज्याहुतीर्हुत्वाप्राङ्मुखोपविष्टायाःपुरतःप्रत्यङ्मुखस्तिष्ठन्वरउत्तानंदक्षिणंपाणिंसांगुष्ठमु
त्तानेनन्यंचेनवास्वदक्षिणकरेणगृभ्णामीतिहस्तंगृह्णीयात्। गृभ्णामीतिसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप्। वधूपाणिग्रहणेविनि
योगः। ॐ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः। भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाःइ
ति। ततोवधूमुत्थाप्यतयाकरौक्षालयित्वांजलिंकारयित्वाप्राङ्मुख्यास्तस्याअंजलौवरःस्रुवेणाज्यमुपस्तीर्यवधूभ्रात्रातत्स्थानी
येनपितृव्यपुत्रादिनावातिष्ठताशूर्पस्थान्लाजान्मुष्ट्याद्विरोप्यस्वयंचेत्पंचावत्तीतदात्रिरोप्यस्वयंशूर्पस्थानभिघार्यांजलिस्थान
पिसकृदभिघार्य। अर्यमणंनुवामदेवोर्यमाग्निरनुष्टुप्। विवाहप्रधानलाजहोमेवि०। ॐ अर्यमणंनुदेवंकन्याअग्निमयक्षत।

सइमांदेवोअर्यमाप्रेतोमुंचातुनामुतस्वाहा । इतिमंत्रंपठित्वातिष्ठन्तिष्ठंत्याधृतांजलिरंजल्यविच्छेदेनांगुल्यग्रैरंजलिपार्श्वेणवा हावयेत् । वरोर्यमाग्नयइदंनममेतित्यजेत् । ततोदृपदुपलवर्जमग्निमुदकुंभपात्राणिचवधूंप्रदक्षिणंपरिणयन्स्वयमग्रेगच्छन्ज पेत् । ॐ अमोहमस्मिसात्वंसात्वमस्यमोहंद्यौरहंपृथिवीत्वंसामाहमृक्त्वंतावेवविवहावहै । प्रजांप्रजनयावहैसंप्रियौरोचिष्णू सुमनस्यमानौजीवेवशरदःशतमिति । ततोवधूंप्राङ्मुखींद्वाभ्यामपिपादाभ्यांदृपदं । इममश्मानंवामदेवोवधूरनुष्टुप् । अश्मा रोहणेवि० । ॐ इममश्मानमारोहाश्मेवत्वंस्थिराभव । सहस्वपृतनायतोभितिष्ठपृतन्यतः । इतिमंत्रेणारोहयेत् । पुनःपूर्ववदं जल्युपस्तरणादिकृत्वा । वरुणंनुवामदेवोवरुणाग्निरनुष्टुप् । विनियोगःप्राग्वत् । ॐ वरुणंनुदेवंकन्याअग्निमयक्षत । सइमां देवोवरुणःप्रेतोमुंचातुनामुतस्वाहाइतिपूर्ववद्धावयित्वा वरुणाग्नयइदंनममेतित्यक्त्वा । पुनरमोहमस्मीतिपूर्ववत्परिणीयेमम श्मानमित्यश्मानमारोहयेत् । पुनःपूर्ववदंजल्युपस्तरणादि । पूषणंनुवामदेवःपूषाग्निरनुष्टुप् । विनि० । ॐ पूषणंनुदेवंक न्याअग्निमयक्षत । सइमांदेवःपूषाप्रेतोमुंचातुनामुतस्वाहा इतिपूर्ववद्धावयित्वापूषाग्नयइदंनममेतित्यक्त्वापूर्ववदमोहमस्मी त्यग्निंपरिणीयेममश्मानमित्यश्मानमारोहयेत् । ततोवधूर्वरोवावशिष्टान्सर्वांल्लाँजानात्माभिमुखंशूर्पकोणेनजुहोति । तदाव रःप्रजापतयइतिस्मृत्वास्वाहेत्युच्चार्यप्रजापतयइदंनममेतित्यजेत् । अत्रपरिणयनाश्मारोहणेनस्तः । ततोवरः । प्रत्वामुंचा मीतिद्वयोःसूर्यासावित्रीसूर्यासावित्री आद्यात्रिष्टुप्द्वितीयानुष्टुप् । शिखाविमोचनेवि० । ॐ प्रत्वामुंचामिवरुणस्यपाशाद्ये नत्वाबध्नात्सवितासुशेवः । ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि । इतिदक्षिणशिखांविमुंचति । ॐ प्रेतोमुं

चामिनामुतःसुवृद्धाममुतस्करम् । यथेयमिंद्रमीढ्वःसुपुत्रासुभगासति । इत्युत्तरशिखां । शिखावंधनाभावे नविमोकः । अ
थाग्नेरुदीच्यांसप्ततंडुलराशीन्पश्चिमादितोवध्वादक्षिणपादेनवरःक्रमेणाभ्युत्क्रामयेन्मंत्रैः । तत्र इषएकपदीभवसामामनुव्र
ताभव । पुत्रान्विंदावहैवहूंस्तेसंतुजरदष्टयःइतिप्रथमं । ऊर्जेद्विपदीभवेत्यादिनाद्वितीयं । रायस्पोषायत्रिपदीभवेत्यादिनातृ
तीयं । मायोभव्यायचतुष्पदीभवेत्यादिनाचतुर्थं । प्रजाभ्यःपंचपदीभवेत्यादिनापंचमं । ऋतुभ्यःषट्पदीभवेत्यादिनाषष्ठं ।
सखासप्तपदीभवेत्यादिनासप्तमंराशिं । भवेत्यादेःसर्वत्रानुषंगः । ततःपूर्वस्थापितमुदकुंभंकेनचिदानाय्यतत्रस्थएववरःस्वशि
रसावधूशिरःसंयोज्यकलशस्थमुदकमादायादावात्मशिरःपश्चाद्वधूशिरःशांतिरस्त्वित्यादिपंचदशमंत्रैरभिषिच्यस्वासनेउपवि
श्याज्येनस्विष्टकृद्धोमंकृत्वाइध्मसन्नहनहोमादिवर्हिषिपूर्णपात्रनिनयनांतंसमाप्यविभूतिवंदनंकृत्वोंचमइत्युपस्थायपूर्ववद्धोत्त
रीयांतौतूष्णींविसृस्य दिनविवाहेसायंसंध्यामुपास्यध्रुवारुंधतीसप्तर्षिप्रभृतीन्वध्वासहदृष्ट्वा जीवपत्नीप्रजांविंदेयइतिवध्वावा
चयेत् । ततोवधूर्वाङ्नियमंविसृजेत् । रात्रिविवाहेसायंसंध्यामनुपास्यैवध्रुवादिदर्शनं । प्रदोषकालोपलक्षणमेतत् । तेनमेघादि
नावानक्षत्रादर्शनेपितस्मिन्कालेवाग्विसर्गः । उत्पातादिनाचदिवानक्षत्रदर्शनेपिनविसर्गः । एतदादिविवाहाग्निमभिरक्षेत् ।
विवाहादारभ्यदंपतीगृहप्रवेशनीयहोमोत्तरंत्रिरात्रंद्वादशरात्रंसंवत्सरंवायावदक्षारालवणाशिनावलंकुर्वाणावधःशायिनौब्रह्म
चारिणौस्याताम् । ब्राह्मण्याश्चवृद्धायाजीवपतिकायाजीवप्रजायागृहेएतांरात्रींवसेताम् । ग्रामांतरेगंतव्येयद्यंतरावासःस्या
त्तदायंविधिः । स्वग्रामविवाहेतुन ॥ इति विवाहहोमः ॥ ॥ ॥

अथगृहप्रवेशनीयहोमः ॥ ॥ अयंचगृह्यकृताप्रयाणविधेरनंतरमुक्तत्वात्समाख्यावशाच्चविवाहदिनेदिनांतरेवास्वगृहएव
गत्वाकर्तव्यइतिमुख्यःकल्पः । शिष्टास्तुश्वशुरगृहएवकुर्वंति । अत्रयथाचारंव्यवस्था । प्रयोगपारिजातेप्येवम् ॥ ॥ अथ
प्रयोगः ॥ ॥ वरःस्वगृहेदेशकालौसंकीर्त्यममविवाहाग्नेर्गृह्यत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगृहप्रवेशनीयहोमंकरिष्ये ।
इत्यादिसंकल्प्य स्थंडिलकरणाद्यग्निप्रतिष्ठापनांतंकृत्वा श्वशुरगृहेविवाहहोमानंतरमेवैतत्करणेतुअग्नेःस्थापितत्वात्संकल्पमा
त्रंकृत्वा प्रत्यगग्नेःस्वदक्षिणदेशेप्राग्ग्रीवमुपरिलोमकमानडुहंचर्मास्तीर्यतस्मिन्वधूमुपवेश्य तयान्वारब्धोगृहप्रवेशनीयहोमेदे
वतापरिग्रहार्थमन्वाधानंकरिष्यइतिसंकल्प्य अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा सूर्यासावित्रींचतुर्वारमा
ज्येन शेषेणस्विष्टकृतमित्याद्युक्त्वाव्याहृतिभिरग्नौसमिधावाधायपरिसमूहनादिकुर्यात् । तयान्वारब्धइध्माधानाद्याज्यभागां
तंकृत्वा । आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्री प्रथमाजगती द्वितीयात्रिष्टुप् तृतीयाचतुर्थ्यावनुष्टुभौ
गृहप्रवेशनीयप्रधानाज्यहोमेवि० । ॐ आनः॑प्र॒जांज॑नयतुप्र॒जाप॑तिराजर॒सायु॒सम॑नक्त्वर्य॒मा । अदु॑र्मंगलीःपतिलो॒कमावि॑श
शंनो॑भवद्वि॒पदे॒शंचतु॑ष्पदे॒स्वाहा॑ । सूर्यासावित्र्याइदंनमम । ॐअघो॑रचक्षु॒रप॑तिघ्न्येधिशि॒वाप॒शुभ्य॑ःसु॒मना॑ःसु॒वर्चा॑ः । वी॒र॒सूर्दे॒
वका॑मास्यो॒नाशंनो॑भवद्वि॒पदे॒शंचतु॑ष्पदे॒स्वाहा॑ सूर्यासावित्र्या० । ॐइ॒मांत्वमि॑न्द्रमीढ्वःसुपु॒त्रांसु॒भगां॑कृणु । दशा॑स्यांपु॒त्राना धे॑हि
पति॑मेकाद॒शंकृ॑धि॒स्वाहा॑ । सूर्यासावित्र्या० । ॐस॒म्राज्ञी॑श्वशु॑रेभवस॒म्राज्ञी॑श्व॒श्र्वांभ॑व । ननां॑दरिस॒म्राज्ञी॑भवस॒म्राज्ञी॑अधि॑दे॒वृषु
स्वाहा॑ । सूर्यासावित्र्या० । समंजंत्वित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् दधिप्राशनेआज्यशेषेणवाहृदयांजनेवि० । ॐ

समंजंतुविश्वेदेवाःसमापोहृदयानिनौ । संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ । इत्यनेनसकृत्पठितेनसकृत्प्राश्यपत्नीमपिप्राशयेत् । हुतशिष्टाज्येनवास्वस्यपत्न्याश्चहृदयांजनंकार्यम् । हस्तंप्रक्षाल्याज्येनस्विष्टकृदादिहोमशेषंसमाप्य पतिपुत्रवतीभिःकृतनीराजनौदंपतीद्विजाशिषोगृहीत्वामुदितौतिष्ठेताम् । अत्रविशेषमाहाचार्यः—अर्धरात्रेव्यतीतेतुपरेद्युःप्रातरेवहि । गृहप्रवेशनीयःस्यादितियज्ञविदोविदुःइति । ततोविवाहाद्द्वितीयाहेदंपतीअप्सरोगंधर्वौभूत्वामहादेवीं तृतीयाहेस्वाहाग्नीभूत्वा कालिकां चतुर्थाहेमानवौभूत्वाशांकरीमावाहनादिभिःपूजयेताम् । गृहप्रवेशनीयांतेपूर्वोक्तंत्रिरात्रादिकालव्रतंचरित्वाविवाहकालेवध्वापरिहितंवासःप्रक्षाल्य सत्येनोत्तभिताभूमिरित्यादिसूक्ताख्यसूर्यापाठतोर्थतश्चजानतेब्राह्मणायवरोदद्यात् । ततोव्रतसंपूर्त्यर्थंयथाशक्तिब्राह्मणान्भोजयित्वा स्वस्तिभवंतोब्रुवंत्वितितानुक्त्वा ॐ स्वस्तीतितैर्वाचयेत् । इतिगृहप्रवेशनीयहोमः ॥

ऐरिणीदानम् ॥ ॥ अथविवाहाच्चतुर्थदिनरात्रौतत्रभद्रादिसंभवेदिनएववाशिष्टाचारप्राप्तंवरमात्रेतत्समायैवाऐरिण्याख्यक्षुद्रषोडशवंशशूर्पयुतमहावंशपात्रदानंकार्यंकन्यादात्रा । सवस्त्रफलतांबूलंदंपत्योर्वंशवर्धनम् । ऐरिण्याख्यंवंशपात्रंपक्वान्नैःपरिपूरितम् । करकैरुद्रसंख्याकैःसुवर्णपरिपूरितैः । एतावदैरिणीरूपंकर्तव्यंकिलसूरिभिः । एवंसंपाद्यकन्यादातासभार्यो देशकालौसंकीर्त्य विवाहस्यसंपूर्णफलप्राप्तयेवरस्यतत्पितृमात्रादीनांतत्पक्षीयाणांचयथाविभववस्त्रादिभिःपूजनमहंकरिष्यइतिसंकल्प्य वरतत्पितृमातृभ्रात्रादिभ्यःक्रमेणयथाविभवंपट्टपटीदुकूलवस्त्रादिदत्वा पुनस्तिथ्यादिसंकीर्त्य ममोमामहेश्वरप्रीतिद्वाराकन्यादानफलसंपूर्णतायैवंशाभिवृद्ध्येचऐरिणीपूजनंवरमात्रेऐरिणीदानंचकरिष्ये । ऐरिणित्वमुमादेवीमहेशोगिरि

जापतिः । अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदाम् । सवस्त्रांचसदीपांचशूर्पैःषोडशभिर्युताम् । वरमात्रेप्रदास्यामिकन्या दानस्यसिद्धये । इतिसंकल्प्यमहावंशपात्रेउमामहेश्वरौषोडशोपचारैःपूजयित्वा वंशपात्रंवरमात्रेदत्वामंत्रान्पठेत् । वंशोवंश करःश्रेष्ठोवंशोवंशसमुद्भवः । अनेनवंशदानेनतुष्टोवृद्धिंकरोतुमे । वंशपात्रमिदंपुण्यंवंशजातसमुद्भवम् । वंशानामुत्तमंदान मतःशांतिंप्रयच्छमे । वंशपात्राणिसर्वाणिमयासंपादितानिवै । उमाकांतायदत्तानिममगोत्राभिवृद्धये । वंशवृद्धिकरंदानंसौ भाग्यादिसमन्वितम् । वस्त्रेणाच्छादितंपूगफलहेमसमन्वितम् । सर्वपापक्षयकरंनानाद्रव्यैस्तुपूरितम् । दानानामुत्तमंदान मतःशांतिंप्रयच्छमे । इति । ततःकन्यांवरपितृमात्रुत्संगयोःपृथगुपवेश्यपृथक्तौप्रार्थयेत् । अष्टवर्षा[1]त्वियंकन्यापुत्रवत्पालि तामया । इदानींतवपुत्रायदत्तांस्नेहेनपाल्यतामिति । वरमात्रावधूमात्रादितत्पक्षसुवासिनीभ्यःसकंचुकक्षुद्रवंशशूर्पवायनदा नादिवध्वाकारणीयमित्याद्याचारप्राप्तंयथाचारंज्ञेयम् । इदमैरिणीपूजादिवधूपितृमातृभ्यामभुक्तवद्भ्यांकृत्वाभोजनंकार्यम् ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेऐरिणीपूजादिचतुर्थदिनकृत्यम् ॥

[ आशीर्वचनमंत्राः ॥ ॥ ॐ अविधवाभववर्षाणिशतंसाग्रंतुसुव्रता । तेजस्वीचयशस्वीचधर्मपत्नीपतिव्रता । जनयद्ब हुपुत्रांणिमाचदुःखंलभेत्कंचित् । भर्तातेसोमपानित्यंभवेद्धर्मपरायणः । अष्टपुत्राभवत्वंचसुभगाचपतिव्रता । भर्तुश्चैवपितु र्भ्रातुर्हृदयानंदिनीसदा । इंद्रस्यतुयथेंद्राणीश्रीधरस्ययथाश्रिया । शंकरस्ययथागौरीतद्वत्तुरपिभर्तरि । अत्रेर्यथानुसूयास्या ॥

1 अष्टवर्षेत्यत्रवध्वावर्तमानवत्सरोहो मातृपित्रेतरभ्रात्राद्युत्संगोपवेशनेइदानींचतवभ्रात्रइत्यादियथायथमूह्यम् ।

इसिर्इस्याप्युरुन्धती । कौशिकस्ययथासतीतथात्वमपिभर्तरि । ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः । मयापत्याप्रजावती संजीवशरदःशतम् ॥ ॥ ॐप्रसुग्मंताधियसानस्यसक्षणिवरेभिर्वराअभिषुप्रसीदतः । अस्माकमिंद्रउभयंजुजोषतियत्सोम्यस्यांधसोबुबोधति । वीन्द्रयासिदिव्यानिरोचनाविपार्थिवानिरजसापुरुष्टुत । येत्वावहन्तिमुहुरध्वराँउपतेसुवन्वंतुवग्वनाँअराधसः । तदिन्मेच्छन्त्सद्वपुषोवपुष्टरंपुत्रोयज्जानंपित्रोरधीयति । जायापतिंवहतिवग्नुनासुमत्पुंसइद्भद्रोवहतुःपरिष्कृतः । तदित्सधस्थमभिचारुदीधयगावोयच्छासन्वहतुंनधेनवः । मातायन्मन्तुर्यूथस्यपूर्व्याभिवाणस्यसप्तधातुरिज्जनः । प्रवोच्छारिरिचेदेवयुष्पदमेकोरुद्रेभिर्यातितुर्वणिः । जरावायेष्वमृतेषुदावनेपरिवऊमेभ्यःसिंचतामधु । निधीयमानमपगूह्ळमप्सुप्रमेदेवानांव्रतपाउवाच । इंद्रोविद्वाँअनुहित्वाचचक्षतेनाहमग्नेअनुशिष्टआगाम् । अक्षेत्रवित्क्षेत्रविदंह्यप्राट्सप्रैतिक्षेत्रविदानुशिष्टः । एतद्वैभद्रमनुशासनस्योतस्रुतिंविंदत्यंजसीनाम् । अद्येदुप्राणीदममन्निमाहापीवृतोअधयन्मातुरूधः । एमेनमापजरिमायुवानमहेळन्वसुःसुमनाबभूव । एतानिभद्राकलशक्रियामकुरुश्रवणददतोमघानि । दानइद्वोमघवानःसोअस्त्वयंचसोमोहृदियंबिभर्मि ॥ ॥ ॐ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावम् । सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् । मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता । पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह । अवक्रन्ददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते । मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः । प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऋतुथाशकुंतयः । उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति । उद्गातेवशकुनेसामगायसिब्र

ह्मपुत्रईवसवनेषुशंससि । वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद । आवदंस्त्वंश
कुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः । यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः ॥ ] ॥
अथदेवकोत्थापनमंडपोद्वासनविधिः ॥ ॥ तत्रकालः—समेचदिवसेकुर्याद्देवकोत्थापनंबुधः । षष्ठंचविषमंनेष्टंमु
क्त्वापंचमसप्तमौ । समेषुषष्ठंविषमेषुपंचमसप्तमातिरिक्तंदिनंनात्रेष्टमित्यर्थः । उक्तकालेमंडपांतःसपत्नीकःस्वासनेउपविश्या
चम्यप्राणानायम्यदेशकालसंकीर्तनादिकृत्वा अद्यविवाहांगत्वेनस्थापितदेवतानामुत्थापनंमंडपोद्वासनंपुण्याहवाचनंचकरि
ष्येइतिसंकल्प्य सर्वादेवताःप्रत्यहवत्पूजयित्वाउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे । उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ।
अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु । अवतस्यविसर्जने । इतिविसृज्य भगवत्यादीनांमंडपांतस्तैलाभ्यंगोद्वर्तनोष्णोदकस्नाना
निकारयित्वावेष्टनसूत्रमुन्मुच्यस्वस्तिवाचनंकुर्यात् । ततोद्विजैरभिषेकःकार्यः । अभिषेकांतेपुरोधास्तच्छाखादिवंशपात्रेनि
धायतदुपरिप्रक्षिप्त्वा अभिषेकजलंसकुटुंबयजमानशिरसिकिंचित्स्रावयेत् । प्रेतिचेतिचेत्येतद्वैसर्वस्वस्त्ययनंयत्प्रेतिचेतिचे
तितद्योस्यप्रियःस्यात्तमेतेनानुमंत्रयेतप्रेतिचेतिचेतिस्वस्त्येवगच्छतिस्वस्तिपुनरागच्छति । इतिब्राह्मणंपठेत् । एवंत्रिः
कुर्यात् । ततःकर्तास्वशिरसिबद्धांजलिरस्मद्गोत्रेषट्सुषट्सुमासेषुशोभनमस्त्वितिद्विजान्प्रार्थयेत् । तेचतथास्त्वितिब्रूयुः ।
ततोद्विजांश्चंदनतांबूलदक्षिणादिनापूजयित्वातदाशिषोमंत्रोक्तागृह्णीयात् इत्यादिदेशकुलाचारानुसारेणकार्यम् ॥ इति
नारायणभट्टकृतप्रयोगरत्नेदेवकोत्थापनादिप्रयोगः ॥ ॥ ॥

अथवध्वाःप्रथमगृहप्रवेशः ॥ ॥ वधूप्रवेशःप्रथमेतृतीयेशुभप्रदःपंचमकेतथाह्नि । द्वितीयकेवाथचतुर्थकेवाषष्ठेवियोगामयदुःखदःस्यात् । लल्लः—स्वभवनपुरप्रवेशेदेशानांविप्लवेतथोद्वाहे। नववध्वागृहगमनेप्रतिशुक्रविचारणानास्ति। मांडव्यः—नित्ययानेगृहेजीर्णेप्राशनांतेषुसप्तसु । वधूप्रवेशेमांगल्येनमौढ्यंगुरुशुक्रयोः । ज्योतिःप्रकाशः—वामेशुक्रेनवोढायाःसुखंहानिश्चदक्षिणे । धनंधान्यंचपृष्ठस्थेसर्वनाशःपुरःस्थिते । नवोढायास्तुवैधव्यंयदुक्तंसंमुखेभृगौ । तदेवंविबुधैर्ज्ञेयंकेवलंतुद्विरागमे । पूर्वतोभ्युदितेशुक्रेप्रयायाद्दक्षिणांपरे । पश्चिमाभ्युदितेचैवयायात्पूर्वोत्तरेदिशौ । तथाभाद्रपदमासमारभ्यपूर्वादिमुख्यदिक्षुप्रतिदिशंमासत्रयंकपाटंज्ञेयम् । चैत्रमारभ्यपूर्वाद्यष्टदिक्षुमुख्यदिशिमासद्वयंविदिक्ष्वेकमासंक्रमेणकंटकंजानीयात् । इदंद्वयंग्रामांतरेनववधूगमनेवर्ज्यम् । नियतकालेपिकदाचिन्निषेधमाहगर्गः—व्यतीपातेचसंक्रांतौग्रहणेवैधृतावपि । श्राद्धंविनाशुभंनैवप्राप्तकालेपिमानवः । तथा—अमासंक्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेदिति । ॐ इहप्रियंप्रजयाते समृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि। एनापत्यातन्वं१संसृजस्वाधाजिव्रीविदथमावदाथः । इतिवधूंगृहंप्रवेश्यसवधूकोवरोगणपतिंलक्ष्मींचयथाचारंसंपूज्यपुण्याहंवाचयित्वाविप्राशिषोगृह्णीयात् । विवाहात्प्रथमेपौषेआषाढेचाधिमासके । भर्तुर्गृहेवसेन्नस्त्रीचैत्रेतातगृहेतथा । इतिवधूगृहगमनविधिः ॥ ॥ ॥

अथविवाहेआशौचादिप्राप्तौनिर्णयः॥ ॥विधिवत्कृतेकन्यावरणेत्रिरात्रादिव्रतसमाप्तिपर्यंतंमध्येआशौचप्राप्तौतदपोह्यसद्यःशौचंविधीयतइतिचंद्रिकाकारआह । तत्रयाज्ञवल्क्यः—दानेविवाहेयज्ञेचसंग्रामेदेशविप्लवे । आपद्यपिचकष्टायांसद्यःशौ

चंविधीयतइति। दातुर्वरस्यकन्यायाःसद्यःशौचंविधीयतइत्यर्थः। बृहस्पतिः—विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके। पूर्वसंकल्पि
तार्थेषुनदोषःपरिकीर्तितः । षट्त्रिंशन्मते—विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके । परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः । वि
ष्णुः—व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे । प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकम् । प्रारंभश्चतेनैवोक्तः—प्रारंभोवरणंयज्ञेसं
कल्पोव्रतसत्रयोः। नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति। नांदीमुखावधिश्चावश्यकत्वेधिकउक्तः—एकविंशत्यहर्यज्ञेविवा
हेदशवासराः। त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयतइति। तेनएकविंशत्याद्यहरंतःपातियथायज्ञादिभवतितथाआवश्यकेथ
ज्ञादौपूर्वश्राद्धंकुर्यादित्यर्थः। प्रारंभाभावेपिकन्यायाअधार्यत्वेसंनिहितलग्नांतराभावेचहोमादिपूर्वकंविष्णुरनुज्ञामाह—अना
रब्धविशुद्ध्यर्थंकूष्मांडैर्जुहुयाद्धृतम् । गांदद्यात्पंचगव्याशीततःशुध्यतिसूतकीति । उपकल्पितबहुसंभारस्यापिसंनिहितलग्नां
तराभावेनसंभारधारणाशक्तावाशौचाभावमाहविष्णुः—नदेवप्रतिष्ठाविवाहयोःपूर्वसंभृतयोरिति ॥ ॥ अथविवाहकाले
कन्याऋतुमतीचेत्तत्राहयज्ञपार्श्वः—विवाहेविततेतंत्रेहोमकालउपस्थिते । कन्यामृतुमतींदृष्ट्वाकथंकुर्वीतयाज्ञिकः । स्ना
पयित्वातुतांकन्यामर्चयित्वायथाविधि । युंजानामाहुतिंहुत्वाततःकर्मणियोजयेत् । आहुतिमंत्रस्तैत्तिरीयशाखायां—युं
जानःप्रथमंमनस्तत्वायसविताधियः । अग्निंज्योतिर्निचाय्यपृथिव्याअध्याभरत् । इति । यद्वा—विवाहहोमेप्रक्रांतेयदिक
न्यारजस्वला । त्रिरात्रंदंपतीस्यातांपृथक्शय्यासनाशनौ । चतुर्थेहनिसंस्नातौतस्मिन्नग्नौयथाविधीति । जुहुयातामितिशेषः।
इतिविवाहआशौचादिनिर्णयः ॥ ॥ ॥ ॥

अथप्रसंगात्पुनर्विवाहउच्यते ॥ ॥ कृतेविवाहेपंचांगशुद्धिराहित्यादिदोषश्चेज्ज्ञातस्तदाज्योतिःशास्त्रोक्तकालविशेषेपुनर्विवाहःकार्यः । तदाहनृसिंहःश्रीधरीये—पुनर्विवाहंवक्ष्यामिदंपत्योःशुभवृद्धिदम् । लग्नेंदुलग्नयोर्दोषेग्रहतारादिसंभवे । अन्येष्वशुभकालेषुदुष्टयोगादिसंभवे । विवाहेचापिदंपत्योराशौचादिसमुद्भवे । तस्यदोषस्यशांत्यर्थंपुनर्वैवाह्यमिष्यते । अयनंचोत्तरंश्रेष्ठंवर्धयेत्तुविशेषतः । आषाढमार्गशीर्षौद्वौवर्ज्यौशेषाःशुभावहाः । विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजाः । करणायोगसंज्ञानिग्रहगोचरयोगकाः । तस्मिन्विवाहसमयेशुभदाश्चतथैवहि । पूर्वाह्णेपूर्वरात्रौचविवाहःशुभदोभवेदिति ॥

अथद्वितीयादिविवाहविधिः ॥ ॥ तत्राधिवेदनीयाआहयाज्ञवल्क्यः—सुरापीव्याधिताधूर्तावंध्यार्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाधिवेत्तव्यापुरुषद्वेषिणीतथा । अधिविन्नातुभर्तव्यामहदेनोन्यथाभवेत् । अधिवेत्तव्या तदुपरिस्त्र्यंतरंकर्तव्यमित्यर्थः । आपस्तंबः—धर्मप्रजासंपन्नेदारेनान्यांकुर्वीतेति । अधिवेदनेप्रतीक्षाकालंमनुराह—वंध्याष्टमेधिवेत्तव्यादशमेतुमृतप्रजा । एकादशेस्त्रीजननीसद्यस्त्वप्रियवादिनीति । संग्रहे—अप्रजांदशमेवर्षेस्त्रीप्रजांद्वादशेत्यजेत् । मृतप्रजांपंचदशेसद्यस्त्वप्रियवादिनीम् । रत्यर्थेतुविवाहांतरेविशेषः—एकामुत्क्रम्यकामार्थमन्यांलब्धुंयइच्छति । समर्थस्तोषयित्वार्थैस्त्वन्यांरम्यांसमुद्वहेत् । याज्ञवल्क्यस्तु—आज्ञासंपादिनींदक्षांवीरसूंप्रियवादिनीम् । त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणंस्त्रियाः । सधनोधनतृतीयांशमधनोऽशनाच्छादनात्मकभरणंदाप्यइत्यर्थः । यात्वेतावताऽपरितुष्टागृहान्निर्गच्छेत्तांप्रत्याहमनुः—अधिविन्नातुयानारीनिर्गच्छेद्रोपितागृहात् । सासद्यःसंनिरोद्धव्यात्याज्यावाकुलसंनिधाविति ॥ बहुभार्योज्येष्ठयैवसहधर्मंसपत्नीक

साध्यंकुर्यादितिहेमाद्रौकात्यायनः—अग्निशिष्टादिशुश्रूषांबहुभार्यःसवर्णया । कारयेत्तद्बहुत्वंचेज्ज्येष्ठयागर्हितानचेदिति । शिष्टशुश्रूषा आतिथ्यादिपूजा । साचपत्नीसंपाद्यधर्ममात्रोपलक्षणार्था । गर्हिताधर्मायोग्यत्वापादकपातित्यादिदोषवतीनचे दित्यर्थः । तादृशीचेन्नतया किंत्वनेवंविधयाकनिष्ठयापिकारयेत् ॥ याज्ञवल्क्यः—सत्यामन्यांसवर्णायांधर्मकार्यंनकारये त् । सवर्णासुविधौधर्म्येज्येष्ठयानविनेतरा । आन्यां सवर्णा । इदंचाधानेसहाधिकृतानेकभार्याविषयम् । अनधिकृताया स्तुप्रसक्त्यभावएव । तत्रापिकेवलक्रत्वर्थमाज्यावेक्षणादियजमानौदुंबरीसन्मानवदेकयैवसवर्णयाज्येष्ठयाकारयेत् । पत्नी संनहनादितुकर्तृसंस्कारकंसहाधिकृताभिःसर्वाभिरित्यादिमीमांसामांसलमनसांसुविज्ञानम् । स्मार्ताग्निसाध्येतुकर्मणिसर्वा सांसहाधिकारः । प्रथमविवाहाग्नावेवापरविवाहहोमाविधानात्तदसंभवेग्निद्वयसंसर्गविधानाच्च । अतस्तत्राप्युक्तएवकर्मसु कर्तृविवेकः । द्वितीयादिविवाहेअग्निनियममाहहोमायकात्यायनः—सदारोन्यान्पुनर्दारानुद्वोढुंकारणांतरात् । यदीच्छेद ग्निमान्कुर्वन्क्वहोमोस्यविधीयते । स्वाग्नावेवभवेद्धोमोलौकिकेनकदाचनेति । अयंचनियमःसंभवे । ग्रामांतरादावसंभवेतु लौकिकाग्नौहुत्वातयोर्यथाकालंवक्ष्यमाणःसंसर्गविधिःकार्यः । अत्रद्वितीयादिविवाहेजीवत्पितृकोपिस्वयमेवनांदीश्राद्धंकुर्या त् ।—नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः । अतऊर्ध्वंप्रकुर्वीतस्वयमेवतुनांदिकमितिस्मृतेः । तत्रपितृवर्गंविहायमातृमा तामहवर्गयोःकुर्यात् । मातरिजीवत्यांमातामहवर्गस्यैव । तस्मिन्नपिजीवतिद्वारलोपाद्वृद्धिश्राद्धलोपएव । सोपिसाग्निकश्चे द्येभ्यःपितादद्यात्तेभ्यःस्वयमेवदद्यात् । येभ्यएवपितादद्यात्तेभ्यःकुर्वीतसाग्निकइतिवचनात् । अन्यःअसाग्निकोपिपितृदेव

ताभ्योदद्यात् नतुलोपः। वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति। येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइतिमैत्रायणीयपरिशिष्टादित्यादिरस्मत्कृतेत्रिस्थलीसेतौविस्तरोज्ञेयः। द्वितीयादिविवाहकालविशेषउक्तःसंग्रहे—प्रमदामृतवासरादितःपुनरुद्वाहविधिर्वरस्यच। विषमेपरिवत्सरेशुभोयुगुलेचापिमृतिप्रदोभवेत्। जीवत्यांतुपूर्वपत्न्यांद्वितीयादिविवाहेनायंकालनियमः॥

अथतृतीयमानुषीविवाहस्यनिषिद्धत्वात्तस्मिन्कर्तव्येऽर्कविवाहविधिः॥ तृतीयानिषेधमाहमात्स्येकश्यपः—तृतीयांमानुषींनैवचतुर्थींयःसमुद्वहेत्। पुत्रपौत्रादिसंपन्नःकुटुंबीसाग्निकोज्वलः। उद्वहेद्रतिसिद्ध्यर्थतृतीयांनकदाचन। मोहादज्ञानतोवापियदिगच्छेत्तुमानुषीम्। नश्यत्येवनसंदेहोगर्गस्यवचनंयथा। अन्यत्रापि—तृतीयांयदिचोद्वाहेत्तर्हिंसाविधवाभवेत्। चतुर्थादिविवाहार्थतृतीयेर्कसमुद्वहेत्। आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे। शुभेदिनेवापूर्वाह्णेकुर्यादर्कविवाहकम्। देशादिब्रह्मपुराणेदर्शितम्। ग्रामात्प्राच्यामुदीच्यांवासुपुष्पफलसंयुतम्। परीक्ष्ययत्नतोधस्तात्स्थंडिलादियथाविधि। व्यासः—स्नात्वालंकृतवासास्तुरक्तगंधादिभूषितम्। सपुष्पफलशाखैकमर्कगुल्मंसमाश्रयेत्। सुलक्षणेनसंयुक्तमर्कंसंस्थाप्ययत्नतः। अर्ककन्याप्रदानार्थमाचार्यकल्पयेत्पुरा। अर्कसंनिधिमागत्यतत्रस्वस्त्यादिवाचयेत्। नांदीश्राद्धंहिरण्येनअष्टवर्गान्प्रपूजयेत्। पूजयेन्मधुपर्केणनरंविप्रस्यहस्ततः। यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषणम्। उष्णीषगंधमाल्यादिवरायास्मैप्रदापयेत्। स्वशाखोक्तप्रकारेणमधुपर्कंसमाचरेत्। ब्रह्मपुराणे—यथाविधीत्यस्यानंतरं—कृत्वार्कपुरतस्तिष्ठन्प्रार्थयेत्तंद्विजोत्तमः। त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे। तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु। तत्राध्यारोप्यदेवेशंछाययासहितंरविम्। वस्त्रैर्मा

ल्यैस्तथागंधैस्तन्मंत्रेणैवपूजयेत् । तन्मंत्रेणआकृष्णेनेत्यादिना । अन्यत्रापि—श्वेतवस्त्रेणसंवेष्ट्यतथाकार्पासतंतुभिः । गंधपु
ष्पैःसमभ्यर्च्यताह्लिंगैरभिषिंचयेत् । गुडौदनंतुनैवेद्यंतांबूलंचसमर्पयेत् । व्यासः—अर्कप्रदक्षिणंकुर्वन्जपेन्मंत्रमिमंबुधः ।
ममप्रीतिकरायेयंमयासृष्टापुरातनी । अर्कजाब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु । पुनःप्रदक्षिणीकुर्यान्मंत्रेणानेनमंत्रवित् । नम
स्तेमंगलेदेविनमःसवितुरात्मजे । त्राहिमांकृपयादेविपत्नीत्वंमइहागता । अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच । वृक्षाणा
मादिभूतस्त्वंदेवानांप्रीतिवर्धनः । तृतीयोद्वाहजंपापंमृत्युंचाशुविनाशय । ततश्चकन्यावरणंत्रिपुरुषंकुलमुद्धरेत् । आदित्यः
सविताचार्कःपुत्रीपौत्रीचनप्त्रिका । गोत्रंकाश्यपइत्युक्तंलोकेलौकिकमाचरेत् । मुहूर्तेर्कंनिरीक्षेतस्वस्तिसूक्तमुदीरयन् । आ
शीर्भिःसहितैःकुर्यादाचार्यप्रमुखैर्द्विजैः । अथाचार्यसमाहूयविधिनातन्मुखाच्चताम् । प्रतिगृह्यततोहोमंगृह्योक्तविधिनाचरे
त् । आचार्यस्यदानमंत्रमाहव्यासः—अर्ककन्यामिमांविप्रयथाशक्तिविभूषिताम् । गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रयेति ।
अंजल्यक्षतकर्माणिकृत्वाकंकणपूर्वकम् । यावत्पंचावृतंसूत्रंतावदर्कप्रवेष्टयेत् । स्वशाखोक्तेनमंत्रेणगायत्र्यावाथवाजपेत् ।
पंचीकृत्यपुनःसूत्रंस्कंधेबध्नातिमंत्रतः । बृहत्सामेतिमंत्रेणसूत्ररक्षांप्रकल्पयेत् । अर्कस्यपुरतःपश्चाद्दक्षिणोत्तरयोस्तथा । कुं
भांश्चनिक्षिपेत्पश्चादाग्नेयादिचवेष्टयेत् । सवस्त्रंप्रतिकुंभंचत्रिसूत्रेणैववेष्टयेत् । हरिद्रागंधसंयुक्तंपूजयेच्छीतलंजलं । प्रतिकुं
भंमहाविष्णुंसंपूज्यपरमेश्वरं । पाद्यार्घ्यादिनिवेद्यांतंकुर्यान्नाम्नैवमंत्रवित् । अत्रहोमप्रकारःशौनकेनदर्शितः—तृतीयेस्त्रीवि
वाहेतुसंप्राप्तेपुरुषस्यतु । अर्कीविवाहंवक्ष्यामिशौनकोहंविधानतः । अर्कसंनिधिमागत्यतत्रस्वस्त्यादिवाचयेत् । नांदीश्राद्धं

प्रकुर्वीतस्थंडिलंचप्रकल्पयेत् । अर्कमभ्यर्च्यसौर्याचगंधपुष्पाक्षतादिभिः । सौर्यासूर्यदेवत्ययाआकृष्णेनेत्यादिऋचा । स्वयं चालंकृतस्तद्वद्वस्त्रमाल्यादिभिःशुभैः । अर्कस्योत्तरदेशेतुसमन्वारब्धएतया । एतयाअर्ककन्यया । उल्लेखनादिकंकुर्यादाघारांतमतःपरम् । आज्याहुतीश्चजुहुयात्संगोभिरनयैकया । यस्मैत्वाकामकामायेत्येतयर्चाततःपरं । व्यस्ताभिश्चसमस्ताभिस्ततश्चस्विष्टकृद्भवेत् । परिषेचनपर्यंतमयाश्चेत्यादिकंक्रमात् । प्रार्थनामंत्रादिविशेषमाहव्यासः—पुनःप्रदक्षिणंकृत्वामंत्रमेतमुदीरयेत् । मयाकृतमिदंकर्मस्थावरेषुजरायुणा । अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि । इत्युक्त्वाशांतिसूक्तानिजप्त्वातांविसृजेत्पुनः । गोयुग्मंदक्षिणांदद्यादाचार्यायचभक्तितः । इतरेभ्योपिविप्रेभ्योदक्षिणांचापिशक्तितः । तत्सर्वंगुरवेदद्यादंतेपुण्याहमाचरेत् । अत्रपंचमदिनेकर्तव्यमुक्तंब्रह्मपुराणे—चतुर्थेदिवसेतीतेपूर्ववत्तांप्रपूज्यच । विसृज्यहोममग्निंचविधिनामानुषींपराम् । उद्वहेदन्यथानैवपुत्रपौत्राभिवृद्धिमान् । नपशून्नचमित्राणिमंगलंनैवगच्छति । एवमेतद्द्विजश्रेष्ठविधिनासम्यगुद्वहेत् । धनधान्यसमृद्धिश्चइच्छाशक्तिःपरत्रचेति ॥ ॥ अत्रैवसंक्षेपतःप्रयोगः ॥ ॥ उक्तेआदित्यवारादावुक्तदेशेयथोक्तार्कसमीपेगत्वाचम्यप्राणानायम्यदेशकालौसंकीर्त्यममतृतीयमानुषीविवाहजदोषाभावार्थंअर्कविवाहंकरिष्ये इतिसंकल्प्य । आचार्यवरणस्वस्तिवाचनाभ्युदयिकंक्रमेणकुर्यात् । अत्रहोमेविशेषः । देशकालादिसंकीर्त्यार्कविवाहांगभूतंहोमंकरिष्ये । तदंगतयान्वाधानंकरिष्ये । अस्मिन्नन्वाहितेग्नावित्याद्याघारांतमुक्त्वा अत्रप्रधानंबृहस्पतिमग्निमग्निंवायुंसूर्यंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्याद्यन्वाधायाघारांतंकृत्वा संगोभिरित्यस्यांगिरसोबृहस्पतिस्त्रिष्टुप् । अर्कविवाहांगभूताज्यहोमे

वि० । ॐ संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय । जनेंमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूंरिवाजौस्वाहा । बृहस्पतयइदंनमम । यस्मैत्वेत्यस्यवामदेवोग्निस्त्रिष्टुप् । अर्कविवाहांगभूताज्यहोमेवि० । यस्मैत्वाकामकामायवयंसम्राज्य जामहे । तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा । अग्नयइदं० । ततोव्यस्तसमस्तव्याहृतिभिर्हुत्वाहोमशेषंसमापयेत् । ततः प्रदक्षिणाप्रार्थनादिकर्मशेषसमापनम् । इतिप्रयोगरत्नेअर्कविवाहः ॥ ॥ ॥

[ अथार्कविवाहप्रयोगः[1] ॥ रविशन्योर्वारेहस्तर्क्षेवान्यत्रशुभदिनेवापुष्पफलयुतमर्कंगत्वाअर्ककन्यादातारमाचार्यंवृत्वार क्तगंधादिभूषितोदेशकालौस्मृत्वा ममतृतीयमानुषीविवाहजन्यदोषपरिहारार्थंतृतीयमर्कविवाहंकरिष्ये । आचार्यंवृत्वानांदी श्राद्धांतंकुर्यात् । दातामधुपर्कयज्ञोपवीतवस्त्रगंधमाल्यादिभिर्वरंपूजयेत् । अर्कस्यपुरतःस्थित्वा । त्रिलोकवासिन्सप्ताश्व छाययासहितोरवे । तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु । इतिप्रार्थ्य छायायुतंरविमर्केध्यात्वाब्लिंगैरभिषिच्यवस्त्रादिभिरा कृष्णेनेतिमंत्रेणसंपूज्य श्वेतवस्त्रेणसूत्रेणचावेष्ट्य गुडौदनंनिवेद्य तांबूलंदद्यात् । ममप्रीतिकरायेयंमयासृष्टापुरातनी । अर्के जाब्रह्मणासृष्टाद्यास्मान्संप्रतिरक्षतु । इत्यर्कंप्रदक्षिणीकृत्य । नमस्तेमंगलेदेविनमःसवितुरात्मजे । त्राहिमांकृपयादेविपत्नी त्वंमइहागता । अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच । वृक्षाणामधिभूतस्त्वंदेवानांप्रीतिवर्धन । तृतीयोद्वाहजंपापंमृत्युंचा शुविनाशयेतिचप्रदक्षिणीकुर्यात् । अंतःपटधारणादिकन्यादानपर्यंतंविधिंकृत्वा । कन्यादातादित्यस्यप्रपौत्रींसवितुःपौत्रीम

१ प्रयोगसौकर्यायायधर्मांब्धिस्थःप्रयोगःसगृहीतोस्ति ।

र्कस्यपुत्रींकाश्यपगोत्रामर्ककन्याममुकगोत्रायवरायतुभ्यंसंप्रददे । अर्ककन्यामिमांविप्रयथाशक्तिविभूषिताम् । गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय । दक्षिणांदत्वागायत्र्यावेष्टितसूत्रेण बृहत्सामक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरम् । इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष । इतिमंत्रेणअर्कवरयोःकंकणंवध्वार्कस्यचतुर्दिक्षुकुंभेषुविष्णुंनाममंत्रेणपोडशोपचारैःसंपूज्य अर्कस्योत्तरेर्कपत्न्यान्वारब्धोवरः अस्याःसम्यक्भार्यात्वसिद्ध्यर्थपाणिग्रहहोमंकरिष्ये । आघारदेवतेआज्येनेत्यंते बृहस्पतिंअग्निंअग्निंवायुंसूर्यंप्रजापतिंचाज्यद्रव्येण शेषेणस्विष्टकृतं । आघारांतंकृत्वा संगोभिरित्यस्यांगिरसोबृहस्पतिस्त्रिष्टुप् । आज्यहोमेविनियोगः । ॐ संगोभिरांगिरसो० बृहस्पतयइदं० । यस्मैत्वेतिवामदेवोग्निस्त्रिष्टुप् । यस्मैत्वाकामकामायवयंसम्राड्यजामहे । तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिवस्वाहा । अग्नयइदं० । ततोव्यस्तसमस्तव्याहृतिभिर्हुत्वाहोमशेषंसमाप्य । मयाकृतमिदंकर्मस्थावरेषुजरायुणा। अर्कापत्यानिनोदेहितत्सर्वक्षंतुमर्हसि । इतिप्रार्थ्यशांतिसूक्तपाठांतेगोयुग्ममाचार्यायदत्वास्वधृतवस्त्राणिगुरवेदत्वान्यानिधारयेत् । दशत्रयोवाविप्राभोज्याः । इत्यर्कविवाहः ॥ ॥

अथाग्निद्वयसंसर्गविधिः ॥ यदिपूर्वगृह्याग्नावेवद्वितीयादिविवाहहोमःकृतस्तदातेनैवाग्निनाद्वितीयादिःपत्नीगृह्यकर्मसुसहाधिकारिणी । यदिदैवादन्याग्नौद्वितीयादिविवाहहोमःकृतस्तदाद्वितीयविवाहनिमित्तकत्रिरात्रादिव्रतांतेग्निद्वयसंसर्गःकार्यः । तत्रविधिमाहशौनकः—अथाग्न्योर्गृह्ययोर्योगंसपत्नीभेदजातयोः । सहाधिकारसिद्ध्यर्थमहंवक्ष्यामिशौनकः । अरोगामुद्वहेत्कन्यांधर्मलोपभयात्स्वयम् । कृतेतत्रविवाहेचव्रतांतेतुपरेहनि । पृथक्स्थंडिलयोरग्नीसमाधाययथाविधि । तंत्रं

कृत्वाज्यभागांतमन्वाधानादिकंततः । जुहुयात्पूर्वपत्न्यग्नौतयान्वारब्धआहुतीः । अग्निमीळेपुरोहितंसूक्तेननवर्चेनतु । समि
ध्येनंसमारोप्यअयंतेयोनिरित्यृचा । प्रत्यवरोहेत्यनयाकनिष्ठाग्नौविधायतम् । आज्यभागांततंत्रादिकृत्वारभ्यतदादितः ।
समन्वारब्धएताभ्यांपत्नीभ्यांजुहुयाद्धृतम् । चतुर्गृहीतमेताभिर्ऋग्भिःपड्भिर्यथाक्रमम् । अग्नावग्निश्चरतीत्यग्निनाग्निःसमिध्य
ते । अस्तीदमितितिसृभिःपाहिनोअग्नएकया । ततःस्विष्टकृदारभ्यहोमशेषंसमापयेत् । गोयुग्मंदक्षिणादेयाश्रोत्रियायाहिता
ग्नये । पत्न्योरेकायदिमृतादग्ध्वातेनैवतांपुनः । आदधीतान्ययासार्धमाधानविधिनागृहीति ॥ ॥ अयमत्रप्रयोगः ॥ ॥
द्वितीयादिविवाहव्रतांतेशुभदिनेप्राणायामदेशकालस्मरणादिकृत्वा ममविवाहद्वयेनजातयोर्द्वयोर्गृह्याग्न्योःसंसर्गमहंकरिष्ये
इतिसंकल्प्योदक्संस्थयोर्द्वयोःस्थंडिलयोरुपलेपादिपूर्वकक्रमेणगृह्याग्नीप्रतिष्ठाप्यप्रथमाग्नावन्वादध्यात् । तत्रक्रमः । अस्मि
न्नग्निद्वयसंसर्गकर्मण्यन्वाधानंकरिष्ये अस्मिन्नित्याद्याज्यभागांतमुक्त्वा अग्निंप्रधानदेवतांनवभिराज्याहुतिभिर्यक्ष्ये । शे
षेणस्विष्टकृतमित्यादिसांगेनकर्मणासद्योयक्ष्यइत्यंतमुक्त्वापरिसमूहनाद्याज्यभागांतंकृत्वाआद्ययापत्न्यासमन्वारब्धोनवाहु
तीर्जुहुयात् । अग्निमीळइतिनवानांमधुच्छंदाअग्निर्गायत्री । अग्निद्वयसंसर्गप्रधानाज्यहोमेवि० । ॐ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञ
स्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑म॒म्स्वाहा॑ । अग्नयइदंनमम । ॐ अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति॒
स्वाहा॑ । अग्नयइदं० । ॐ अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे । य॒शसं॑ वी॒रव॑त्तम॒म्स्वाहा॑ । अग्नयइदं० । ॐ अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒
श्वतः॑ परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति॒स्वाहा॑ । अग्नयइदं० । ॐ अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒रा ग॑म॒त्स्वा

हां । अग्नयइदंनमम ॥ १ ॥ ॐ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमंगिरःस्वाहा । अग्नयइदंनमम । ॐ उप
त्वाग्नेदिवेदिवेदोषावस्तर्धियावयम् । नमोभरंतएमसिस्वाहा । अग्नयइदंनमम । ॐ राजंतमध्वराणांगोपामृतस्यदीदिविम् ।
वर्धमानंस्वेदमेस्वाहा । अग्नयइदंनमम । ॐ सनःपितेवसूनवेग्नेसूपायनोभव । सचःस्वानःस्वस्तयेस्वाहा । अग्नयइदंनमम
॥ २ ॥ इतिनवाहुतीर्हुत्वा । स्विष्टकृदादिहोमशेषमुपस्थानांतंसमाप्य । अग्नेत्वंनइतिचतसृभिर्वोपस्थानंकुर्यात् । तद्यथा ।
अग्नेत्वंनइतिचतसृणांगौपायनालौपायनाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः अग्निर्देवता द्विपदाविराट्छंदः ।
अग्न्युपस्थानेवि० । ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः सनोबो
धिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् । तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः । ॐचमेइत्यादिप्राग्वत् । ततस्तम
ग्निमयंतेयोनिरितिसमिधिसमारोपयेत् । तच्चैवं । [ अयंतेयोनिरित्यस्यगाथिनोविश्वामित्रोग्निस्त्रिष्टुप् समिधिअग्निसमारो
पणेविनियोगः । ॐ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः । तंजानन्नग्नआसीदाथानोवर्धयागिरः । इतिमंत्रेणसमारो
प्यकनिष्ठाग्नौप्रत्यवरोहेतिमंत्रेणसमारोपिताग्निंप्रत्यवरोहयेत् । तद्यथा । प्रत्यवरोहेत्यस्यप्रजापतिरग्निस्त्रिष्टुप् । अग्निप्रत्यव
रोहणेवि० । ॐ प्रत्यवरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् । प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः ।
इतिमंत्रेणतंप्रत्यवरोह्य अन्वाधानेपूर्ववदाज्यभागांतमुक्त्वात्रप्रधानं षड्वारमग्निंचतुर्गृहीताज्येन शेषेणस्विष्टकृतमित्यादिआ
ज्यभागांतंकृत्वा ततःस्रुचिस्रुवेणचतुर्वारंप्रभूतमाज्यंगृहीत्वापत्नीभ्यामन्वारब्धस्तेनाज्येनावयवशःषडाहुतीर्जुहुयान्मंत्रैः ।

तेच ॐ अग्नावग्निश्चरतिप्रविष्टऋषीणांपुत्रोअधिराजएषः । तस्मैजुहोमिहविषाघृतेनमादेवानांमोमुहद्भागधेयंमोअस्माकंमो
मुहद्भागधेयंस्वाहा । अग्नयइदंनममेतिसर्वत्रत्यागः । अग्निनाग्निर्मधुच्छंदाअग्निर्गायत्री । अग्निद्वयसंसर्गप्रधानाज्यहोमेवि० ।
ॐ अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यःस्वाहा । अग्नय० । अस्तीदमधिमंथनमितितिसृणांविश्वामित्रोग्नि
रनुष्टुप् अंत्येद्वेत्रिष्टुभौ । अग्निद्वयसंसर्गप्रधानाज्यहोमेवि० । ॐ अस्तीदमधिमंथनमस्तिप्रजननंकृतम् । एतांविश्पत्नीमा
भराग्निंमंथामपूर्वथास्वाहा । अग्नयइदं० । ॐ अरण्योर्निहितोजातवेदागर्भइवसुधितोगर्भिणीषु । दिवेदिवईड्योजागृव
द्भिर्हविष्मद्भिर्मनुष्येभिरग्निःस्वाहा । अग्नय० । ॐ उत्तानायामवभराचिकित्वान्सद्यःप्रवीतावृषणंजजान । अरुषस्तूपोरु
शंदस्यपाजइळायास्पुत्रोवयुनेजनिष्टस्वाहा । अग्नय० । पाहिनोअग्नएकयेतिप्रगाथोग्निर्बृहती । अग्निद्वयसंसर्गप्रधानाज्यहो
मे० । ॐ पाहिनोअग्नएकयापाह्युत द्वितीयया । पाहिगीर्भिस्तिसृभिरूर्जापतेपाहिचतसृभिर्वसोस्वाहा । अग्नयइदंनमम
॥ ६ ॥ इतिशौनकमतम् । गृह्यपरिशिष्टमतेस्रुवेणैवअष्टाहुतयः । ताश्चअग्निनाग्निःसमिध्यतइत्युक्तयैका । १ । त्वंह्यग्नेअग्निने
त्यस्यविरूपोग्निर्गायत्री । अग्निद्वयसंसर्गप्रधानाज्यहोमेविनियोगः । ॐ त्वंह्यग्नेअग्निनाविप्रोविप्रेणसन्त्सता । सखासख्या
समिध्यसेस्वाहा । अग्नयइदंनमम । २ । अस्तीदमितित्रिचउक्तः ।५। पाहिनोअग्नइतित्रिचस्यप्रगाथोग्निर्बृहती अंत्येद्वेबृहत्यौ ।
विनियोगःप्राग्वत् । ॐ पाहिनोअग्नइत्युक्त्वा । ६ । ॐ पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव । त्वामिद्धिनेदिष्ठंदेवता
तयआपिंनक्षामहेवृधेस्वाहा । अग्नयइदंनमम । ७ । ॐ आनोअग्नेवयोवृधंरयिंपावकशंस्यम् । रास्वाचनउपमातेपुरुस्पृहंसुनीती

स्वयंशस्तरंस्वाहा । अग्नयइदंनमम ८ ॥ एवंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यआयतनेग्निंनिधाययथापूर्वपरिचरेत् ॥ इति श्रीनारायणभट्टविरचितेप्रयोगरत्नेअग्निद्वयसंसर्गप्रयोगः ॥ ॥ ॥

अथौपासनाख्यःसायंप्रातर्होमोविधीयते ॥ सचविवाहहोमोत्तरकालीनेसायंकालेभद्राव्यतीपातादिसंभवेपिकृतेअकृते वागृहप्रवेशनीयहोमेप्रारंभणीयः । यद्यह्निविवाहहोमस्तदासायंकालेहोमारंभः । रात्रौविवाहहोमेउत्तरेद्युःसायंहोमारंभः । तत्रकर्तारः स्वयंस्वस्यासंभवेपत्न्यादयश्च । तत्रभगवान्—पत्नीकुमारीपुत्रोवाशिष्योवापियथाक्रमम् । पूर्वपूर्वस्यचाभावेविदध्यादुत्तरोत्तरः। दक्षः—ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथविट्पतिः । एतैरेवहुतंयत्तुतद्धुतंस्वयमेवतु। विट्पतिर्जामाता। एतैस्तुयजमानानुज्ञयापत्न्यनुज्ञयावाहोतव्यम् । पर्वणितुसायंहोमःस्वयमेवकार्योनान्येन । अन्येनहोमोदंपत्योःसंनिधानेअन्यतरसंनिधानेवाकार्यः । उभयोरसमक्षंहुतमहुतमेव ॥ ॥ अथाग्निप्रादुष्करणकालः ॥ प्रादुष्करणमग्नेःप्रज्वलनं । कात्यायनः—सूर्येतुशैलमप्राप्तेषड्विंशद्भिरिहांगुलैः । प्रादुष्करणमग्नीनांप्रातर्भासामदर्शने । एतत्प्रादुष्करणकालात्ययेसमस्तव्याहृतिभिरेकाज्याहुतिःकार्या ॥ ॥ अथहोमकालः ॥ आश्वलायनः—सम्यङ्निम्लोचतिरवौसायंचजुहुयुस्तदा । अथप्रातर्हुतिर्नित्यमुदितेर्केयथाविधि । कात्यायनोपि—यावत्सम्यङ्नभाव्यंतेनभस्यृक्षाणिसर्वतः । लोहितत्वंतुनापैतितावत्सायंतुहूयते । मनुः—लेखामात्रस्तुदृश्येतरश्मिभिस्तुसमन्वितः । उदितंतुविजानीयात्तत्रहोमंप्रकल्पयेत् । अनुकल्पमाहसूत्रकारः—प्रदोषांतोहोमकालः संगवांतःप्रातस्तमतिनीयचतुर्गृहीतमाज्यंजुहुयात् । अस्तोत्तरत्रिमुहूर्तउदयोत्तरश्चत्रिमुहूर्तःक्रमेणसायं

प्रातश्चहोमकालइतिफलितोर्थः । अत्रमुख्यकालातिक्रमेसमस्तव्याहृतिभिरेकाज्याहुतिः ।—प्रायश्चित्तविशेषेणयत्रनोक्तोभवे द्विधिः । होतव्याज्याहुतिस्तत्रभूर्भुवःस्वरितीतिचेतिकारिकोक्तेः । गौणकालातिक्रमेतुमनोज्योतिरितिमंत्रेणचतुर्गृहीताज्याहुतिरेकेइतिप्रायश्चित्तविवेकः ॥ ॥ अथहोमद्रव्याणिगृह्यपरिशिष्टे—पयोदधिसर्पिर्यवागूरोदनंतंडुलाःसोमास्तैलमापोव्रीहयोयवास्तिलाइतिहौम्यानि तंडुलानीवारश्यामाकयावनालानांव्रीहिशालियवगोधूमप्रियंगवःस्वरूपेणापिहौम्यास्तिलाःस्वरूपेणैवशतंचतुःषष्टिर्वाहुतिर्व्रीहितुल्यानांतदर्धंतिलानांतदर्धंसर्पिस्तिलयोस्तैलंचतिलजंतिलातसीकुसुंभानां येनप्रथमांदेवतांजुहुयात्तेनैवद्वितीयांजुहुयाद्येनचसायंजुहुयात्तेनैवप्रातरितिप्रतिनिधिवर्जं । बृहस्पतिस्त्वाहुतिपरिमाणमाह—प्रस्थधान्यंचतुःषष्टेराहुतेःपरिकीर्तितम् । तिलानांतुतदर्धंचतंडुलाव्रीहिभिःसमाः । प्रस्थश्च—प्रसृतिद्वितयंमानंप्रस्थंमानचतुष्टयमिति । बौधायनस्तु—व्रीहीणांवायवानांवाशतमाहुतिरिष्यते । अगस्त्यः—द्रवद्रव्यस्यमानंस्याद्धारागोकर्णदीर्घिका । सिद्धांतशेखरे—अन्नंग्राससमंप्रोक्तंलाजामुष्टिमितामताः ॥ होमप्रकारउक्तःसंग्रहे—द्रवंहविःस्रुवेणैवपाणिनाकठिनंहविः । अंगुल्यग्रैर्नहोतव्यंनकृत्वांगुलिभेदनम् । अंगुल्युत्तरपार्श्वेनहोतव्यमितितुस्मृतिः । नित्यहोमेपूर्वमुपरिचसमिधमग्नावादधीत । तल्लक्षणंचस्मृत्यर्थसारे—पालाशखदिराश्वत्थशम्युदुंबरजासमित् । अपामार्गार्कदूर्वाश्चकुशाश्चेत्यपरेविदुः । सत्वचःसमिधःकार्याऋजुश्लक्ष्णाःसमास्तथा । शस्तादशांगुलास्तास्तुद्वादशांगुलिकास्तथा । आर्द्राःपक्काःसमच्छेदास्तर्जन्यंगुलिवर्तुलाः । अपाटिताश्चाद्विशाखाःकृमिदोषविवर्जिताः । ईदृशाहोमयेत्प्राज्ञःप्राप्नोतिविपुलांश्रियम् । अयंचहोमआयतनेस्थंडिलेवाअग्निं

प्रतिष्ठाप्यतत्रकार्यः। कुंडेवास्थंडिलेवापीत्युक्तेः। आयतनंचोक्तंसंग्रहे—अरत्निमात्रमङ्ग्यर्थंकार्यमायतनंबुधैः। पिशीलमात्रमित्येकेतदप्यंसांतरंभवेत् (?)। स्थंडिललक्षणंत्वग्निमुखप्रकरणेउक्तम् ॥ ॥ ॥

अथौपासनप्रयोगः ॥ शुद्धेदेशेचतुर्विंशत्यंगुलंसार्धद्वाविंशत्यंगुलप्रमाणंवाषोडशांगुलप्रमाणंवाचतुरस्रंप्रत्येकंचतुरंगुलोत्सेधमेखलात्रययुक्तमायतनं उक्तयुक्त्यास्थंडिलंवानिर्मायगोमयेनोपलिप्योल्लिख्य तत्रयथालाभंसिकतापद्मपत्रादिसंभारान्निक्षिप्यतत्रगृह्याग्निंपूर्ववत्प्रतिष्ठाप्यविवाहोत्तरसंध्याकालादारभ्यौपासनंकुर्यात् । तच्चैवं । यजमानःकृतसंध्यावंदनःपूर्वप्रादुष्कृतस्याग्नेःपश्चिमतउपविश्याचम्यप्राणानायम्यदेशकालौनिर्दिश्य अग्निरूपपरमेश्वरप्रीत्यर्थंऔपासनंकरिष्यइतिसंकल्प्याग्नौचत्वारिशृंगागौतमोवामदेवोअग्निस्त्रिष्टुप् । अग्निमूर्तिध्यानेविनियोगः । ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश । सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः। त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः। स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा। बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवम् । तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् । आत्माभिमुखमासीनएवंरूपोहुताशनः। अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखःममसंमुखोवरदोभवेतिवेदोक्तैःपौराणोक्तैश्चमंत्रैर्यज्ञपुरुषस्यमूर्तिंध्यात्वा सोदकेनपाणिनासमंतात्प्रदक्षिणंत्रिःपरिमृज्यपूर्ववत्परिस्तीर्यत्रिःपर्युक्ष्य प्रागुक्तद्वादशद्रव्येषुमध्येसुप्रक्षालितार्द्रसिततंडुलप्रभृतिपात्रमग्नेरुत्तरतोनिधाय ज्वलतादर्भेणावज्वल्यप्रोक्ष्यतेनैवत्रिःपर्यग्निकृत्वातदुल्मुकंनिरस्य अग्नेःपश्चिमतआस्तीर्णकुशेषुसमिधासहहविर्निधाय । विश्वानिनइतितिसृणामात्रेयो

वसुश्रुतोग्निस्त्रिष्टुप् द्वयोरग्न्यर्चनेअंत्यायाउपस्थानेविनि० । ॐ विश्वानिनोदुर्गहाजातवेदः । ॐ सिंधुंननावादुरितातिपर्षि । ॐ अग्नेअत्रिवन्नमसागृणानः । ॐ अस्माकंबोध्यविताततनूनाम् । ॐ यस्त्वाहृदाकीरिणामन्यमानः । ॐ अमर्त्यंमर्त्योजोहवीमि । ॐ जातवेदोयशोअस्मासुधेहि । ॐ प्रजाभिरग्नेअमृतत्वमश्याम् । ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनम् । अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति । इतिपूर्वाभ्यामृग्भ्यांप्रतिपादमष्टदिक्षुगंधादिनाग्निमभ्यर्च्यतृतीययावद्धांजलिर्नमस्कृत्य दक्षिणंजान्वाच्य समिधमग्नौतूष्णींप्रक्षिप्य अपउपस्पृश्य समिधिदीप्तायांविधूमज्वालांगारेग्नौगतसंख्याकान् प्रस्थस्यचतुःषष्टितमभागमितान्वातंडुलान्दक्षिणहस्तेनादाय सव्यपाणिंहृदिनिधाय अंगुल्युत्तरपार्श्वेनसमिन्मूलतोद्व्यंगुलप्रदेशे ॐ अग्नयेस्वाहेतिहुत्वा अग्नयइदंनममेतित्यक्त्वा । तस्याऐशानदेशेपूर्वाहुतेर्भूयसीमाहुतिंप्रजापतिपदंचतुर्थ्यंतंमनसाध्यायन्स्वाहेत्युच्चार्यासंसृष्टांहुत्वा प्रजापतयइदंनममेतित्यक्त्वा पूर्ववदुपविश्यपरिस्तरणानिविसृज्य परिसमूहनपर्युक्षणेकृत्वोपस्थानंकुर्यात् । तत्रमंत्राः । अग्नआयूंपीतितिसृणांशतंवैखानसाऋषयःअग्निःपवमानोदेवतागायत्रीछंदः । अग्न्युपस्थानेवि० । ॐ अग्नआयूंपिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनाम् । अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयम् । अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यम् । दधद्रयिंमयिपोषम् । अग्नेत्वंनइतिचतसृणागौपायनालौपायनावावंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः अग्निर्देवताद्विपदाविराट्छंदः । अग्न्युपस्थानेवि० । ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः । सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ।

तंत्वांशोचिष्ठदीदिवःसुम्नायंनूनमीमहेसखिभ्यः । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । प्रजापत्युपस्थानेवि० । ॐ प्रजापते
नत्वदेतान्यन्योविश्वांजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणाम् । तंतुंतन्वन्देवाअग्निर्ज
गती । अग्न्युपस्थानेवि० । ॐ तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् । अनुल्बणंवयतजोगु
वामपोमनुर्भवजनयादैव्यंजनम् । हिरण्यगर्भइत्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । प्रजापत्युपस्थानेवि० । ॐ हिर
ण्यगर्भःसमवर्ततताग्रेभूतस्यजातःपतिरेकआसीत् । सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम । एतैर्मंत्रैर्वायव्यदेशे
प्रह्वःकृतांजलिरग्निमीक्षमाणउपस्थाय पुनरुपविश्यन्यूनातिरिक्ताच्छिद्रत्वार्थविष्णुस्मरणंकृत्वा अनेनहोमेनभगवान्श्रीपरमे
श्वरःप्रीयतांइत्युक्त्वाग्निंसंभारयेत् ॥ ॥ एवंप्रातरुदयात्पूर्वप्रादुष्करणंकृत्वाहोमकालेपूर्ववत्पूर्वांगानिकृत्वा सूर्यायस्वाहेतिसा
यंद्रव्येणैवप्रथमाहुतिंहुत्वा सायंकालवद्द्वितीयाहुतिंहुत्वा परिसमूहनादिकृत्वोपस्थानंकुर्यात् । तत्रमंत्राः । सूर्योनोदिवस्पात्वि
त्यस्यचक्षुःसूर्योगायत्री । सूर्योपस्थानेवि० । ॐ सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । उदुत्यंकाण्वःप्र
स्कण्वःसूर्योगायत्री । सूर्योपस्थानेवि० । ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः । दृशेविश्वायसूर्यम् । चित्रंदेवानामांगिरसः
कुत्सःसूर्यस्त्रिष्टुप् । सूर्योपस्थानेवि० । ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीअंतरिक्षं
सूर्यआत्माजगतस्तस्थुषश्च । नमोमित्रस्येत्यभितपाःसूर्योजगती । सूर्योपस्थानेवि० । ॐ नमोमित्रस्यवरुणस्यचक्षसेमहो
देवायतदृतंसपर्यत । दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत । एतैर्मंत्रैश्चतुर्भिःसूर्यमुपस्थाय । हिरण्यगर्भइतिच

द्वाभ्यांप्रजापतिंचोपस्थायोंचमेइतिप्रातर्होमेविशेषः । ततईश्वरार्पणंकुर्यात् । इतिप्रयोगरत्नेसायंप्रातरौपासनहोमविधिः ॥

अथाशौचेप्राप्तेहोमविधिः॥ ॥ जननशावाशौचयोर्ऋत्विगादिनासायंप्रातर्होमौकारयेत् । स्वयंचद्रव्यत्यागंकुर्यात् । ऋत्विगाद्यन्याभावेतुआशौचपातात्पूर्वंहोमांतेवक्ष्यमाणप्रकारेणाग्निसमारोपणंकृत्वा सूतकनिवृत्तौस्नात्वाकृतनित्यक्रियोऽग्निंप्रतिष्ठाप्य प्राणानायम्यदेशकालौसंकीर्त्य ममनित्यहोमातिक्रमजन्यदोषपरिहारार्थंप्रायश्चित्तपूर्वकंअतिक्रांतहोमान्करिष्यइतिसंकल्प्य परिसमूहनादिकृत्वा अग्नेःपश्चिमतःसपवित्रेपात्रेआज्यमासिच्य अंगारानायतनादुत्तरतोवहिःकृत्यतेष्वाज्यपात्रंनिधायतृणेनावज्वल्यदर्भाग्रद्वयंक्षिप्त्वातेनैवाज्यंत्रिःपर्यग्निकृत्वोल्मुकंनिरस्य कर्षन्निवोदगुद्वास्यअंगारानग्नावतिसृज्यसवितुष्ट्वेतिमंत्रेणसकृद्भिस्तूष्णीमेवंत्रिरुत्पूयपवित्रेप्रोक्ष्याग्नौप्रहृत्याज्यंपश्चिमतोदर्भेष्वासाद्यस्रुक्स्रुवयोःसंमार्जनंकृत्वाज्यंस्रुवेणस्रुचिचतुर्गृहीत्वा । ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु । याइष्टाउषसोयाअनिष्टास्ताःसंतनोमिहविषाघृतेनस्वाहा । मनसेज्योतिषइदंनममेतित्यक्त्वा नित्यहोमार्थंपूर्ववत्तंडुलान्संस्कृत्य होमवत्परिसमूहनादिसमित्प्रक्षेपणांततंत्रपूर्वकंअतीतकालादारभ्यक्रमेणद्वेद्वेआहुतीहुत्वातत्कालहोमंचकृत्वा अग्निंसूर्यप्रजापतिंचोपस्थायपरिसमूहनाद्यंगजातंसकृत्कुर्यात् ॥

अथापत्कालेकर्तव्योहोमद्वयसमासप्रयोगः ॥ ॥ पूर्ववत्सायंकालीनाहुतिद्वयंहुत्वा पर्युक्षणादिकृत्वा कंचित्कालंनिमी

---

१ सायनित्यहोमोत्तरंआचमनादिदेशकालावुत्कीर्त्यममोपात्तदुरितेत्यादि अमुकापन्निमित्तंहोमद्वयसमस्तहोमकरिष्ये इतिसंकल्प्यनिर्दिष्टहोमकृत्वोपस्थानकुर्यात् ।

ल्यानिमील्यवापुनःपर्युक्षणादिसमित्प्रक्षेपणांतंकृत्वा श्वःकर्तव्यप्रातराहुतिद्वयमपकृष्यहुत्वोपस्थानंकुर्यात् । एकैवचेत्सभि
त्सासायंहोमादावेव । उपस्थानेमंत्राः—हविष्पांतमितिपंचर्चस्यसूक्तस्यमूर्धन्वान्वामदेवःसूर्यवैश्वानरौत्रिष्टुप् । उपस्थानेवि०।
ॐ हविष्पांतमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टमग्नौ । तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत । गीर्णभुवनंतमसाप
गूह्ळमाविःस्वरभवज्जातेअग्नौ । तस्यदेवाःपृथिवीद्यौरुतापोरणयन्नोषधीःसख्येअस्य । देवेभिर्न्विषितोयज्ञियेभिरग्निंस्तोषाण्य
जरंबृहंतम् । योभानुनापृथिवींद्यामुतेमामाततानरोदसीअंतरिक्षम् । योहोतासीत्प्रथमोदेवजुष्टोयंसमांजन्नाज्येनावृणानाः ।
सपतत्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः । यज्जातवेदोभुवनस्यमूर्धन्नतिष्ठोअग्नेसहरोचनेन । तंत्वाहेममतिभिर्गी
र्भिरुक्थैःसयज्ञियोअभवोरोदसिप्राः । एभिर्मंत्रैःप्राजापत्यैश्चोपस्थायपरिसमूहनपर्युक्षणाद्यंगजातंसकृत्कुर्यात् ॥ इत्यापत्का
लेकर्तव्योहोमद्वयसमासप्रयोगः ॥ ॥ ॥ ॥ ॥

अथगुर्वादिपक्षहोमः ॥ ॥ तत्रप्रतिपदिसायंकालेसमित्प्रक्षेपणांतंपूर्वांगजातंकृत्वाहुतिप्रमाणेनतुंडुलान्पात्रद्वयेप्रतिपात्रं

१ सायंपक्षहोमान्करिष्यइतिसंकल्प्यध्यानार्चनांतंकृत्वातत्रसंस्कृतेहोमद्रव्येआहुतिप्रमाणेनइदमग्नयइत्यादिप्रत्येकंमंत्रेणपंचदशवारं यथादिन
संख्ययावा गृहीत्वापात्रांतरेस्थाप्यसकृत्समिधमग्नौप्रक्षिप्यप्रदीप्तायांपूर्वगृहीतहौम्यंसर्वगृहीत्वाग्नयेस्वाहेतिसकृद्धुत्वाद्वितीयंसर्वपूर्ववद्गणनयागृही
त्वाप्रजापतयेस्वाहेतिहुत्वोपस्थानंसायकालीनंसकृद्देवेति । द्वितीयायांप्रातस्तथैवसर्वसूर्यायस्वाहाप्रजापतयेस्वाहेतिआहुतिद्वयंप्रातःकालीनमुपस्थान
अग्निसंरक्षणपूर्ववत् समारोपणंवातदाननित्यमितिज्ञेयम् ।

चतुर्दशवारंगृहीत्वाहोमकालेप्रथमपात्रस्थानग्नयेस्वाहेतिसर्वान्जुहुयात् । ततःप्राजापत्यार्थंगृहीतान्प्रजापतिशब्दंचतुर्थ्यंतं
मनसाध्यायन्स्वाहेतिहुत्वोपस्थानाद्यंगजातंसकृत्कुर्यात् । एवंद्वितीयायांप्रातःसमित्प्रक्षेपणादिपूर्ववत्कृत्वासूर्यायस्वाहेति
पूर्ववद्धुत्वासायंकालीनोत्तराहुतिवद्द्वितीयाहुतिंचहुत्वोपस्थानाद्यंगजातंसकृत्कुर्यात् । पक्षमध्येनापत्तावागामिचतुर्दशीसायं
कालीनहोमांतान्शेषहोमान्सायंसमस्येत् । पर्वप्रातर्होमांतांश्चप्रातःशेषहोमान्समस्येत् । सर्वथापर्वसायंहोमःप्रतिपत्प्रा
तर्होमश्चपृथगेवहोतव्यौ । अत्रपूर्ववदग्निमभिरक्षेत् । अंतरापन्निवृत्तौतुतदारभ्यपूर्ववत्सायंप्रातर्होमान्यथाकालंकुर्यात् ॥

अथसभार्यसप्रवासेप्रसक्तेअग्निसमारोपविधिः ॥ ॥ नित्यकालहोमानंतरं । अयंतेयोनिरित्यस्यगाथिनोविश्वामित्रोग्निर
नुष्टुप् । अग्निसमारोपणेवि० । ॐ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः । तंजानन्नग्नआसीदाथानोवर्धयागिरः । इत्यने
नारणिद्वयेअग्निंसमारोपयेत् । अथवाअनेनैवाश्वत्थसमिधिसमारोपयेत् । यद्वा । यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मा
त्मानम् । अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि । यज्ञोभूत्वायज्ञमासीदस्वांयोनिं । जातवेदोभुवआजायमानःसक्षयएहि ।
इतिमंत्रेणपाणीप्रताप्यआत्मनिसमारोपयेत् । तत्रप्रादुष्करणकालेअरणौसमारोपेअरणीनिर्मंथ्य । ॐ प्रत्यवरोहजातवेदःपुन
स्त्वंदेवेभ्योहव्यंवहनःप्रजानन् । प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः । इत्यनेनस्थंडिलेग्निंप्रतिष्ठापयेत् ।
अश्वत्थसमित्समारोपणपक्षेश्रोत्रियागारादग्निमाहृत्यसंस्कृतेस्थंडिलेप्रतिष्ठाप्यप्रत्यवरोहेतिमंत्रेणतांसमिधंनिदध्यात् । आत्म
समारोपपक्षेसर्वदाऽस्पृश्यस्पर्शनंजलेनिमज्ज्यस्नानंस्त्रीगमनंचाकुर्वन्मूत्रपुरीषोत्सर्गेशौचमकृत्वाचिरकालमतिष्ठंश्चहोमकाले

आत्मसमारूढमग्निमुच्छ्वासरूपेणप्रत्यवरोहेतिमंत्रेणलौकिकाग्नौनिदध्यात् । एवंयथाधिकारमग्निंप्रतिष्ठाप्यकालद्वयेएककाले वापूर्ववज्जुहुयात् । इदंसमारोपणंद्वादशरात्रपर्यंतमेवकुर्यात् ॥ ॥ ॥ ॥

.अथपुरुषस्यैवप्रवासकालेकर्तव्यम् ॥ ॥ प्रवासश्चसाग्निकेनद्रव्यार्जनादिदृष्टकार्यार्थमेवकेवलेनपुरुषेणकार्यः नतुतीर्थयात्राद्यदृष्टार्थकार्यार्थं । तत्रहोमांतेपूर्वोक्तमंत्रैरुपस्थायपुनःप्रवासार्थं । ॐ अभयंवोभयंमेस्त्वितिमंत्रेणाग्निमुपस्थाय द्विमासमध्यवर्तिकालेष्वन्यतमकालपर्यंतंप्रोष्यपुनःस्वगृहसमीपमेत्य । ॐ ग्रहामाविभीतोपवःस्वस्त्येवोस्मासुचप्रजायध्वंमाचवोगोपतीरिषदितिमंत्रेणगृहंनिरीक्ष्य । ॐ गृहानहंसुमनसःप्रपद्येवीरघ्नोवीरवंतःसवीरान् । इरांवहंतोघृतमुक्षमाणास्तेष्वहंसुमनाः संविशानीतिमंत्रेणगृहंप्रविश्य । ॐ शिवंशग्मंशंयोःशंयोरितिपुनस्त्रिरनुवीक्ष्यहोमकालेउपस्थानांतंकृत्वा । ॐ अभयंवोभयंमेस्त्वितिपुनरग्निमुपतिष्ठेत् । ततोज्येष्ठपुत्रशिरउभाभ्यांपाणिभ्यांपरिगृह्य । ॐ अंगादंगात्संभवसिहृदयादधिजायसे । आत्मावैपुत्रनामासिसजीवशरदःशतमितिमंत्रंजपित्वामूर्धनित्रिराजिघ्रेत् । एवमितरेषांचपुत्राणांक्रमेणकृत्वाप्रत्तदुहितॄणांतूष्णीमेवशिरोजिघ्रेत् । एतत्पुत्रेपिप्रोष्यागतेभवति । अवगतमप्यप्रियंवाप्रवासादागतंप्रतितदहर्निनयेयुः ॥ ॥ ॥

अथाग्निसंसर्गदोषेप्रायश्चित्तम् ॥ ॥ स्वगृह्याग्निरन्यगृह्याग्निनासंसृष्टश्चेदग्नीविभज्योभौसमित्समारोपणंकुर्यात् । ततः पूर्वहोतासमिधोग्निमवरोप्य देशकालौसंकीर्त्यसमिद्वयमादायास्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा विविचिमग्निंप्रधानदेवतांचरुद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वासमिद्वयमग्नावाधायपरिसमूहनादिपूर्णपात्रनिधा

नांतंकृत्वा अग्नयेविविचयेत्वाजुष्टंनिर्वपामीतिचतुरोमुष्टीन्निरुप्य प्रोक्षणाद्याज्यभागांतंकृत्वा अग्नयेविविचयेस्वाहेतिहुत्वा स्विष्टकृदादिहोमशेषंसमापयेत्। अनुपक्रांतदर्शपूर्णमासश्चेत्पूर्ववदाज्यंसंस्कृत्यस्रुवेणद्वादशवारंस्रुचिगृहीत्वा अग्नयेविविच्य येस्वाहेतिस्रुचापूर्णाहुतिंहुत्वाकालहोमंचरेत्। पश्चाद्धोतातुअग्नयेपथिकृतेजुहुयात्। शवाग्निनासंसृष्टश्चेदग्नयेशुचयेस्वाहेतिं जुहुयात्। पचनाग्निनासंसृष्टश्चेदग्नयेसंसर्गायस्वाहेतिजुहुयात्। वैद्युतेनसंसृष्टश्चेदग्नयेप्सुमतेस्वाहेतिजुहुयात् ॥ ॥

अथनष्टाग्नेःपुनःसंधानप्रयोगः ॥ ॥ तत्रप्रमादादग्निनाशेयजमानःपत्न्यासहस्नानादिनाशुचिर्भूत्वादेशकालौसंकीर्त्यम मप्रमादादिनाग्नित्यागदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रायश्चित्तहोमंकरिष्ये इतिसंकल्प्य । तत्रत्रिरात्रमग्नित्यागेप्रा णायामशतं । विंशतिरात्रेएकदिनमुपवासः। मासद्वयेत्रिरात्रोपवासः। अब्देप्राजापत्यकृच्छ्रं। एवंत्यागकालानुसारेण प्रायश्चित्तंकृत्वा आयतनंगोमयेनोपलिप्योल्लिख्य यथालाभंसिकतादिसंभारान्निदध्यात्। तेयथा—सिकताःपद्मपत्रंचवराह विहताचमृत्। सूदमाखूत्करंचोषंवल्मीकवपशर्कराः। उदुंबराशनिहतंपर्णाश्वत्थविकंकताः। शम्यंकुराश्चविज्ञेयाआधानद्र व्यसंज्ञिताः। ततःश्रोत्रियागारादाहृतमग्निंविधिवत्प्रतिष्ठाप्यसमिध्य प्राणानायम्यदेशकालौसंकीर्त्य ममप्रमादाद्विच्छिन्न स्यगृह्याग्नेःपुनःसंधानंकरिष्ये। इतिसंकल्प्याज्यंपूर्ववत्संस्कृत्यस्रुवंचसंमृज्य। अयाश्चेतिविमदोऽयाअग्निःपंक्तिः विच्छिन्नस्य गृह्याग्नेःपुनःसंधानाज्यहोमेविनियोगः। ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि । अयासावयसाकृतोयासन्हव्य मूहिषेयानोधेहिभेषजंस्वाहा। इतिमंत्रेणस्रुवेणाज्यंहुत्वासायंकालपर्यंतंपत्न्युपवसेत्तदशक्तौयजमानोवा । सायंकालेतुपूर्वव

न्नित्यहोमंकुर्यात् । द्वादशाहपर्यंतमयमग्न्युत्पत्तिविधिः । तदूर्ध्वंतुवक्ष्यमाणोविवाहहोमविधिः । आलस्यादिनाबुद्धिपूर्वक मग्नित्यागेतत्तत्कालानुसारेणेदंप्रायश्चित्तं—द्वादशाहपर्यंतंत्रिरात्रमुपवासः । अब्दपर्यंतंमासंपयोव्रतं । द्विवर्षपर्यंतंचांद्रायणं । त्र्यब्दपर्यंतंचांद्रायणंसोमायनंच । तदूर्ध्वमब्दकृच्छ्रं । धनिनोगोदानंचेतिप्रयोगपारिजाते । स्मृत्यर्थसारेतु—द्वादशाहातिक्रमे त्र्यहमुपवासः । मासातिक्रमेद्वादशाहमुपवासः । संवत्सरातिक्रमेमासमुपवासः पयोभक्षणंवाइतिविशेषः । एवंकालविलंब श्चेत्संकल्पपूर्वकंप्रायश्चित्तंकृत्वापुनःसंधानं । यत्रतुअग्निविच्छेदनिमित्तेनकेनचिदग्निविच्छेदःकालविलंबश्चनास्तितत्राकृत्वै वप्रायश्चित्तंपुनःसंधानंकार्यम् ॥ ॥ अथविच्छिन्नस्यगृह्याग्नेःपुनःसंधानप्रयोगः ॥ पत्न्यासहकृतस्नानादिःकृतनित्यक्रियो देशकालौसंकीर्त्यअमुककालादारभ्यएतावंतंकालंगृह्याग्निविच्छेदजनितप्रत्यवायपरिहारार्थएतावत्प्रायश्चित्तममुकप्रत्याम्नाये नकरिष्यइतिसंकल्प्य अग्निविच्छेदकालगणनयास्मृत्युक्तंप्रायश्चित्तंदंपतीसहकुर्यातांनपृथक् । समासेतस्मिन्नग्निविच्छेदेनलु प्तानांसायंप्रातर्होमानांतथादर्शपूर्णमासस्थालीपाकानांचसंपत्तिपर्याप्तमिदंव्रीह्याज्यादितद्रव्यंवाब्राह्मणेभ्यःसंप्रददे इतिलुप्त सायंप्रातर्होमस्थालीपाकगणनयातत्पर्याप्तंव्रीह्याज्यंचब्राह्मणेभ्योदद्यात् । ततःशुभेकालेशुचिराचांतःप्राणानायम्यदेशकालौ स्मृत्वाविच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्येइतिसंकल्प्य स्थंडिलोपलेपनोल्लेखनाभ्युक्षणाग्निप्रतिष्ठापनानिकृत्वान्वादध्यात् । तद्यथा द्वेसमिधौगृहीत्वापुनःसंधानहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्येइतिसंकल्प्यास्मिन्नन्वाहितेऽग्नौजातवेदसमग्निमि ध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येन अत्रप्रधानं त्रिरग्निंपवमानंसकृदग्निंप्रजापतिंचाज्येन अर्यमाग्निंवरुणाग्निंपूषाग्निं

प्रजापतिंचलाजद्रव्येण सूर्यासावित्रींचतुर्वारमाज्यद्रव्येण शेषेणस्विष्टकृतमित्यादि परिसमूहनादिप्राकृतम् । पात्रासादने विशेषः । प्रोक्षणींस्रुवंप्रणीतामाज्यपात्रंलाजशूर्पंइध्मावर्हिश्चदधिप्राशनपक्षेदधिचासादयेत् । आज्यसंस्कारादिप्राकृतंतत्रा ज्येनसहलाजानामपिपर्यग्निकरणम् । आज्योत्पवनासादनयोःकृतयोर्लाजानांत्रिःप्रोक्षणम् । स्रुवसंमार्जनादिपत्न्यान्वारब्ध इध्माधानाद्याघारांतंप्राकृतंकुर्यान्नचक्षुषी । अथप्रधानम् । अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः । अग्निःपवमानोदे वता गायत्रीच्छंदः । गृह्याग्निपुनःसंधानप्रधानाज्यहोमेवि० । ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छु नांस्वाहा । अग्नयेपवमानायेदं० । ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयंस्वाहा । अग्नयेपव० । ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । अग्नयेपव० । त्वमर्यमाभवसुश्रुतोग्निस्त्रिष्टुप् । पुनःसंधान प्रधानाज्यहोमेवि० । ॐ त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि । अंजंतिमित्रंसुधितंनगोभिर्यद्दंपतीसमनसा कृणोषिस्वाहा । अग्नयइदं० । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । पुनःसंधानप्रधानाज्यहोमेवि० । ॐ प्रजापतेनत्वदे तान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । प्रजापतयइदं० ॥ ५ ॥ अथपत्न्याःप्रक्षालितेंजलौपतिराज्येनोपस्तीर्यद्विर्लाजानोप्यपंचावत्तीतुत्रिरोप्यशूर्पस्थानभिघार्यअंजलिस्थानप्यभिघार्यतिष्ठन् तिष्ठंत्याअंजलिंस्वकराभ्यांधृत्वाअर्यमणंवरुणंपूषणमितितिसृणांवामदेवोर्यमाग्निर्वरुणाग्निःपूषाग्निरनुष्टुप् । गृह्याग्निपुनःसं धानलाजहोमेवि० । अर्यमणंनुदेवंकन्याअग्निमयक्षत । सइमांदेवोअर्यमाप्रेतोमुंचातुनामुतस्वाहा । इतिपठितमंत्रांते

अंजलिमविच्छिंदंती अंगुल्यग्रैरंगुलिवामपार्श्वेनत्वापत्नीजुहुयात् । अर्यमाग्नयइदं० एवमग्रेपि । ॐ वरुणंनुदेवंकन्याअग्नि
मयक्षत । सइमांदेवोवरुणःप्रेतोमुंचातुनामुतस्वाहा । वरुणाग्नयइदं० । ॐ पूषणंनुदेवंकन्याअग्निमयक्षत । सइमांदेवःपूषा
प्रेतोमुंचातुनामुतस्वाहा । पूषाग्नयइदं० । ततःशूर्पकोणेनशिष्टान्सर्वांल्लाजान्पतिःपत्नीवाभ्यात्मंप्रजापतिंध्यायन्जुहुयात् ।
प्रजापतयइदं० । लाजानांस्विष्टकृन्नास्ति । तत उपविश्याज्यंपतिर्जुहुयात् । आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासा
वित्रीआद्याजगतीद्वितीयात्रिष्टुवंत्येद्वेअनुष्टुभौ । पुनःसंधानाज्यहोमेवि० । ॐ आनःप्रजांजनयतुप्रजापतिराजरसायसमन
क्त्वर्यमा । अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदेस्वाहा । सूर्यासावित्र्याइदं० । ॐ अघोरचक्षुरपतिघ्न्ये
धिशिवापशुभ्यःसुमनाःसुवर्चाः । वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदेस्वाहा । सूर्यासावित्र्याइदंनमम । ॐ इमां
त्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु । दशास्यांपुत्रानाधेहिपतिमेकादशंकृधिस्वाहा । सूर्यासावित्र्याइदंनमम । ॐ सम्राज्ञीश्वशु
रेभवसम्राज्ञीश्वश्र्वांभव । ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषुस्वाहा । सूर्यासावित्र्याइदं० । समंजंत्वित्यस्यसूर्यासावि
त्रीसूर्यासावित्र्यनुष्टुप् । दधिप्राशनेवि० आज्यशेषेणहृदयांजनेवावि० । ॐ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ । संमात
रिश्वासंधातासमुदेष्ट्रीदधातुनौ । एतेनस्वयंदधिप्राश्नीयात् । आज्यशेषेणहृदयांजनंवाकुर्यात् । पत्न्यैचदधिप्रयच्छेत् ।
साचतूष्णींप्राश्नीयात् । स्वहृदयांजनपक्षेपत्न्याअपितूष्णींहृदयांजनम् । अथाज्येनयदस्यकर्मणइतिस्विष्टकृतंहुत्वाइध्मसंनह
नादिकर्मशेषंसमापयेत् । अत्रकारिका । उपलेपादिकंकुर्यादाघारांतंविवाहवत् । विवाहाज्याहुतीर्हुत्वालाजहोमोभवेदिह ।

गृहप्रवेशनीयाश्चहुत्वास्याद्धृदयांजनम् । परिणीयादिनास्त्यत्रलाजानावपतिस्वयम् ॥ इतिप्र० गृह्याग्निपुनःसंधानप्रयोगः ॥

अथनास्तिक्याद्विसृष्टाग्नेःपुनःसंधानम् ॥ ॥ तत्रकर्तासंकल्पपूर्वकंस्त्रियासहोपोष्यापरेद्युःकृतनित्यक्रियःसंकल्पपूर्वकं प्रायश्चित्तंकुर्यात् । तद्यथा । द्वादशाहपर्यंतंयथाशक्तिसुवर्णदानम् । मासद्वयपर्यंतंकृच्छ्रम् । मासचतुष्टयपर्यंतमतिकृच्छ्रम् । षण्मासपर्यंतंपराकः । ततोब्दपर्यंतंमासंपयोव्रतम् । अब्देपूर्णेत्रैमासिकंव्रतम् । ततःप्रतिवर्षंत्रैमासिकावृत्तिरिति । ततःकालगणनयासायंप्रातर्होमदर्शपूर्णमासस्थालीपाकहोमद्रव्यदानम् । ततःशुभदिनेऽपराह्णेसभार्योदेशकालौसंकीर्त्यनास्तिक्याद्विसृष्टाग्नेःपुनःसंधानंकरिष्यइतिसंकल्प्य । आयतनोपलेपनादियथामीलितसंभारनिधानांतंकुर्यात् । संभाराश्च । पलाशोदुंबराश्वत्थशमीवैकंकतांबुजम् । वल्मीकोखरवाराहमूपकोत्खातमृत्तिकाः । शर्कराःसिकताःसूदाशंपाध्वस्ततरुत्वचः । यथालाभंसमाकीर्यपावनाग्निंसमुद्धरेदिति । ततः । ॐ इदंतएकंपरऊंतएकंतृतीयेनज्योतिषासंविशस्व । संवेशनेतन्व१श्चारुरेधिप्रियोदेवानांपरमेजनित्रे । इतिमंत्रेण ॐ भूर्भुवःस्वरित्यग्निंप्रतिष्ठाप्य समिद्द्वयमादायपुनर्देशकालौसंकीर्त्य नास्तिक्याद्विसृष्टाग्नेःपुनःसंधानांगभूतमन्वाधानंकरिष्येऽस्मिन्नन्वाहितेग्नावित्यादिआघारावाज्यभागौचआज्येनेत्यंतमुक्त्वात्रप्रधानं अग्निमष्टवारंअग्निंपवमानमग्निंपावकमग्निंशुचिमग्निंपथिकृतमग्निंतंतुमंतंचाज्येन शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनाद्याज्यभागांतंकृत्वा स्रुवेणस्रुच्याज्यंचतुर्गृहीत्वा । त्वमग्नेसप्रथाअसीत्यस्यात्रेयःसुतंभरोग्निर्गायत्री । नास्तिक्याद्विसृष्टाग्नेःपुनःसंधानप्रधानाज्यहोमेवि० । ॐ त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः । त्वयायज्ञंवितन्व

तेस्वाहा । अग्नयइदंनमम । योअग्निमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री । नास्तिक्याद्विसृष्टाग्नेःपुनसंधानप्रधानाज्यहोमेवि० । ॐ योअग्निंदेववीतयेहविष्माँआविवासति । तस्मैपावकमृळयस्वाहा । अग्नयइदंनमम । तंतुंतन्वन्नित्यस्यवामदेवोग्निर्जगती । नास्ति० पुनःसं० । ॐ तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् । अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनंस्वाहा । अग्नयइदं० । त्वंनोअग्नइत्यस्यांगिरसोहिरण्यस्तूपोग्निर्जगती । नास्ति० पुनःसं० । ॐ त्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य । त्रातातोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रतेस्वाहा । अग्नयइदं० । त्वंनोअग्नेवरुणस्येत्यस्यगौतमोवामदेवोग्नीवरुणौत्रिष्टुप् । नास्तिक्या० पुनःसं० । ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः । यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा । अग्नयइदं० । सत्वंनोअग्नइत्यस्यगौतमोवामदेवोग्नीवरुणौत्रिष्टुप् । नास्तिक्याद्विसृष्टाग्नेःपुनःसंधानप्रधानाज्यहोमे० । ॐ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ । अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनएधिस्वाहा । अग्नयइदं० । ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञ९ समिमंदधातु । याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा । अग्नयइदं० । पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः । घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाःस्वाहा । अग्नयइदं० । एतैर्मंत्रैःस्रुचाप्रत्याहुतिचतुर्गृहीतेनाज्येनाष्टावाहुतीर्हुत्वा स्रुवेणस्थाल्याआज्यमादाय । ॐ अग्नयेपवमानायस्वाहा । अग्नयेपवमानायेदं० । ॐ अग्नयेपावकायस्वाहा । अग्नयेपावकायेदं० । ॐ अग्नयेशुचयेस्वाहा । अग्नयेशुचयइदं० । ॐ अग्नयेपथिकृतेस्वाहा ।

अग्नयेपथिकृतइदं० । ॐ अग्नयेतंतुमतेस्वाहा । अग्नयेतंतुमतइदं । एवंपंचाज्याहुतीर्हुत्वा देवताभ्यस्त्यक्त्वास्विष्टकृदादिहो
मशेषंसमाप्याहिताग्नयेऽनडुहंदक्षिणांदद्यादिति । अथापत्नीकौपासनप्रयोगः । स्वतःपूर्वमृतायैपत्न्यैदाहायार्धाग्निंदत्वाशिष्टा
र्धाग्नौपूर्ववत्सायंप्रातर्होमौकुर्यात् । इष्टिस्तुकार्यावानवा ॥ ॥ ॥ ॥

॥ गृहप्रवेशहोमः ॥ अथविवाहोत्तरंदंपत्योर्गृहप्रवेशः ॥ ॥ गृहप्रवेशहोमदिनादारभ्यदर्शसंक्रांतिव्यतीपातविष्ट्यादिदोषरहितेचतुर्थादौमौहू
र्तिकोक्तेशुभेदिनेगृहप्रवेशंकरिष्यमाणःश्वशुरगृहेभ्यज्यस्नात्वा रात्रौस्वदेशाचारानुसारेणनागवल्यादिकृत्वा श्वशुरदत्तदा
सीदासपर्यंकादियुतसुवासिनीकृतनीराजनःश्वशुरादिभ्योगृहीतवह्न्याशीर्वचनःस्वलंकृतःस्वलंकृतयावध्वासहविवाहाग्निंशकटे
वस्थाप्याजस्रंनयन् । पूषात्वेतइत्यस्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् । वध्वायानारोहणेवि० । ॐ पूषात्वेतश्च्यावयतुप्रवि
द्वाननष्टपशुर्भुवनस्यगोपाः । सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः । अनेनयथाविभवंगजाश्वादियानमा
रोहयेत् । यानप्रयाणएवासौनियमः । यानादन्येनशिविकादिनाप्रयाणेमंत्रः । स्वग्रामविवाहपक्षेस्वगृहगमनेनायंमंत्रः ।
गमनेयद्यंतरानाव्यादिस्यात्तदाश्मन्वतीरीयतइतिऋचोर्धेनवधूंनावमारोहयेत् । अत्राजहामयेत्युत्तरार्धेनउदकादुत्तारयेत् ।
अश्मन्वतीरित्यस्यदेवाऋषिरग्निस्त्रिष्टुप् । पूर्वार्धर्चस्यवध्वानावारोहणेउत्तरार्धर्चस्योदकादुत्तारणेविनि० । ॐ अश्मन्वती
रीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः । अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् । नीयमानावधूर्यदिवंधुवि
योगादिनारोदिति तदाजीवंरुदंतीतिऋचंजपेत् । जीवंरुदंतीत्यस्यकाक्षीवतीघोषाऽश्विनौजगती । जपेवि० । ॐ जीवंरुदं

तिविमंयंतेअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः । वामंपितृभ्योयइदंसमेरिरेमयःपतिभ्योजनयःपरिष्वजे । इति । अयंविधिः स्वग्रामेपिभवत्यविशेषात् । शोभनेषुदेशवृक्षचतुष्पथेषुमाविदन्परिपंथिनइतिजपेत् । माविदन्नित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप्जपेवि० । ॐ माविदन्परिपंथिनोयआसीदंतिदंपती । सुगेभिर्दुमतीतामपद्रांत्वरातयः । वसतौवसतावीक्षकाः संतिचेत्सुमंगलीरियंवधूरित्यृचेक्षेत् । सुमंगलीरित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् । जपेवि० । ॐ सुमंगलीरियंवधूरिमांसमेतपश्यत । सौभाग्यमस्यैदत्वायाथास्तंविपरेतन । इहप्रियंइत्यनयागृहंप्रवेशयेद्वधूम् । अयंविधिःस्वग्रामविवाहेपि भवति ॥ ॥ अत्रायमनुष्ठानक्रमः । वरोवधूमुक्तमंत्रेणयथार्हयानमारोप्यविवाहाग्निंशकटारोपितमजस्रमग्रतोनयन्सुमंगलीसूक्तंपठद्भिर्विप्रैर्वधुभिःसुवासिनीभिरिष्टमंगलसंज्ञकदर्पणपूर्णकलशकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मंगलतूर्यवाद्यैश्चसहितःसितच्छत्रयुतःस्वगृहद्वारेसुवासिनीभिर्नीराजितविग्रहोवधूंपाणौगृहीत्वाशुभेमुहूर्ते । ॐ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि । एनापत्यातन्वं१ संसृजस्वाधाजिव्रीविदथमावदाथः । इत्यनेनमंत्रेणस्वगृहंप्रवेश्यस्वयंचप्रविश्यतंडुलचतुष्केषुकुलदेवतांलक्ष्मींचसंपूज्यविप्रैःपुण्याहंवाचयेत् । ततःगृहप्रवेशनीयहोमःकार्यः । अस्माभिस्त्वाचारानुसारेणपूर्वंकर्तव्यतयोक्तः । ततःशुभेदिनेस्वस्त्यादिवाचयित्वास्वलंकृतःस्वलंकृतवधूंरात्रावुपगच्छेत् । नागवलीस्तंभवलिप्रयोगस्तु सर्वदेशेष्वनुष्ठानाभावान्नोक्तः ॥ ॥ इतिश्रीरामेश्वरसुतभट्टनारायणकृतेप्रयोगरत्नेवधूसहितस्यवरस्यगृहप्रवेशविधिः ॥ ॥

अवसिताअष्टादशप्रयोगाः । अग्रेसप्तपाकसंस्थाः ।

अथसप्तपाकसंस्थाः ॥ ॥ आश्वलायनमाचार्यंप्रणम्यपितरंगुरुम् । भट्टरामेश्वरसुतोभट्टनारायणःसुधीः ॥ १ ॥ पंचविंशतिसंस्कारेषूक्त्वाद्वादशसंस्कृतीः । पाकयज्ञान्सप्तशिष्टान्वक्तिशिष्टेष्टतुष्टये ॥ २ ॥ तत्र । अतःपरंद्विजातीनांसंस्कृतिर्नियतोच्यते । संस्काररहितायेतुतेषांजन्मनिरर्थकम् ॥ ३ ॥ पंचविंशतिसंस्कारैःसंस्कृतायेद्विजातयः । तेपवित्राश्चयोग्याःस्युःश्राद्धादिषुसुयंत्रिताः ॥ ४ ॥ गर्भाधानंपुंसवनंसीमंतोवलिरेवच । जातकृत्यंनामकर्मनिष्क्रमोन्नाशनंपरं ॥ ५ ॥ चौलकर्मोपनयनंव्रतानांचचतुष्टयम् । स्नानोद्वाहौचाग्रयणमष्टकाचयथातथम् ॥ ६ ॥ श्रावण्यामाश्वयुज्यांचमार्गशीर्ष्यांचपार्वणम् । उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चनित्यशः ॥ ७ ॥ श्रावण्यादिषुतिसृषुपौर्णमासीषुक्रमेणश्रवणाकर्माश्वयुजीकर्मप्रत्यवरोहणानित्रीणिकर्माणि पर्वण्यमावस्यायांक्रियमाणंपार्वणमित्यर्थः । संस्कारानियताह्येतेब्राह्मणस्यविशेषतइतिआश्वलायनाचार्योपक्रमोपसंहारयोर्नियतत्वोक्त्याजन्मनैरर्थक्यरूपाकरणनिंदयाचपंचविंशतिसंस्काराणांनित्यतोक्ता । पुनश्चैषांनैमित्तिकवार्षिकमासिकनित्यभेदेनचतुर्विधत्वंसएवाह । नैमित्तिकाःषोडशोक्ताःसमुद्वाहावसानकाः । सप्तैवाग्रयणाद्याश्चसंस्कारावार्षिकामताः । मासिकंपार्वणंप्रोक्तमशक्तानांतुवार्षिकं । महायज्ञास्तुनित्याःस्युःसंध्यावच्चाग्निहोत्रवदिति । नित्याःप्रात्याहिकाइत्यर्थः । एवंपंचविंशतिसंस्कारेषुगर्भाधानाद्याअष्टादशोक्ताःइदानींश्रवणाकर्माद्याःसप्तावशिष्टाउच्यंते । तत्रतावत्श्रवणाकर्मोच्यते । श्रवणाकर्मसर्पबलिंचभुक्त्वापिकेचित्कुर्वंति । युक्तंतूपवासिनैवकार्यंइति[1] ॥ ॥ ॥

---

१ अग्रिमेषुश्रवणाकर्मादिषुविशेषस्तत्रतत्रपत्राधष्टीप्पणरूपेणविशदीकृतोऽवश्यमालोचनीयः ।

अथश्रवणाकर्मप्रयोगः ॥ ॥ श्रावण्यांपौर्णमास्यांपूर्वाह्णेवृद्धिश्राद्धंकृत्वादिवैवव्रीहीणांयवान।वालौकिकाग्नौभर्जनेनप्रस्थमिताधानाःकृत्वा खंडितयवव्रीह्यन्यतरस्यलौकिकाग्नौभर्जनंकृत्वा तत्पिष्टरूपैःसक्तुभिर्नवकलशंप्रपूर्य बलिनिक्षेपसाधनभूतांवैकंकतदर्वीमपिसंपाद्य तदुभयंगृहकाष्ठादिलंबितेनवेशिक्येनिधाय बल्यर्थंगृहेप्राच्यांशुचिंदेशंपरिगृह्णीयादिहकरिष्यामीति । व्रीहींश्चरुपात्रंपुरोडाशकपालंचसंपाद्य धानाःसमार्धीकृत्यअर्धालौकिकाज्येनाक्ताःकृत्वैकपात्रेनिधायाऽपराअनक्ताधाधानाःपात्रांतरेनिदध्यात् । ततोस्तमितेसूर्येशुचिःआचम्यसपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य ममपुत्रपौत्रादीनांचरोगनिवारणसमस्तपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंनित्यविधिरूपंश्रवणाकर्मकरिष्ये इतिसंकल्प्य समिद्धयंत्रयंवादाय

---

१ अत्रेत्थंव्यवस्था—प्रथमप्रयोगेश्रवणाकर्मदिनात्पूर्वेद्युःप्रातः श्रवणाकर्मसर्पबल्यंगत्वेनमातृकापूजनपूर्वकंवृद्धिश्राद्धंकृत्वा श्रवणाकर्मदिने पूर्वाह्णेस्वस्तिवाचनंकुर्यात् । तत्रअग्न्यादयःप्रीयतां श्रवणाकर्मणेस्वस्तिइतिविशेषः । तदतेदिवैववितुषाणांयवानां तदभावेव्रीहीणांलौकिकाग्नौभर्जनेनप्रस्थद्वयाधिकपरिमाणाधानाःकृत्वा तासांप्रस्थमात्राःपृथक्कृत्वा शिष्टाभिःपिष्टरूपान्सक्तून्कृत्वा तैर्नवंकलशंपूरयित्वा तंकलशं वैकंकतींदर्वींच बलिहरणींनवेशिक्येनिधायैतच्छिक्यंकापिनिवेशयेत् । पृथक्कृताःप्रस्थमात्राधानाःपात्रद्वयेसाम्येनविभज्य लौकिकेनसर्पिषार्धाअनक्ति । ततःस्वगृहाद्दन्यगाराद्वाप्राच्यांशुचिदेशंबल्यर्थंपरिगृह्णीयात् इहकरिष्यामीति । एतावदहनिकार्यम् । २ सायहोमकृत्वादेशकालोत्कीर्तनांतेममोपात्तदुरितक्षयद्वाराश्रीप०र्थंश्रवणाकर्मकरिष्येइतिसंकल्प्याग्निं साहसनामायमितिविभाव्यध्यात्वान्वाधानम् । प्रायश्चित्तेविधुश्चैवपाकयज्ञेपुसाहसइतिसंग्रहादितिरामकल्पद्रुमादत्राग्निःसाहसनामा ।

पुनर्देशकालौसंकीर्त्यास्मिन्श्रवणाकर्महोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषी आज्येनेत्यं तमुक्त्वा प्रधानदेवतामग्निंचतुर्वारंचरुद्रव्येण अच्युतभौमाग्निंपुरोडाशेन अग्निमांशयाज्येन वाजिदेवताधानाद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा । ॐ भूर्भुवःस्वरित्यग्नावाधाय परिसमूहनादि ( अत्रपात्रासादनेविशेषः—चरुस्थाल्यासहकपालंशरावत्रयंप्रोक्षणींच । दर्वीस्रुवौ । चमसाज्यपात्रे । इध्माबर्हिषी । शूर्पकृष्णाजिने । उलूखलमुसले । दृषदुपले । मेक्षणपिष्टोद्वपन्यौ । शम्योपवेषौ । वेदमदंतीपात्रेचेति । शूर्पद्वय[2]स्यवासादनम् । प्रोक्षणीसंस्कारादिपूर्णपात्रनिधानांते)चरु[3]पुरोडाशदेवतानांपंचानांतूष्णींचतुरश्चतुरोमुष्टीन्निरुप्य तत्संख्ययातूष्णींप्रोक्ष्यावघातादिकृत्वाप्रक्षाल्यचरुपुरोडाशतंडुलान्यथाभागंपृथक्कृत्य पुरोडाशार्थस्वयंकिंचित्पिष्टीकृत्यकृष्णाजिनेप्रस्कंद्य पत्न्यादास्यावापेषणेनचूर्णयित्वा तत

---

१ यस्मिन्नाज्ये पुरोडाश शायितस्तदाशयाज्यतेनाज्येनोपरिजुहोतीत्यर्थः । २ जयतपारिजातमतेत्वत्रशूर्पद्वयस्यासादनएकपुरोडाशार्थमेकचर्वर्थमितिविशेष. । ३ शूर्पेचतुरोमुष्टीन्निरुप्य शूर्पांतरेचतथैवनिरुप्यपुरोडाशपर्याप्तान्वोप्य निर्वापसख्ययाप्रोक्ष्यक्रमेणपृथगवहत्यक्षालयेत् । एकस्मिन्नेवनिर्वापेतुसहैवावहत्यप्रक्षाल्य चरुपुरोडाशार्थान्विभज्य कृष्णाजिनेउदीचीनकुवांशम्यानिधायतन्मध्येप्राक्प्रवणादृषदमासाद्यतस्यापश्चाद्भागेतिरश्चीमुपलांनिधायतत्प्राग्भागेदृषदिपुरोडाशीयांश्चतुर्वारमध्युप्योपलाप्राचीकर्षयित्वापुन प्रतीचीमाकृष्यमध्यदेशेदक्षिणतउत्तरतश्चतिरश्चीमाकृष्यपुन सततपिष्टांतत.प्राच्यांसमाध्यकृष्णाजिनेपिष्टानिप्रस्कद्यावोक्ष्यशिष्टांस्तडुलान्पत्न्यापेषयेत् ।

श्रर्वर्थमग्नौदक्षिणभागेस्थालींनिधाय अग्नेःपश्चात्परिस्तरणमध्येऽपवेषाख्येप्रादेशमितयज्ञियकाष्ठेनद्वावंगारौपृथक्कृत्यतयोरेकं वायव्येनिरस्यापउपस्पृश्य अवशिष्टमंगारमवस्थाप्यतस्मिन्कपालमुपधायतदुपर्यपरमंगारंनिक्षिप्य क्वचित्पात्रेपिष्टसेकार्थमपः प्रताप्यशरावंप्रक्षाल्याग्नौप्रताप्यशोषयित्वास्वाग्रेनिधाय शीतेतस्मिन्पवित्रवतिपुरोडाशार्थंपिष्टंनिक्षिप्यपूर्णपात्रोदकंस्रुवेणपिष्टेप्रक्षिप्य पूर्वप्रतप्तोदकेनपिष्टंसंमिश्र्यपिंडीकृत्यपूर्वमुपहितंकपालादंगारंतृणेनापोह्य चरुस्थाल्यांतंडुलानोप्याश्वशफमात्रंकूर्माकृतिंपुरोडाशंकृत्वाकपालेनिधायाद्भिःश्लक्ष्णीकृत्य आज्यंसंस्कृत्याज्यादीनिचत्वारिहवींषिपित्रिःपर्यग्निकृत्वापुरोडाशमुल्मुकैःप्रताप्यदर्भैःप्रज्वाल्य तत्रैवसुश्रृतंश्रपयित्वातदुपरिसांगारंभस्मनिक्षिप्यहस्तंप्रक्षाल्यसंवापपात्रंप्रक्षालयेत् । ततःआज्यमु

१ अग्नौदक्षिणपार्श्वेसोदकांस्थालीमधिश्रित्योपवेषमादायतूष्णीमभिमन्त्र्यतेनाग्नेःप्रत्यंचावंगारौपृथक्कृत्यतयोरेकंवायव्यांनिरस्यापउपस्पृश्य द्वितीयमग्नेरुत्तरपार्श्वेवस्थाप्यतस्मिन्कपालमुपधायतत्रान्यमंगारंप्रक्षिप्यवेदेनकपालेगारान्निधाय मदंतीपात्रेपिष्टसेकार्थमपस्तापयेत् । पिष्टोद्वपनींपुनःप्रक्षाल्यनिष्टपनेनशुष्कायामग्नेःपश्चान्निहितायांतस्यांतिरःपवित्रंकृष्णाजिनात्पिष्टानिचतुर्वारंसमोप्यवाग्यत.पिष्टानित्रिरुत्पूयस्रुवेणप्रणीताभ्यआदायवेदेनोपयम्यपिष्टेष्वानीयपिष्टानिपक्त्वावा मदंतीपात्रस्थाभिस्ताभिरद्भिःपिष्टान्यनुपरिप्लाव्यमेक्षणेनसंमिश्र्यपिंडंकृत्वावेदेनकपालादंगारानपोह्य स्थाल्यांतंडुलानोप्यपुरोडाशंकपालेनिधाय तुंगमपूपाकृतिं कूर्माकारमश्वशफमात्रंकृत्वाद्भिस्त्वचंग्राहयेद्यथापुरोडाशात्कपालेपोनक्षरंति । २ ततस्तेपवित्रेआज्यपात्रेनिधायेत्यादि । आज्येनसहधानाचरुपुरोडाशान्पर्यग्निकृत्वोल्मुकंनिरस्यापउपस्पृश्यपुरोडाशमुल्मुकैःप्रताप्यदर्भैस्तृणादिभिर्वाभिज्वाल्यवाचंविसृज्यवेदेनपुरोडाशेसांगारंभस्मप्रक्षिपेद्यथासुश्रृतोभवेत् । आज्योद्वासनादिचर्वासादनांतेवेदेनपुरोडाशादगारानपोह्याभिघार्याशयपा

द्वास्यबर्हिष्यासाद्य स्रुवंस्रुचंचसंमृज्यपुरोडाशोपरिस्थभस्मादितृणेनापोह्य चरुपुरोडाशावभिघार्योदगुद्वास्यचरुंबर्हिष्यासाद्य तदुत्तरतःपात्रांतरस्थितलौकिकाज्येनपुरोडाशंमज्जयेत् आविःपृष्ठंवाकुर्यात् । तदुत्तरतःअक्ताअनक्ताश्चधानाआसाद्येध्माधानाद्याज्यभागांतेकृते अभ्युद्धृताच्चरोर्दर्व्यायथागोत्रंचतुर्वारंपंचवारंवाअवदानधर्मेणावदाय अग्नेनयेत्यादिमंत्रैर्ऋगंतेस्वाहाकारंपठन्नाहुतिचतुष्टयंजुहुयात् । अग्नयइदंनममेत्याहुतिचतुष्टयेपित्यागः । अग्नेनयेत्यादिचतुर्णामगस्त्योग्निस्त्रिष्टुप् । श्रवणाकर्मप्रधानचरुहोमेवि० । ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्य१स्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेमस्वाहा । अग्नयइदंनमम । ॐ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा । पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोःस्वाहा । अग्नयइदं० । ॐ अग्नेत्वमस्मद्युयोध्यमीवाअनग्नित्राअभ्यमंतकृष्टीः । पुनरस्मभ्यंसुवितायदेववक्षांविश्वेभिरमृतेभिर्यजत्रस्वाहा । अग्नयइदं० । ॐ पाहिनोअग्नेपायुभिरजस्रैरुतप्रियेसदनआशुशुक्वान् । मातेभयंजरितारंयविष्ठनूनंविदन्मापरंसहस्वस्वाहा । अग्नयइदंनमम ॥ ४ ॥ ततःसव्यपाणिनादक्षिणपाणिंप्रोक्ष्योपस्तीर्यकृत्स्नंपुरोडाशमात्रउपस्तीर्यापर्यावर्तयन्पुरोडाशमुद्वास्य वेदेनभस्मप्रमृज्याशयपात्रेनिधायकपालप्रत्यञ्ज्यपुरोडाशमनक्ति । तत्रविच्छेदनिकर्षणंचाकुर्वन्नुपरिष्टात्सर्वमभ्यज्यस्रुवेणहस्तेनाधस्तादभ्यज्यलौकिकेनाज्येनपूरयित्वा निमग्नप्रकटपृष्ठवाकृत्वाग्न्याज्ययोर्मध्येननीत्वाबर्हिष्यासाद्यअक्ताधानाअग्नावधिश्रित्याभिघारणाद्यासादनांतंकुर्यात् । एवमनक्ताअधिश्रयणवर्जमासाद्याग्न्यर्चनाद्याज्यभागांतेउद्धृताच्चरोरवदानधर्मेणावदायजुहुयात् । १ कृत्स्नपुरोडाशनिधायआशयात्सकृद्धविरवदायाभिघार्य अपर्यावर्तयन्नृजुंप्रतिष्ठितहुत्वास्रुवेणाशयाज्येनपुरोडाशस्योपरिजुहुयात् ।

दायद्विरभिघार्यपंचावत्तीतुत्रिरभिघार्य । ॐ अच्युतायभौमायस्वाहाइत्यपर्यावर्तयन्हुत्वा । अच्युतायभौमायाग्नयइदंनम मेतित्यजेत् । ततःयस्मिन्नाज्येपुरोडाशःशायितस्तदाज्यैकदेशम् । मानोअग्नइत्यस्यागस्त्योग्निस्त्रिष्टुप्[1]आंशयाज्यहोमेवि० । ॐ मानोअग्नेवसृजोअघायाविष्यवेंरिपवेंदुच्छुनायै । मादत्वतेदशतेमादतेंनोमारीषतेसहसावन्परादाःस्वाहा । इतिस्रुवेण हुत्वा अग्नयइदंनममेतित्यजेत् । ततःस्वांजलावन्येनोपस्तृतेप्रागक्ताधानाद्विस्त्रिर्वा[2]वापयित्वाभिघार्य । शंनोभवंत्वित्यस्य वसिष्ठोवाजिनस्त्रिष्टुप् । श्रवणाकर्मप्रधानधानाहोमेवि० । ॐ शंनोभवंतुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः । जंभयंतो हिंवृकंरक्षांसिसनेम्यस्मद्युयवन्नमीवाःस्वाहा । इत्यंजलिनाहुत्वा वाजिभ्यइदंनममेतित्यजेत् । ततोऽनभ्यक्ताधानाःपुत्राद्य मात्येभ्योदत्वा चरुधानैकदेशतःस्विष्टकृतं[3]हुत्वा होमशेषंसमाप्यधृतपवित्रग्रंथिंविस्रस्यशुद्धदेशेक्षिपेत् । इतिश्रीनारायण भट्टविरचितेप्रयोगरत्नेश्रवणाकर्मप्रयोगः[4] ॥ ॥ ॥ ॥

अथसर्पवलिप्रयोगः ॥ ॥ आचम्यपवित्रेधृत्वाप्राणानायम्यदेशकालौस्मृत्वा ममभार्यापुत्राप्रत्तदुहितृसमेतस्यभौमांत रिक्षदिव्यदिश्यसर्पेभ्यःसंभावितवाधापरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थनित्यविधिरूपंसर्पवल्याख्यंकर्मकरिष्ये इतिसंकल्प्य

१ सर्वाशयाज्यहोमस्तुशौनकेनविरुद्धः । २ द्विस्त्रिर्वान्यपात्रस्थमवत्तंचाभिघार्य । ३ दक्षिणांतंसमाप्यकपालंविमुच्यसंख्यायोद्वास्यआभि र्गीभिरित्यादि । ४ श्रवणाकर्मलुप्तचेत्कथंचित्कारणांतरात् । आग्रहायणिकंकुर्याद्बलिकर्मविवर्जितमितिछंदोगपरिशिष्टात् । आग्रहायणिकआप्रत्य वरोहणांतंश्रवणाकर्मकुर्यात् । वलिकर्मसर्पवलिः स० कौ० ।

पूर्वशिक्यस्थापितदर्वींमादाय शिक्यस्थापितकलशाहितसक्तुभिस्तामापूर्यगृहीत्वा गृहान्निर्गत्यप्राच्यांदिशिपूर्वपरिगृहीतंदेशमासाद्यप्रोक्ष्य । ॐ सर्पदेवजनेभ्यःस्वाहा इतिमंत्रेणदर्वीस्थसक्तुंतत्रप्राङ्मुखोनिक्षिप्य सर्पदेवजनेभ्यइदंनममेतित्यजेत् । बलेर्बलिदातुश्चांतराकेनापिव्यवधानंनकार्यमापरिदानात् । ततःकृतांजलिः । ॐ येसर्पाःपार्थिवायआंतरिक्ष्यायेदिव्यायेदिश्यास्तेभ्यइमंबलिमाहार्षंतेभ्यइमंबलिमुपाकरोमि इतिमंत्रेणसर्पानुद्दिश्यसंहताभ्यांपाणिभ्यांनमस्कृत्य बलिंप्रदक्षिणीकृत्यपश्चाद्बलेरुपविश्य । ॐ सर्पोसिसर्पतांसर्पाणामधिपतिरस्यन्नेनमनुष्यांस्त्रायसेपूपेनसर्पान्यज्ञेनदेवांस्त्वयिमासंतंत्वयिसंतःसर्पामाहिंसिषुर्ध्रुवांतेपरिददामि । इतिमंत्रमुपांशुसकृज्जपित्वा ज्येष्ठक्रमेणनामग्राहंपुत्रादीन्परिदद्यादेवं[2]—ध्रुवामुकंतेपरिददामि इतिपुत्रं । ध्रुवामुकांतेपरिददामिइत्यप्रत्तांदुहितरं । ध्रुवामुकांतेपरिददामिइतिभार्यां । ध्रुवमांतेपरिददामिइत्यात्मानमंते । अन्यःकर्ताचेन्मांपदस्थानेयजमाननामद्वितीयांतमुक्त्वापरिददामीतिवदेत्[3] । ततःप्रतिपदमारभ्यप्रत्यवरोहणपर्यंतंसायंप्रातःकालेषुतथैवदर्व्यातैरेवसक्तुभिःशुचिदेशेबलिंहरेत् । तत्रनमस्कारादिपरिदानांतंनकार्यम् । अथवा श्रावणप्रतिपदमारभ्य यस्मिन्नहनिप्रत्यवरोहणंमार्गशीर्षशुक्लचतुर्दश्यांपौर्णमास्यांवाक्रियतेतस्मादर्वाचीनदिनानिह्रासवृद्धिभ्यांपरिगणय्य तेषुयावं

---

१ अत्र सर्पबलिमंत्राणांगौतमोवामदेव सर्पायजु होमादौविनियोग.इतिविशेषः । २ पुत्रादीनांपरिदानंयथा—ध्रुवविष्णुशर्माणंतेपरिददामिपुत्राणांप्रत्येकं । पुत्राणामंते ध्रुवचंद्रादेवींतेपरिददामिइत्यप्रत्तादुहितर । तासामंते ध्रुवइंदिरादेवींतेपरिददामिइतिभार्याइत्यादि । ३ एतत्पर्यंतंबलेःकर्तुश्चम ध्येकेनापिव्यवधानंनकार्यं ।

तःप्रातःसायंकालास्तावतोवलींस्तदैवदद्यात्। तदाचप्रथमवलिदानांतेनमस्कारपरिदानांतंसकृदेवनप्रत्येकम्। ततःपवित्रग्रंथिं विस्रस्यशुद्धदेशेक्षिपेत्। अत्रतदहरेवाखिलवलिदानंमुख्यःपक्षः। श्रवणाकर्मसर्पवलीप्रतिवर्षकार्यौ। अत्रविशेषश्रवणात्। वृद्धिश्राद्धमुभयार्थतंत्रेणैवकार्यं। इतिनारायणभट्टविरचितेप्रयोगरत्नेसर्पवलिप्रयोगः॥ ॥ ॥

अथाश्वयुजीकर्मप्रयोगः॥ ॥आश्वयुजीमासेपौर्णमास्यांआश्वयुजीकर्मकार्यम्। पूर्वेद्युःकर्तोपलेपनादिनाप्रत्यवरोहणेवक्ष्यमाणमार्गेणनिवेशनमलंकृत्यभूमिंचसमीकृत्य परेद्युस्त्रीपुत्रादिसमेतोभ्यंगादिविशेषस्नानंविधाय शुक्लशुचिवासाःप्रातरौपासनंकृत्वाभ्युदयिकश्राद्धंविधाय धृतपवित्रःप्राणानायम्यदेशकालौस्मृत्वा ममस्त्रीपुत्रादिसहितस्यन्यूनापेक्षितविषयसंपूर्णतापूर्णानवसादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपमाश्वयुजीकर्मकरिष्येइतिसंकल्प्य अग्निमुपसमाधायसमिद्वयंत्रयंवादायदेशकालौनिर्दिश्यअस्मिन्नाश्वयुजीकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वात्रप्रधानं

---

१ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंकृत्वामृदतरेणगृहमुपलिप्यतृणैराच्छाद्यवितानबंधनादिनागृहमलंकृत्यभुवंसमीकुर्यात्। परेद्युःसर्वेगृह्याःकृताभ्यंगस्नानाधौतशुक्लांवरधराभवेयुः। कर्ताप्रातर्होमातेस्वस्तिवाचनंकुर्यात्। तत्रपशुपतिःप्रीयतामितिविशेषः। ततोदेशकालोत्कीर्तनांतेममपत्नीपुत्रादिसहितस्यउपात्तदुरितक्षयपूर्वकन्यूनापेक्षितविषयेत्यादिसंकल्पेविशेषः। २ अग्निसाहसनामायमितिविभाव्यध्यानादि।

पशुपतिं[1](शिवंशंकरंपृषातकं)चरुद्रव्येण प्रधानंपृषातकंपृषातकद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिद्ध्यमग्नावाधायपरिसमूहनादि(पात्रासादनेचरुस्थाल्यासहपृषातकस्थाल्यासादनं)पूर्णपात्रनिधानांतंकृत्वा अग्नेःप्रत्यक्शूर्पेपवित्रवतिपशुपतयेत्वाजुष्टंनिर्वपामीतिचतुरोमुष्टीश्चर्वर्थंनिरुप्यतत्संख्ययातथैवप्रोक्ष्यावघातादिचरुश्रपणांतंकृत्वाज्यमिश्रंपयः[2]पृषातकाख्यंहविरंतरंकृत्वाज्यंसंस्कृत्य चरुपृषातकाभ्यांसहपर्यग्निकृत्वाज्योद्वासनादि(चरोरुत्तरतःपृषातकमासाद्य)आज्यभागांतंकृत्वा सुतादिभिरन्वारब्धः स्वसन्निधौवातानुपवेश्य अवदानधर्मेणचरुमवादाय। ॐ पशुपतये[3]शिवायशंकरायपृषातका

---

१ अत्रयद्यप्यन्वाधानेकेवलपशुपतिग्रहणमुपलभ्यतेतथापितन्नसम्यक् किंतुचरुहोमे पशुपति शिव शंकर पृषातकइतिदेवताग्राह्यास्तथामंत्रवर्णात्। तेनान्वाधानेपितथैवकीर्तनमावश्यकम्। नचनिर्वापेपितथात्वापत्तिः। पशुपतयेनिरुप्येतिसूत्रेकेवलपशुपतेरेवकीर्तनात्। नचेदंपशुपतिपदमुपलक्षणार्थमितिवाच्यप्रमाणाभावात्। नन्वस्तुनिर्वापएव प्रोक्षणतुमात्रवर्णिकदेवतापदान्युच्चार्यैवस्यादितिचेन्न। अथैनान्प्रोक्षतियथानिरुप्तमितिसूत्रात्तयोस्तुल्यत्वावगमात् पूर्वोक्तवृत्तिस्वरसाच्च। उक्त्वापशुपतेत्येतच्चतुर्थ्यंततत.परं। त्वाजुष्टंनिर्वपामीतिनिर्वाप'प्रोक्षणतथा। प्रोक्षामीतिविशेषस्तुप्रोक्षणेऽन्यत्समंभवेदितिकारिकाया पशुपतयेत्वाजुष्टंनिर्वपामीतिनिर्वापप्रोक्षणपरजयताच्च। नचनिर्वापत्यागयोर्वैपरीत्यंक्वापिनदृष्टमितिवाच्य बहुशोदर्शनात्। आधानेतावत् ब्रह्मौदनेब्रह्मणेप्राणायजु० ब्रह्मणेपानाय० ब्रह्मणेव्यानाय० इतिनिरुप्यप्रवेधसइतिहुत्वावेधसइतित्यजेत्। एतेनयत्प्रयोगपारिजातकारादीनामन्वाधानेकेवलपशुपतिकीर्तन तथाकेषांचिद्याज्ञिकमन्यानाहोमेकेवलस्योच्चारणतदपास्तमिति स० कौमुदी।

२ पयस्याज्येनिषिक्तेतुतत्पय स्यात्पृषातकमिति। ३ पशुपतयइत्यादिमंत्रयोर्गौतमोवामदेव'पशुपतिःपृषातकश्चयजु'आश्वयुजीकर्मप्रधानहोमेवि०।

यस्वाहाइतिहुत्वा पशुपतयेशिवायशंकरायपृषातकायेदंनममेतित्यजेत् । ततोयजमानांजलावन्यउपस्तीर्य स्रुवेणैवपृषातकं द्विस्त्रिर्वावदायाभिघारयेत् । ततोयजमानः ॐ ऊनंमेपूर्यतांपूर्णमेमोपसदत्पृषातकायस्वाहाइत्यंजलिनैवहुत्वा पृषातकाये दंनममेतित्यजेत् । [1]चरुपृपातकशेषात्स्विष्टकृतंहुत्वा इध्मसन्नहनादिहोमशेषंसमाप्य धृतपवित्रग्रंथिंविस्रस्यशुचिदेशेक्षिपेत् । इतिनारायणभट्टविरचितेप्रयोगरत्नेआश्वयुजीकर्मप्रयोगः ॥ ॥ ॥ ॥

अथाग्रयणहोमप्रयोगः ॥ ॥ शरदिपौर्णमास्याममावास्यायांवापर्वणितदलाभेकृत्तिकादिविशाखांतदेवनक्षत्रेष्वन्यतमे चंद्रानुकूल्येआग्रयणंकार्यम् । [2]प्रातरौपासनहोमंकृत्वा संकल्पपूर्वकमाभ्युदयिकश्राद्धंविधाय आचम्यपवित्रेधृत्वाप्राणानाय म्यदेशकालावुत्कीर्त्य ममरोगजरानिवृत्तिश्रीयशोन्नप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थ नित्यविधिरूपमाग्रयणंकरिष्येइतिसंकल्प्या स्मिन्नाग्रयणाख्येकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुपीआज्येनेत्यंतमुक्त्वात्रप्रधानं इंद्राग्नी विश्वान्देवान् द्यावापृथिव्यौ चरुद्रव्येण शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिद्वयमग्नावाधायपरिसमूहनादिपूर्णपात्रनि धानांतंप्राक्तनंतंत्रंकृत्वा प्रत्यगग्नेः[3]शूर्पेपवित्रवति तूष्णींचतुरश्चतुरोमुष्टीन्निरुप्यतत्संख्ययातथैवप्रोक्ष्यावघातादिचरुश्रपणांतं

१ स्विष्टकृदर्थमुपस्तीर्यचरोर्हस्तेन पृषातकस्यस्रुवेणोत्तरार्धादवदायेतिविशेषः । २ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंस्वस्तिवाचनंचकुर्यात् । तत्रेंद्राग्न्यादयःप्रीयंतामितिविशेषः । ममोपात्तदुरितक्षयेत्यादिसंकल्प्य । अग्निसाहसनामायमितिविभाव्यध्यानादि । ३ तूष्णींद्वादशमुष्टीन्निरु प्यतथैवप्रोक्षणादि । आज्यभागांतेविभागाभिमर्शावक्त्तैवावदानधर्मेणहोमः ।

कृत्वाज्यसंस्काराद्याज्यभागांतंकृत्वावदानधर्मेणचरुमवदाय । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूरिंद्राग्निभ्यांस्वाहा । इंद्राग्निभ्यामिदंनममइतित्यक्त्वा । पुनरवदाय। ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्विश्वेभ्योदेवेभ्यःस्वाहा। विश्वेभ्योदेवेभ्यइदंनमम। पुनरवदाय। ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्द्यावापृथिवीभ्यांस्वाहा द्यावापृथिवीभ्यामिदंनमम । एवंतिस्रआहुतीर्हुत्वा स्विष्टकृद्धुत्वावशिष्टंपात्रांतरेकृत्वा तत्पात्रंसव्यपाणौधृत्वा। ॐ प्रजापतयेत्वाग्रहंगृह्णामिमह्यंश्रियैमह्यंयशसेमह्यमन्नाद्याय। इतिमंत्रेणदक्षिणेनपाणिनाअभिमृश्य । ॐ भद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावशेनसमशीमहित्वा। सनोमयोभूःपितेवाविशेहशंनोभवद्विपदेशंचतुष्पदे। इतिमंत्रेणप्राश्यद्विराचम्यतत्रैवउपविष्टः। ॐ अमोसिप्राणतदृतंब्रवीम्यमोसिसर्वानसिप्रविष्टः। समेजरांरोगमपनुद्यशरीरादमामएधिमामृथामइंद्र। इतिमंत्रेणात्मनोनाभिमालभेत । ततःपत्नीमध्यमहविःशेषममंत्रकंप्राश्नीयात्। ततोयजमानइध्मसन्नहनहोमादिपरिषेचनांतंकर्मशेषंसमाप्य धृतपवित्रग्रंथिंविस्रस्यशुचिदेशेक्षिपेत्। इदमाग्रयणंयदाश्वयुज्यांपौर्णमास्यांक्रियतेतदैककालत्वादाश्वयुजीकर्मणासमानतंत्रताभवति । तत्राश्वयुजीकर्मप्रधानहोमं

---

१ आग्रयणहोममत्राणागौतमोवामदेवइद्राग्नीविश्वेदेवाद्यावापथिवीचयजु.आग्रयणप्रधानहोमेवि० । २ उत्तरार्धात्सकृदवदायस्विष्टकृद्धोमादि। चरुशेषवर्जंहविरुच्छिष्टदक्षिणा। कर्मसमाप्तौवैश्वदेवनवान्नेनकृत्वा आग्रयणशेषवैश्वदेवशेषचैकीकृत्यतत्पात्रंसव्येहस्तेनिधायदक्षिणहस्तेनतदन्नमभिमृशेत्। ३ प्रजापतयेत्वेत्यादेर्गौतमोवामदेवोन्नंयजु'अभिमर्शेवि०। ४ भद्रान्नइत्यादिद्वयोर्गौतमोवामदेवःपितुस्त्रिष्टुप्प्राशनेआलभनेचवि०। ५ करमध्येसौम्यमग्नितीर्थंच। तत्रसौम्येननवान्नप्राशनमितिभट्टोजीदीक्षितकृताह्निके।

कृत्वाऽग्रयणप्रधानहोमः द्वयोश्चर्वोरेकंस्विष्टकृदित्यादिज्ञेयम् । यत्राग्रयणंनकार्यं । श्यामाकैस्तुप्रस्तरंकुर्यान्नाग्रयणं। शास्त्रांतरेदृष्टत्वात् । इदंचाग्रयणमकृत्वानवान्नभक्षणस्यनिषिद्धत्वात् । दुर्भिक्षेपुरातनधान्यालाभेनवधान्यभक्षणाधिकारार्थमलमासेपिकार्यम् । अनापदितुशुद्धएव । आग्रयणाकरणेप्रायश्चित्तंकारिकायां । अकृताग्रयणोश्नीयान्नवान्नंयदिवैततः । वैश्वानरायकर्तव्यश्चरुःपूर्णाहुतिस्तुवा। इतिना० प्रयोगरत्नेस्मार्ताग्रयणप्रयोगः॥ (आश्वयुजीकर्माग्रयणयोःसहप्रयोगः तथा दर्शपूर्णमासस्थालीपाकाश्वयुजीकर्माग्रयणानांसहप्रयोगश्चाग्रेपृथक्संगृहीतप्रयोगेष्वालोचनीयः )॥ ॥ ॥

अथप्रत्यवरोहणम् ॥ ॥ तच्चमार्गशीर्ष्यापौर्णमास्यांतत्पूर्वेद्युश्चतुर्दश्यांवाकार्यम्। दिवैवगृहकुड्यलेपनास्तरणोपस्तरणैर्निम्नोन्नतभूमिसमीकरणप्ररूढापामार्गाद्युन्मूलनरूपंनिवेशनालंकारंविधायफलरहितधान्यतृणाख्यपलालनिर्मितंचशयनार्थंकटं संपाद्यसंकल्पपूर्वकंप्रत्यवरोहणांगंनांदीश्राद्धंविधायसूर्येस्तमितेसायमौपासनंहुत्वाशुचिराचांतःपवित्रेधृत्वा देशकालौसंकीर्त्य ममस्त्रीपुत्रादिसहितस्यजलस्थलचरसर्पबाधानिवृत्त्यभयहेमंतसौमनस्यद्वाराश्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपंप्रत्यवरोहणा

१ लेपनास्तरणोपस्तरणैरिति लेपनंकुड्यादीनां, आस्तरणचतेषामेवाच्छादन, उपस्तरणंभूमेर्नवीकरणमिति सं० कौमु० । २ उक्तकालेप्रत्यवरोहणंकरिष्यन्प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धस्वस्तिवाचनंचकुर्यात् । तत्रकर्मांगदेवताश्चेत प्रीयतामितिविशेष' । ततोगृहसमीपेप्ररूढान् अपामार्ग—शाक स्तिल्वक–परिव्याधइत्येतान्समूलान्परिखायोद्वास्यमृदंतरेणगृहमुपलिप्यतृणैराच्छाद्यभुवंसमीकुर्यात् । शयनार्थफलरहितधान्यतृणनिर्मितंकटंसं पाद्येत्यादि ।

रुयंकर्मकरिष्येइतिसंकल्प्याग्निमुपसमाधाय समिद्वयंत्रयंवादायपुनर्देशकालौस्मृत्वा क्रियमाणेप्रत्यवरोहणेदेवतापरिग्रहार्थं मन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुपीआज्येनेत्यंतमुक्त्वात्रप्रधानं श्वेतांद्विःपायसेन इध्मसन्नहनेनरुद्रमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिधावग्नावादध्यात् । अत्रस्विष्टकृन्नास्तितेननतत्कीर्तनम् । परिसमूहनपूर्णपात्रनिधानांतंकृत्वाप्रधानदेवतायैश्वेतायद्विश्चतुरोव्रीहिमुष्टींस्तूष्णींनिरुप्यतथैवप्रोक्ष्य पयसिचरुश्रपणाज्यसंस्काराद्याज्यभागांतंकृत्वा स्रुतादिभिरन्वारब्धोऽवदानधर्मेणावदाय । ॐ अपश्वेतपदाजहिपूर्वेणचापरेणच । सप्तचवारुणीरिमाःसर्वाश्चराजवांधवीःस्वाहा श्वेतायेदंनमम । ॐ नवैश्वेतश्चाभ्यागारेहिर्जघानकिंचन । श्वेतायवैदार्वायनमःस्वाहा । इतिद्वेपायसाहुतीहुत्वा श्वेतायेदंनममेतित्यजेत् । नात्रसौविष्टकृत् । ततः ॐ अभयंनःप्रजापत्येभ्योभूयादित्यग्निमीक्षमाणोजपित्वा शिवोनःसुमनाभवइत्युक्त्वा हेमंतेतिसंबुद्ध्यंतंमनसास्मरेत् । ततोऽग्नेःपश्चाद्देशेपूर्वपलालनिर्मितंकटंकर्ताशयनार्थंस्वयमास्तीर्य स्त्रीपुत्रादिसहितस्तस्मिन्नुपविश्य स्योनापृथिविमेधातिथिर्भूमिर्गायत्री । जपेवि० । ॐ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । इतिपठेत् । एतदारभ्यमंत्रोच्चारणार्हाःस्त्रीबालव्यतिरिक्ताःस्योनापृथिवीत्यादिस्वस्त्ययनपर्यंतान्मंत्रान्जपेयुः । ततःकर्ताप्राक्शिराउदङ्मुखोदक्षिणपार्श्वेनशयीत । गृहिणोनंतरंयथाज्येष्ठंसर्वेपुत्रपौत्रास्तथैवशयीरन् । ततउत्थायोपवि

१ अग्निसाहसनामायमितिविभाव्यध्यानादि । २ अपश्वेतइत्यादिद्वयोर्गौतमोवामदेवःश्वेतोऽनुष्टुब्वत्यागायत्रीप्रत्यवरोहणप्रधानहोमेवि० । ३ अभयनइत्यादिद्वयोर्गौतमोवामदेवोऽग्निर्हेमतौयजुःजपेवि० ।

श्यप्राङ्मुखाः । अतोदेवामेधातिथिर्देवागायत्री । जपेवि० । ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधा
मभिः । इतिऋचंत्रिर्जपित्वापुनरपितथैवशयित्वोत्थायोपविश्य दक्षिणमुखाः । ॐ अतोदेवाअवंतुनः इतिप्रथमपादंसकृज्ज
पित्वा पुनरपिशयित्वोत्थायोपविश्य पश्चिमाभिमुखाः । ॐ यतोविष्णुर्विचक्रमे इतिद्वितीयपादंसकृज्जपित्वा । पुनस्त
थैवशयित्वोत्थायोदङ्मुखाः उपविश्य ॐ पृथिव्याःसप्तधामभिः इतितृतीयपादंसकृज्जपेयुः । ततःकर्तास्विष्टकृदूर्ज
इध्मरज्जुप्रहरणादिकर्मशेषंसमाप्य पवित्रग्रंथिंविस्रस्यशुचिदेशेक्षिपेत् । ततःसर्वेयथंयथाशय्यांशयित्वोत्थायोदितेसूर्ये
कृतक्रियाःसंगम्यसौर्याणिस्वस्त्ययनानिचजपेयुः । तानिच । उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वःसूर्योगायत्री
अंत्याश्चतस्रोनुष्टुभः । जपेविनियोगः । ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः । दृशेविश्वायसूर्यम् । अपत्येतायवो
यथानक्षत्रायंत्यक्तुभिः । सूरायविश्वचक्षसे । अदृश्रमस्यकेतवोविरश्मयोजनाँअनु । भ्राजंतोअग्नयोयथा । तरणिर्विश्वदर्श
तोज्योतिष्कृदसिसूर्य । विश्वमाभासिरोचनम् । प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् । प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापा
वकचक्षसाभुरण्यंतंजनाँअनु । त्वंवरुणपश्यसि । विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः । पश्यन्जन्मानिसूर्य । सप्तत्वाह
रितोरथेवहंतिदेवसूर्य । शोचिष्केशंविचक्षण । अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः । ताभिर्यातिस्वयुक्तिभिः । उद्वयंतम
सस्परिज्योतिष्पश्यंतउत्तरम् । देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमम् । उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम् । हृद्रोगंममसूर्य

१ सर्वेस्वस्वशय्यायांशयीरन् । यजमानःप्रातर्होमांतेकृतसंध्यैःसर्वैःसहजपेत् ।

हरिमाणंचनाशय । शुकेषुमेहरिमाणंरोपणाकासुदध्मसि । अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि । उदगादयमादित्योविश्वे
नसहसासह । द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधम् ॥ २ ॥ नवर्चमेवैतज्जप्यमितिकारिकायां । चित्रंदेवानामितिषळर्चस्यसू
क्तस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् । जपेविनियोगः । ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथि
वीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च । सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् । यत्रानरोदेवयंतोयुगानिवि
तन्वतेप्रतिभद्रायभद्रम् । भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः । नमस्यंतोदिवआपृष्ठमस्थुःपरिद्यावापृथिवीयं
तिसद्यः । तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोविततंसंजभार । यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै । तन्मि
त्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे । अनंतमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति । अद्यादेवाउदितासूर्यस्य
निरंहसःपिपृतानिरवद्यात् । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ १ ॥ नमोमित्रस्येतिद्वादशर्चस्यसूक्त
स्यसौर्योभितपाःसूर्योजगतीदशमीत्रिष्टुप् । जपेवि० । ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत । दूरेदृशेदेव
जातायकेतवेदिवस्पुत्रायसूर्यायशंसत । सामासत्योक्तिःपरिपातुविश्वतोद्यावाचयत्रततनन्नहानिच । विश्वमन्यन्निविशते
यदेजतिविश्वाहापोविश्वाहोदेतिसूर्यः । नतेअदेवःप्रदिवोनिवासतेयदेतशेभिःपतरैरथर्यसि । प्राचीनमन्यदनुवर्ततेरजउद
न्येनज्योतिषायासिसूर्य । येनसूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना । तेनास्मद्विश्वामानिरामनाहुतिमपामी
वामपदुःष्वप्न्यंसुव । विश्वस्यहिप्रेषितोरक्षसिव्रतमहेळयन्नुच्चरसिस्वधाअनु । यदद्यत्वासूर्योपब्रवामहैतन्नोदेवाअनुमंसीरत

ऋतुम् । तन्नोद्यावापृथिवीतन्नआपइंद्रःशृण्वंतुमरुतोहवंवचः । माशूनेभूमसूर्यस्यसंदृशिभद्रंजीवंतोजरणामशीमहि ॥ १ ॥
विश्वाहात्वासुमनसःसुचक्षसःप्रजावंतोअनमीवाअनागसः । उद्यंतंत्वामित्रमहोदिवेदिवेज्योग्जीवाःप्रतिपश्येमसूर्य । महि
ज्योतिर्बिभ्रतंत्वाविचक्षणभास्वंतंचक्षुषेचक्षुषेमयः। आरोहंतंबृहतःपाजसस्परिवयंजीवाःप्रतिपश्येमसूर्य।यस्यतेविश्वाभुवनानि
केतुनाप्रचेरतेनिचविशंतेअक्तुभिः । अनागास्त्वेनहरिकेशसूर्याह्नाह्नानोवस्यसावस्यसोदिहि । शंनोभवचक्षसाशंनोअह्नाशं
भानुनाशंहिमाशंघृणेन । यथाशमध्वञ्छमसद्दुरोणेतत्सूर्यद्रविणंधेहिचित्रम् । अस्माकंदेवाउभयायजन्मनेशर्मयच्छतद्विपदे
चतुष्पदे । अदत्पिबदूर्जयमानमाशितंतदस्मेशंयोररपोदधातन । यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनम्
अरावायोनोअभिदुच्छुनायतेतस्मिन्तदेनोवसवोनिधेतन ॥ २ ॥ सूर्योनइतिपंचर्चस्यसूक्तस्यसौर्यश्चक्षुःसूर्योगायत्री । जपे
विनि० । ॐ सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । जोषासवितर्यस्यतेहरःशतंसवाँअर्हति । पाहिनोदि
द्युतःपतंत्याः । चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः । चक्षुर्धातादधातुनः । चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः । संचेदं
विचपश्येम । सुसंदृशंत्वावयंप्रतिपश्येमसूर्य । विपश्येमनृचक्षसः ॥ १ ॥ आनोभद्राइतिदशर्चस्यसूक्तस्यराहूगणोगोतमो
विश्वेदेवास्त्रिष्टुप्पंचाद्याःसप्तमीचजगत्यःषष्ठीविराट् । जपेविनियोगः । ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरी
तासउद्भिदः । देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे । देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिव
र्तताम् । देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे । तान्पूर्वयानिविदाहूमहेवयभगंमित्रमदितिंदक्षमस्रिधम् ।

अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत्। तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः। तद्ग्रावाणः
सोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवम् । तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् । तद्ग्रावाणः
वेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १ ॥ स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः । पूषानोयथा
मिःस्वस्तिनोबृहस्पतिर्दधातु । पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः । स्वस्तिनस्तार्क्ष्योअरिष्टने
नोदेवाअवसागमन्निह । भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः । अग्निजिह्वामनवःसूरचक्षसोविश्वे
दायुः। शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनाम् । पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः। अदिति
द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः। विश्वेदेवाअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वम् ॥ २ ॥ स्वस्तिनोमि
मीतामितिपंचर्चस्यसूक्तस्यात्रिर्विश्वेदेवास्त्रिष्टुप् अन्त्येद्वेअनुष्टुभौ । जपेविनियोगः । ॐ स्वस्तिनोमिमीतामश्विनाभगः
स्वस्तिदेव्यदितिरनवर्णः। स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना । स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुव
नस्ययस्पतिः। बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः। विश्वेदेवानोअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्तये ।
देवाअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः । स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति । स्वस्तिनइंद्रश्चाग्निश्चस्वस्तिनोअदि
तेकृधि। स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव । पुनर्ददताघ्नताजानतासंगमेमहि ॥ १ ॥ परावतइतिसप्तदशर्चस्यनाभा
नेदिष्ठोमानवोविश्वेदेवाजगतीअन्त्येद्वेत्रिष्टुभौ। जपेविनियोगः। ॐ परावतोयेदिधिषंतआप्यंमनुप्रीतासोजनिमाविवस्वतः।

यया तेयेंनहुष्यस्यबर्हिषिदेवाआसतेतेअधिब्रुवंतुनः । विश्वाहिवोनमस्यानिवंद्यानाम।निदेवाउतयज्ञियानिवः । येस्थजाता
अदितेरद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवम् । येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभ
रान्त्स्वप्नसस्तांआदित्यांअनुमदास्वस्तये । नृचक्षसोअनिमिषंतोअर्हणाबृहद्देवासोअमृतत्वमानशुः । ज्योतीरथाअहिमाया
अनागसोदिवोवर्ष्माणंवसतेस्वस्तये । सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृतादधिरेदिविक्षयं । तांआविवासनमसासुवृक्तिभिर्महो
आदित्याँअदितिंस्वस्तये ॥ १ ॥ कोवःस्तोमंराधतियंजुजोषथविश्वेदेवासोमनुषोयतिष्ठन । कोवोध्वरंतुविजाताअरंकरद्योनः
पर्षदत्यंहःस्वस्तये । येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसासप्तहोतृभिः । तआदित्याअभयंशर्मयच्छतसुगानःकर्तसु
पथास्वस्तये । यईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जगतश्चमंतवः । तेनःकृतादकृतादेनसस्पर्यद्यादेवासःपिपृतास्वस्तये ।
भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनम् । अग्निंमित्रंवरुणंसातयेभगंद्यावापृथिवीमरुतःस्वस्तये । सुत्रामाणंपृथिवींद्या
मनेहसंसुशर्माणमदितिंसुप्रणीतिम् । दैवींनावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तये ॥ २ ॥ विश्वेयजत्राअधिवोचतोतये
त्रायध्वंनोदुरेवायाअभिह्रुतः । सत्ययावोदेवहूत्याहुवेमशृण्वतोदेवाअवसेस्वस्तये । अपामीवामपविश्वामनाहुतिमपारातिं
दुर्विदत्रामघायतः । आरेदेवाद्वेषोअस्मद्युयोतनोरुणःशर्मयच्छतास्वस्तये । अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मण
स्परि । यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये । यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने । प्रात
र्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमास्वस्तये । स्वस्तिनःपथ्यासुधन्वसुस्वस्त्यप्सुवृजनेस्वर्वति । स्वस्तिनःपुत्रकृथेषुयोनिं

घुस्वस्तिरायेमरुतोदधातन । स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति । सानोअमासोअरणेनिपातुस्वावेशाभवतुदेवगोपा । एवाप्लुतेःसूनुरवीवृधद्वोविश्वआदित्याअदितेमनीषी । ईशानासोनरोअमर्त्येनास्ताविजनोद्विव्योगयेन । इत्येतानि सर्वाणिजपेयुः । अतिवहुत्वादत्रनलिख्यंते । ततोयजमानःसंस्कृतान्नेनस्वादुव्यंजनयुक्तेनत्रीनधिकान्वाशक्त्याब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाचयेदिति । इदमपिकेचिदुक्त्वाकुर्वंति । युक्तंतुपवित्रक्षेपणांतमुपवासीकृत्वाभुक्त्वाशयीतेति ॥ ॥

इतिप्रत्यवरोहणप्रयोगः ॥ ॥ ॥ ॥ ॥

अथपिंडपितृयज्ञप्रयोगः ॥ ॥ सचानाहिताग्निनापिकार्यः । एवमनाहिताग्निर्नित्येश्रपयित्वातिप्रणीयजुहुयादितिसूत्रात् । नित्येऔपासनाग्नावित्यर्थः । तस्यचायमाहिताग्नितोविशेषः । हविःश्रपणंकृत्वाऽतिप्रणयनंकर्तव्यम् । ततोऽतिप्रणीतस्योपसमाधानंपरिस्तरणंचकृत्वाततोर्वागतिप्रणीतादित्यादिसमानम् । यस्मिन्नहोरात्रेपर्वप्रतिपदोःसंधिस्तत्रापराह्णेयागदिने तत्पूर्वदिनेवापिंडपितृयज्ञःकार्यः। अहोरात्रतिथिसंधौतुयागपूर्वदिनएवेतिवृत्तिकृत् । उक्तापराह्णेऔपासनाग्निप्रज्वाल्यशुचिराचातःप्राणानायम्यधृतपवित्रोदेशकालौस्मृत्वा पितृतृप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंकरिष्ये इतिसंकल्प्याग्नेयाभि

---

१ उक्तदिनेचरुस्थाल्यादीनिदर्शपौर्णमासिकातिरिक्तानिपात्राणि आज्यनवनीतवा त्रैककुदलौकिकंवा अजनघृतमिश्र ईपद्विलीनमाज्यतिलतैलं वाभ्यजन कार्पासशयनीयकशिपु कार्पासमुपवानमुपवर्हण वासस्तदर्थंद्रव्याणिवा व्रीहीन् शकटचसपादयेत् । एवंसंपादनासभवेदार्शपौर्णमासिकान्येवपात्राणिग्राह्याणि ।

मुखोऽग्निंध्यात्वापरिसमुह्याग्नेय्यग्रकैर्दर्भैःपरिस्तीर्याग्नेरीशान्यांवायव्यांवाग्नेयाग्रकान्दर्भानास्तीर्यपर्युक्ष्य तेषुचरुस्थालीशूर्प स्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नकुशेध्ममेक्षणजलपूर्णकमंडलूनितियथायोग्यंन्यग्बिलान्येकैकशआग्नेयसं स्थान्यासादयेत् । काष्ठखड्गःस्फ्यः । आज्यधारणार्थागंध्रुवा । शेषंप्रसिद्धम् । पात्राण्युत्तानानिकृत्वाकमंडलुजलेनप्रोक्ष्य

१ अग्निंध्यात्वैव दक्षिणाग्नेरेकत प्रदीप्तंधूपायदुल्मुकप्राग्दक्षिणाप्रणयेत् येरूपाणिप्रतिमुंचमानाइति । यदाप्यनाहिताग्निःपिंडपितृयज्ञंदर्शश्राद्धंचव्यतिपज्यकुर्यात्तदापीदानीमेवऔपासनाग्नेरतिप्रणयनं । यदातुसएवकेवलंपिंडपितृयज्ञंकुर्यात्तदाश्रपणोत्तरमतिप्रणयनम् । अस्मिन्कर्मण्यव शिष्टदिक्कानिसर्वकर्माण्याग्नेयीसस्थानिकार्याणि । उल्मुकंस्थंडिलादौनिधायउभावग्नीप्रज्वाल्य आग्नेयकोणमारभ्याप्रदक्षिणसमंतात्सकृत्परिसमुह्य अप्रदक्षिणप्राग्दक्षिणाग्रैर्दर्भैः परिस्तृणीयात् । यथापुरस्ताद्दक्षिणाग्रान्दक्षिणतःप्रागग्रान्पश्चाद्दक्षिणाग्रानुत्तरतःप्रागग्रानुत्तरानुत्तरान्दक्षिणानधरान्कुर्यात् । परिसमूहनवत्पर्युक्षणम् । २ सकृदाच्छिन्नंबर्हिः समूलप्रशस्तम् । अच्छिन्नाग्रा समूलाश्चपित्र्येतुहरिता स्मृता । अमूलादेवकार्येषुप्रयोज्याःस्यु सदाबुधैरितिस्मृत्यर्थसारात् । ३ तूष्णींप्रोक्ष्यशूर्पेस्थालींप्रगृह्यदक्षिणाग्नेर्दक्षिणतोवस्थितस्यप्रागीपस्यव्रीहिमच्छकटस्यदक्षिणार्धेआरुह्यसव्यंजान्वाच्यपितॄन्ध्यायन्नेकपवित्रांतर्हितांस्थालींनीचामुष्टिनाविषमसंख्यमुष्टिभिर्व्रीहिभिः पूरयेत्पितृभ्योनिर्वपामिइति तूष्णींवा । एवंव्रीहिभिःपूरयित्वास्थालीमुखंसमीकुर्वन्नुपरिराशीभूतान्हस्तेननिःसार्यशूर्पेपतितान्छकटेप्रास्येत् । शकटाभावेदक्षिणाग्नेपुकुशेपुस्थ्यनिधायोपरिष्टाद्व्रीहीन्पात्र्यांपुरस्ताच्छूर्पेस्थालींनिधायपूरयेदितिविशेषः । शकटादवरुह्यस्थालीस्थान्व्रीहीन्सकृदुत्पूयसकृत्प्रोक्ष्यदक्षिणाग्नेर्दक्षिणतःप्रत्यगुदग्ग्रीवेकृष्णाजिनेउलूखलंनिधायदक्षिणाप्राचीतिष्ठतीपत्नीतथासकृदवहन्याद्यथाफलीकृताइवभवति । शूर्पेणतुपानपोह्यसतुपवितुषाणांपृथक्करणरूपंविवेचनंनकुर्यात् । पत्न्यसंभवेयजमानएवतिष्ठन्नवघातादिकुर्यात् । यजमानोवहतान्सकृत्प्रक्षाल्यदक्षिणाग्नौस्थालीमधिश्रित्यपवित्रवत्यांस्थाल्यामपआनीयतंडुलानोप्य मेक्षणेनप्रसव्यंपर्यालोडयन्जीवतंडुलश्रपयेत् ।

स्थालींशूर्पंचादायाग्नेर्दक्षिणतोवस्थितव्रीहिमच्छकटंदक्षिणतआरुह्य स्थालींशूर्पेनिधायव्रीहिभिःपूरयित्वा यथास्थालीमुखोपरिस्थाःशूर्पेपतंतितथानिमृज्य स्थाल्यास्यदेशतःपतितान्व्रीहीन्शकटेप्रास्य अग्नेःपश्चिमतोवायव्यग्रीवेआस्तीर्णेकृष्णाजिनउलूखलंनिधायतत्रस्थालीस्थान्[1]व्रीहीन्निधायाग्नेय्यभिमुख्यातिष्ठंत्यापत्न्यावहतान्सकृत्फलीकृतानविविच्यसकृत्प्रक्षालितान्जीवतंडुलान्श्रपयेत् । चरु[2]मनुद्वास्यैवाग्नेरेकंप्रदीप्तमुल्मुकंगृहीत्वाग्नेराग्नेय्यांदिशिकृतेशुचिस्थंडिले येरूपाणिप्रतिमुंचमानाअसुराःसंतःस्वधयाचरंति । परापुरोनिपुरोयेभरंत्यग्निष्टांल्लोकात्प्रणुदात्वस्मात् । इतिमंत्रेणनीत्वा तमतिप्रणीताख्यमग्निमाग्नेयाग्रकैःकुशैःपरि[3]स्तीर्य दक्षिणाभिमुखः अपहताअसुरारक्षांसिवेदिषदः इतिमंत्रेणौपासनातिप्रणीतयोरंतरालेस्फ्येनसव्योत्तरपाणिद्वयगृहीतेनकुशमूलेनवाग्नेयाभिमुखांलेखां[4]मुल्लिख्य तामद्भिरभ्युक्ष्य सकृदाच्छिन्नबर्हिषाच्छाद्य अनुत्पूतमाज्यंविलापितमुत्पूतंनवनीतंवा ध्रुवायामासिच्याग्नेर्दक्षिणतःकुशेष्वासाद्य स्रुवंसंमृज्यतेनध्रुवास्थमाज्यमादाय चरुमभिघार्योदगुद्वास्य अतिप्रणीताग्नेःपश्चाद्दर्भेष्वासाद्य तद्दक्षिणतोऽभ्यंजनांजनकशिपूपबर्हणान्यासादयेत् । ततोऽतिप्रणीताग्नेःपश्चिमतउपविश्यार्चयित्वा प्राचीनावीत्यभिघारितमरत्निमितंपंचदशदारुकमिध्मंपितृतीर्थेनतूष्णीमग्नावभ्याधाय स्रुवेणा

---

१ तडुलनिर्वापेकृष्णाजिनोलूखलमुसलशूर्पाणानिवृत्तिरितिचद्रचूडीये । अनाहिताग्निपिडपितृयज्ञेतुचर्वाद्यासादनहोमातिरिक्तसर्वंदक्षिणाग्निकार्यंऔपासनेकुर्यात् । २ इदमत्रातिप्रणयनमनाहिताग्नेःकेवलपिडपितृयज्ञविषयकमितिज्ञेयम् । ३ परिस्तीर्येत्युक्तेपितस्यप्रज्वलनपरिसमूहनपरिस्तरणपर्युक्षणानाग्रहोज्ञेयः । ४ व्यतिषंगेतुमातामहत्रयसत्वेलेखाद्वयंकार्यं । तच्चस्फ्याभावेकुशै कार्यं ।

ज्यमादाय मेक्षणमुपस्तीर्य उद्धृतचरुंद्विधाविभज्य उत्तरभागमध्यादंगुष्ठपर्वमात्रंमेक्षणेनावदाय पुनःपूर्वभागादवदाय पात्रस्थमवत्तंचाभिघार्य[1]। सोमायपितृमतेस्वधानमः इत्यतिप्रणीताग्नेर्दक्षिणभागेपराचीनपाणिर्हुत्वा सोमायपितृमतइदंनममेति त्यजेत्। पुनःपूर्ववद्दक्षिणभागस्थचरोरवदाय अग्नयेकव्यवाहनायस्वधानमइत्यग्नेरुत्तरभागेपूर्ववद्धुत्वा अग्नयेकव्यवाहनायेदंनममेतित्यक्त्वा उपवीतीतूष्णींमेक्षणमग्नावनुप्रहरेत्। स्वधानमःस्थानेस्वाहाकारेणवाहोमस्तदाहुत्योर्व्यत्ययउपवीतिताच मेक्षणानुप्रहरणपर्यंतं—यथाअग्नयेकव्यवाहनायस्वाहेतिप्रथमाहुतिः। सोमायपितृमतेस्वाहेतिद्वितीया त्यागश्चआहुतिवत्। ततःप्राचीनावीती। पूर्वक्तृतलेखायांस्थापितकमंडलुजलंदक्षिणहस्तेनपितृतीर्थेनाग्नेयापवर्गं शुंधंतांपितरःशुधंतांपितामहाःशुंधंतांप्रपितामहाः इतिमंत्रैस्त्रिर्निनयेत्[2]। ततोहुतशेषेणसाज्येनत्रीन्पिंडान्कृत्वातस्यांलेखायां पराचीनपाणिःपितृतीर्थेनतान्पिंडानाग्नेयापवर्गंपित्रादिभ्योदद्यात्। यथा। एतत्तेऽमुकशर्मन्येचत्वामत्रानुतेभ्यश्चेतिपित्रे एवंपितामहप्रपितामहयोरपि[3]।

१ अत्रकेचिद्धविःप्रत्यभिघारणस्यस्विष्टकृत्संस्कारार्थत्वादिहनभवतीतिवदंतितन्नयुक्तं। सर्वत्रहविःप्रत्यभिघारणस्योपयोक्ष्यमाणसंस्कारार्थत्वकल्पनात् इहचतस्यहविष.पिंडार्थमुपयोगात्स्यादेव। २ अत्रजीवत्पितृकस्यानेकपक्षा सूत्रकारेणोक्तास्तेषामुपयोगाभावान्नेहव्याख्याताः। तस्यतु होमांतमनारंभोवेतिवचनादन्यतरंभवति एतद्विकृतित्वादष्टकास्वेवाधिकारः। प्रसंगादिहैवेदंविचार्यते पिंडपितृयज्ञेअनारब्धेऽष्टकाभवंतिनेति। अत्रकेचित्प्रकृत्यारंभंविनाविकृतावधिकारोनास्तीतिवदंति। युक्तंचेदं। एवंचानियमेसतिदर्शपूर्णमासारंभात्प्राक्पवमानेष्ट्यधिकरणप्रसक्तेःप्रकृत्यारंभंविनाविकृत्यारंभोवश्यंवक्तव्यः। अतएवत्रिकांडमडनः—आरब्धप्रकृतेरेवविकृतावधिकारताइत्याह। नायंनियमइत्येके इति सं० कौ०। ३ अत्रास्मच्छब्दगोत्रवस्वादिरूपकीर्तनपुनश्चतुर्थ्यंतनमःशब्दोच्चारणानिनसंति।

ततः अत्रपितरोमादयध्वंयथाभागमावृषायध्वमितिसकृत्पिंडाननुमंत्र्य सव्येनपार्श्वेनवावृत्त्योदङ्मुखोभूत्वा यथाशक्तिप्राणान्नियम्यअभिपर्यावृत्य अमीमदंतपितरोयथाभागमावृषायीषत इतिपुनस्ताननुमंत्र्य उपवीती चरुशेषमवघ्रायाचम्य प्राचीनावीती पूर्ववच्छुंधंतांपितरइत्याद्यैस्त्रिभिःकमंडलुजलंपिंडांतेनिनीय अमुकशर्मन्नभ्यंक्ष्वेतित्रिभ्योपिपिंडेष्वभ्यंजनंतैलंघृतंवादर्भेणदत्त्वा अमुकशर्मन्नंक्ष्वेतितथैवांजनंदद्यात् । अथ एतद्वःपितरोवासोमानोतोन्यत्पितरोयुङ्ध्वं इतिप्रतिपिंडंमंत्रावृत्त्यानववासोदशां पंचाशद्वर्षाधिकंवयश्चेत्स्वप्रकोष्ठहृदयान्यतरंलोमवादत्त्वा कशिपूपबर्हणेनिवेद्य सव्योत्तराभ्यांकृतांजलिराग्नेयाभिमुखःपिंडानुपतिष्ठेतमंत्रैः । यथा । नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवायनमोवःपितरोरसाय । स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतःस्याम । मनोन्वाहुवामहेनाराशंसेनसोमेन । पितॄणांचमन्मभिः । आतएतुमनःपुनःक्रत्वेदक्षायजीवसे । ज्योक्चसूर्यंदृशे । पुनर्नःपितरोमनोददातुदव्योजनः । जीवंव्रातंसचेमहि । इतिचतिसृभिर्मंत्रैरुपस्थाय । अथ परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः । दत्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत । इतिमंत्रेणपिण्डानाग्नेयाभिमुखंसकृदुत्तानेनहस्तेनचालयेत् । ततः । अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशम् । ऋध्यामातओहैः । इतिऔपासनाग्निसमीपं

१ प्रत्येयादितिवचनसामर्थ्याद्दक्षिणाभिमुखेनात्रार्किंचिदनुव्रजनकर्तव्यं । अग्निमित्यविशेषवचनेनदक्षिणाग्निमेवेति सं० कौ० ।

गत्वा । यद्अंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम । अग्निर्मातस्मादेनसःप्रमुंचतुकरोतुमामनेनसम् । इतिमंत्रंगार्हपत्यपदरहितंजपेत् । केचित्तुद्वाभ्यामपिमंत्राभ्यामग्न्युपस्थानमाहुः । अथवीरंमेदत्तपितरः इतिमंत्रेणमध्यमंपिंडमादायसुपुत्रप्राप्त्यैपत्न्याप्राशयेत् । आधत्तपितरोगर्भंकुमारंपुष्करस्रजम् । यथायमरपाअसत् । इतिमंत्रेण । अयंमंत्रःपत्न्याः । इतरौपिंडावप्स्वतिप्रणीतेवाक्षिपेत् । आसादितानांद्वादशपात्राणांमध्येसकृदाच्छिन्नबर्हिरिध्ममेक्षणानांविनियुक्तत्वात् । अवशिष्टानांनवानांद्वंद्वशउत्सर्गः । अवशिष्टमेकंतृणेनसहोत्सृजेत् । अत्रपित्रादिनामाज्ञानेतत्तन्नामस्थानेततइत्यस्यानंतरंततपितामहप्रपितामहइतिशब्दाःक्रमेणपिंडदानमंत्रेप्रयोज्याः । एकस्यद्वयोर्वानामाज्ञानेपियथास्थानं ततादिशब्दप्रयोगोऽन्यत्रनामप्रयोगः । अत्रपित्रादीनामध्येएकस्यद्वयोर्वाजीवनेतत्पिंडदानकालेपूर्वोक्तपिंडदानमंत्रेणस्वाहाकारांतेनजीवदुद्देशेनाग्नौसव्यपाणिनापिंडहोमः । त्रयाणामपिजीवनेपितृमातृजीवनेवात्रयोपिपिंडाहोतव्याः । अथवापिंडदानरहितोहोमांतएवपिंडपितृयज्ञः । अनारंभोवापिंडपितृयज्ञस्य अन्येतुनजीवंतमपिदद्यादितिश्रुतेः पितरितदादित्रिकेवाजीवतित्रिभ्योपिहोमएवनभूमौपिंडदानम् । जीवत्पितामहस्यपित्रेपिंडंदत्त्वाद्वयोर्होमः । जीवत्प्रपितामहस्याद्ययोःपिंडःप्रपितामहस्यहोमः । होमेचयज्ञोपवीतितासर्वत्र । इत्याद्याकरतोज्ञेयम् । अत्रचरुश्रपणहोमयोरधिकरणविकल्पमाहापस्तंबः—सोयमेवंविहितस्यानाहिताग्नेरौपासनेश्रपणंहोमश्चातिप्रणीतेवाजुहुयादिति । एतद्व्याख्यारुद्रदत्तीया—अनाहिताग्नेर्दक्षिणाग्निस्थानीयऔपासने

१ इतिप्रत्येयादितिशेषः । २ इत्यावृत्तेनमध्यमपिंडद्वयमादायआधत्तइतिमंत्रंसकृद्ब्रुवतीपत्नीतद्द्वयमेकीकृत्यप्राश्नीयादिति स० कौमुदी ।

श्रपणहोमौभवतः । अथवा औपासनएवश्रपयित्वाततोग्निंदक्षिणाप्राचंप्रणीयतस्मिन्जुहुयादित्यर्थइति । एवंचौपासनेएव होमः अतिप्रणीतस्त्वदृष्टार्थइतिकेचित् । अन्येतुनित्येश्रपयित्वातिप्रणीयजुहुयादित्याश्वलायनीयाद्वाक्यसमभिव्याहारात्सन्निधानादतिप्रणीतदृष्टार्थत्वाच्चातिप्रणीतएवहोमइति । हरदत्तभाष्यमप्येवम् । अत्रबहुलेख्यमपिपद्धतित्वान्नलिखितम् । सयुक्तिकत्वात्तुअतिप्रणीतेहोमइत्युक्तम् । यद्वा यथासंप्रदायंविचार्यकार्यम् । सकृदाच्छिन्नकुशाख्यपिंडबर्हिरभावेकाशादि ग्राह्यम् । तदुक्तंविष्णुधर्मोत्तरे—पिंडनिर्वपणंकार्यंकुशाभावेविचक्षणैः । काशेपुराजदूर्वासुपवित्रेपरमेस्मृते । इति । राजदूर्वाअतिदीर्घदूर्वाः ॥ ॥ ॥ ॥ ॥

अथपिंडपितृयज्ञपार्वणश्राद्धयोर्व्यतिषंगप्रयोगः ॥ ॥ योऽनाहिताग्निरौपासनाग्निमान्मृतपितृकःसवक्ष्यमाणंपार्वणश्राद्धपिंडपितृयज्ञंव्यतिषङ्गेणकुर्यात् । व्यतिषंगोनामद्वयोर्विच्छिद्यसहानुष्ठानात्मकस्तंत्रविषयः । तत्रेपार्वणश्राद्धंपिंडपितृ

१ व्यतिषंगपक्षेऽप्यहोमोऽतिप्रणीतेभवतिअन्यथामुख्येइतिसिंधौ । २ तत्रतिलोदकसपादनातपार्वणवत्कृत्वा आचम्यतीर्थप्रवेशादिदेशकालकीर्तनांते उपक्रांतपार्वणश्राद्धममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंचव्यतिषज्यकरिष्येइतिसकल्प्य अग्निंध्यात्वायेरूपाणीत्यादि । मातामहादिकरणपक्षेसकृदाच्छिन्नद्वयं । पात्रप्रोक्षणादिश्रपणांते मातामहादिसत्वे मंत्रावृत्त्याद्वितीयालेखामुल्लिख्यद्वयोरभ्युक्षणादि । अभ्यंजनासादनांतेमातामहादिसत्वे द्वितीयकशिपूपबर्हणंवासस्तदर्थद्रव्यंवासादयेत् । एतदंतंपिंडपितृयज्ञस्यकृत्वा स्वागतप्रश्नादिपित्र्यविप्रपाणिशोधनांतं श्राद्धंकुर्यात् । यत्तुइध्माधानांतेस्वागतप्रश्नादीति तत्परिशिष्टविरुद्धम् । अथकांस्येस्थालीपाकादन्नमुद्धृत्येत्यादिमेक्षणानुप्रहरणांतपिंडपितृयज्ञंकृत्वा

यज्ञंचव्यतिषंगेणकरिष्येइतिसंकल्प्य इध्माधानात्प्राक्तनंपितृयज्ञंकृत्वा ब्राह्मणपच्छौचादिआच्छादनांतंश्राद्धं पुनरिध्माधानादिपितृयज्ञआमेक्षणानुप्रहरणमथपार्वणमत्रानुज्ञानादथोभयशेषंक्रमेणसमापयेदितिक्रमः । आहिताग्निस्तुसर्वाधान्यर्धाधानीवादक्षिणाग्नावेवपिंडपितृयज्ञंकृत्वापार्वणश्राद्धंपृथगेवकुर्यात् । तत्प्रकारंतुश्राद्धप्रयोगेवक्ष्यामः ॥ ॥ इतिभट्टनारायणविरचितेप्रयोगरत्नेपिंडपितृयज्ञप्रयोगः ॥ ॥ ॥ ॥

अथाल्पवक्तव्यत्पार्वणश्राद्धात्पूर्वमष्टकाश्राद्धप्रयोगउच्यते ॥ ॥ हेमंतशिशिराख्येषुमार्गशीर्षादिचतुर्षुमासेषुकृष्णपक्षे सप्तम्यादित्र्यहसाध्यमष्टकाश्राद्धंकुर्यात् । अशक्तोमाघमासएवकुर्यात् । तत्रायंक्रमः । षष्ठ्यांसायंहोमानंतरंसप्तम्यामेववा प्रातर्होमानंतरंदेशकालौसंकीर्त्यदर्शवत्पित्रादीन्मातामहादींश्चसपत्नीकाननूद्य नित्यविधिरूपमष्टकाश्राद्धंकर्तुकामःपूर्वेद्युःश्राद्धंकरिष्यइतिसंकल्प्य ब्राह्मणनिमंत्रणादिद्वितीयसंकल्पांतंकृत्वा विप्रान्सन्निधाय्याग्निसमिंधनादिपरिषेचनांतंकृत्वास्थाली

---

मंडलादिकरिष्यइत्यादिपिंडनिपरणंकरिष्यइतिप्रश्नान्तेपिंडपितृयज्ञवत्पिंडदानादिपात्रोत्सर्गांतंकृत्वा अनाचांतेषुपिंडदानपक्षेइदानींब्राह्मणानाचमय्य विकिरणादिश्राद्धशेषंसमापयेत् । इति । १ अपूपमात्रपक्षेतत्स्थापनार्थैकैवस्थाली । शूर्पोलूखलमुसलकृष्णाजिनानांनिवृत्तिः । अतःपात्रासादनाते- स्थाल्यांगृहसिद्धान्नेनापूपान्निधायोल्मुकप्रणयनादिदक्षिणतोध्रुवानिधानांतंकृत्वाऽपूपस्थालीमग्नौनिधायाभिघार्योदगुद्वास्योल्मुकपश्चिमतोनिदध्यात् । ततःस्वागतंसुस्वागतमित्याद्याच्छादनकरशुद्ध्यंतंकृत्वाअपूपेभ्यउद्धृत्यघृताक्तंकृत्वाग्नौकरिष्यइतिपितृविप्रान्प्राचीनावीत्यनुज्ञाप्य इध्माधानादिमेक्ष- णप्रहरणांतंकृत्वा ततोहुतशिष्टपरिवेषणादिसंपन्नवाचनांतंकृत्वा उद्धृत्यभुक्तशेषान्नापूपेनसहपिंडान्कृत्वाशुंधंतापितरइत्यादिश्राद्धशेषंसमापयेदिति ।

त्रयंशूर्पादीनिचपिंडपितृयज्ञवत्पात्राण्यासाद्य स्थालीपुत्रीहिपूरणादितंडुलप्रक्षालनांतंकृत्वा तंडुलांस्तिसृषुस्थालीषुविभज्य शुद्धोदनंतिलमिश्रोदनंपायसंचश्रपयित्वातिप्रणयनादिध्रुवायामाज्यनिषेचनांतंकृत्वा चरुत्रयंक्रमेणाभिघार्योदगुद्वास्यातिप्रणीताग्नेःपश्चिमतोदक्षिणसंस्थंक्रमेणासाद्य तद्दक्षिणतोभ्यंजनाजनंकशिपूपबर्हणनिधानादिभस्ममर्यादाकरणोत्तरकर्तव्यपाणिशोधनांतंकृत्वा चरुत्रयंपात्रांतरेषुपृथगुद्धृत्यघृताक्तंकृत्वा प्राचीनावीत्यग्नौकरिष्यइतिपित्र्यब्राह्मणाननुज्ञाप्य अतिप्रणीताग्नाविध्ममुपसमाधाय ध्रौवाज्येनमेक्षणमुपस्तीर्य शुद्धोदनमध्यादंगुष्ठपर्वमात्रंमेक्षणेनावदाय पूर्वार्धाच्चतथैवावदाय कृसरान्नात्पायसाच्चतथैवावदाय स्थालीत्रयेशिष्टंपृथक्पृथगभिघार्याऽवत्तंचैकवारमभिघार्य । उदीरतामित्यष्टर्चस्यशंखःपितरस्त्रिष्टुप् । पूर्वेद्युश्चरुहोमेविनियोगः । ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः । असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषुस्वधानमः । इतिमेक्षणेनहुत्वा पितृभ्यइदंनमम । पुनश्चरुत्रयात्पूर्ववदवदाय । ॐ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः । येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षुस्वधानमः । पितृभ्यइदं० । ॐ आहंपितॄन्सुविदत्रांअवित्सिनपातंचविक्रमणंचविष्णोः । बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमिष्ठाःस्वधानमः । पितृभ्यइदं० । ॐ बर्हिषदःपितरऊत्य१र्वागिमावोहव्याचकृमाजुषध्वम् । तआगतावसाशंतमेनाथानःशंयोररपोदधातस्वधानमः । पितृभ्यइदं० ।
ॐ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु । तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेवंत्वस्मान्स्वधानमः । पितृभ्यइदं० ।
ॐ आच्याजानुदक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे । माहिंसिष्टपितरःकेनचिन्नोयद्वआगःपुरुषताकरामस्वधानमः । पितृ

भ्यइदं० । ॐ आसीनासोअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय । पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधातस्वधानमः । पितृभ्यइदं० । ॐ येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः । तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु स्वधानमः । पितृभ्यइदं० । एतैर्मंत्रैरपिस्वधानमोंतैरष्टाहुतीःपूर्ववद्धुत्वापितृभ्यइदंनममेत्युद्देशत्यागौप्रत्याहुतिकुर्यात् । ततो यज्ञोपवीतीमेक्षणमनुप्रहृत्यापउपस्पृश्य प्राचीनावीती हुतशिष्टचरुत्रयपरिवेषणादिसंपन्नवचनांतंकृत्वा चरुत्रयशेषं पिंडार्थमुद्धृत्यतेष्वन्नेषुनिक्षिप्यशेषनिवेदनादिविप्रविसर्जनांतंपार्वणश्राद्धवत्कृत्वा तदहरेवपितृमातामहवर्गद्वयस्यसपत्नीकस्य श्राद्धांगत्वेनतिलतर्पणंकृत्वापार्वणवन्नियमेनदिनशेषंनयेत् । आहिताग्निस्तुनिमंत्रणाद्याच्छादनांतंदक्षिणाग्निंइंधनादिहविरासादनांतंकृत्वापूर्ववद्ब्राह्मणाननुज्ञाप्यदक्षिणाग्नाविध्ममुपसमाधायोदीरतामित्यादिभिरष्टाहुतीर्हुत्वामेक्षणानुप्रहरणहोमशेषपरिवेषणादिब्राह्मणविसर्जनांतमनाहिताग्निवत्कुर्यात् । यन्मतेपिंडपितृयज्ञेऔपासनाग्नौहोमस्तेषामत्रापितेनैवहोमः । इति श्रीनारायणभट्टविरचितेप्रयोगरत्नेसप्तमीश्राद्धप्रयोगः ॥ ॥ ॥ ॥

अथाष्टमीश्राद्धप्रयोगः ॥ ॥ सप्तम्यांसायमौपासनहोमानंतरमष्टम्यांवाप्रातर्होमानंतरंदेशकालौसंकीर्त्यप्राचीनावीती

१ अत्रश्राद्धांगतर्पणंदर्शवत्पूर्वमेव । अष्टकास्त्वंतएव । तदितिवचनतु अष्टम्यामेवप्रवर्तते तस्याएकाष्टकापदवाच्यत्वात् । एवमन्वष्टक्येपि । एतेनप्रयोगपारिजातादिभिरंतेयदुक्तंतदपास्तमिति सं० कौमुद्यां । २ आसनउपविश्याचम्यप्राणानायम्यतिथ्यादिस्मृत्वा अष्टकाश्राद्धांगभूतंस्थालीपाकंकरिष्ये अग्निंप्रज्वाल्यध्यात्वाक्रियमाणेऽष्टकाश्राद्धांगस्थालीपाकेदेवतापरिग्रहार्थमित्यादिस्थालीपाकंसमाप्यविप्रसमीपेआचमनादिसर्वंकुर्यात ।

दर्शवत्षष्ठ्यंतान्षट्सपत्नीकान्पितॄननूद्य नित्यविधिरूपमष्टकाश्राद्धंकरिष्यइतिसंकल्प्य ब्राह्मणनिमंत्रणादिद्वितीयसंक
ल्पांतंकृत्वौपासनाग्निंप्रज्वाल्य समिद्द्वयमादायप्राणानायम्यतिथ्यादिसंकीर्त्याष्टकाश्राद्धांगहोमंकरिष्येइतिसंकल्प्य तत्रदेव
तापरिग्रहार्थमन्वाधानंकरिष्येइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा विश्वान्देवान्ससवारंचरुद्रव्येण शेषेणस्विष्टकृतमित्यादि
सद्योयक्ष्यइत्यंतमुक्त्वा समिद्द्वयंत्रयंवाग्नावाधायपरिसमूहनादिपूर्णपात्रप्रणयनांतंकृत्वा सपवित्रशूर्पमग्नेःपश्चिमतोनिधाय
तस्मिंश्चतुरश्चतुरोमुष्टीनाहुतिसंख्ययाविश्वान्देवान्ध्यात्वातूष्णींनिरुप्यतथैवप्रोक्ष्यावहननाद्याज्यभागांतंकृत्वाग्नौहोमंकरिष्ये
इतिपित्रर्थंब्राह्मणाननुज्ञाप्य कुरुष्वेतितैरुक्तश्चरोरभ्युद्धारमंत्रैर्होमंकुर्यात् । तत्रमंत्राः । अग्नेनयेतिमंत्रद्वयस्यागस्त्योविश्वेदे
वास्त्रिष्टुप् । अष्टकाहोमेविनियोगः । ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्य१स्मज्जुहुराणमे
नोभूयिष्ठांतेनमउक्तिंविधेमस्वाहा । विश्वेभ्योदेवेभ्यइदं० । ॐ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा ।
पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोःस्वाहा । विश्वेभ्योदेवेभ्यइदं० । ॐ ग्रीष्मोहेमंतऋतवःशिवानोवर्षाःशिवा
अभयाःशरन्नः । संवत्सरोधिपतिःप्राणदोनोहोरात्रेकृणुतांदीर्घमायुःस्वाहा । विश्वेभ्योदेवेभ्यइदं० । ॐ शांतापृथिवीशिव
मंतरिक्षंद्योर्नोदेव्यभयंनोअस्तु । शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतःस्वाहा । विश्वेभ्योदेवेभ्यइदं० ।
ॐ आपोमरीचीःप्रवहंतुनोधियोधातासमुद्रोवहंतुपापम् । भूतंभविष्यदभयंविश्वमस्तुमेब्रह्माधिगुप्तःस्वाराक्षराणिस्वाहा ।
विश्वेभ्योदेवेभ्यइदं० । ॐ विश्वआदित्यावसवश्चदेवारुद्रागोप्तारोमरुतःसदंतु । ऊर्जंप्रजाममृतंपिन्वमानःप्रजापतिर्मयिपरमे

ष्ठीदधातुस्वाहा । विश्वेभ्योदेवेभ्यइदं । एतैर्मंत्रैरेकश्रुत्यापठितैश्चतस्रआहुतीर्हुत्वा । प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् । अष्टकाहोमेविनियोगः । ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा । विश्वेभ्योदेवेभ्यइदं० ॥ ७ ॥ एवंसप्ताहुतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यस्वागतोक्त्याद्यर्घ्यशेषसमवनयनांतंकृत्वा ब्राह्मणसन्निधावाग्नेय्यांदिशिभुवंप्रोक्ष्यदर्शश्राद्धवत्प्रथमपात्रंन्युब्जंकृत्वागंधदानादिपाणिशोधनांतंकृत्वा भोजनार्थादन्नादन्नमुद्धृत्यघृताक्तंकृत्वापित्रर्थब्राह्मणसमीपमुपविश्य तत्पाणिंपर्युक्ष्य तत्रप्राचीनावीती दक्षिणाग्रान्दर्भानास्तीर्यमेक्षणमुपस्तीर्यमेक्षणेनैवद्विवारमवद्यपात्रस्थमवत्तंचाभिघार्य सोमायपितृमतेस्वधानमइतिपाणौहुत्वा पुनःपूर्ववदादायअग्नयेकव्यवाहनायस्वधानमइतितथैवजुहुयात् । एवंसर्वत्रजुहुयात् । ततोद्विजाःहुतमन्नंभाजनेपुनिक्षिप्याचम्यपूर्ववदुपविशेयुः । ततःकर्तान्नंपरिविष्यशुद्धाभिरद्भिःप्रोक्ष्यपित्रादिभ्योदर्शवत्त्यक्त्वा पिंडदानकालेपूर्वपश्चिमतोद्वेलेखेद्विजसमीपेकृत्वा क्रमेणसकृदाच्छिन्नबर्हिर्द्वयेनास्तीर्यप्राचीनावीती शुंधंतांपितरःसपत्नीकाइत्यादिअग्न्युपस्थानवर्जंद्विजविसर्जनांतंसर्वंदर्शश्राद्धवत्कृत्वा तदहरेववर्गद्वयस्यतिलतर्पणंकुर्यात् । अत्रकामकालौविश्वेदेवौ । इष्टिश्राद्धेक्रतुदक्षावष्टम्यांकामकालावितिशंखस्मृतेः । अत्रगृह्ये श्वोभूतेऽष्टकाःपशुनास्थालीपाकेनवेतिविकल्पाभिधानेपिलोकविद्विष्टत्वात्पत्नीसंयाजानांजाघन्येवपशुनानुष्ठानाभावात्पशुपक्षेप्रयोगोनोक्तः ॥ इत्यष्टमीश्राद्धविधिः ॥ ॥ ॥ ॥ ॥

अथान्वष्टक्याख्यनवमीश्राद्धप्रयोगः ॥ ॥ कर्तापूर्वेद्युःपरेद्युर्वापूर्वोक्तकालेदेशकालौसंकीर्त्य प्राचीनावीती दक्षिणा

मुखःसव्यंजान्वाच्यपितृवर्गमसपत्नीकं मातृवर्गं मातामहवर्गंचसपत्नीकंपष्ठ्यंतंनिर्दिश्य नित्यविधिरूपमन्वष्टकाश्राद्धं पिंड
पितृयज्ञव्यतिरिक्तपार्वणविधानेनान्नेनहविषाश्वोद्यवाकरिष्येइतिसंकल्प्य निमंत्रणादिद्वितीयसंकल्पांतंदर्शश्राद्धवत्कृत्वा ब्रा
ह्मणान्सन्निधाय दक्षिणाप्रवणेदेशेऔपासनाग्निंविधिवत्प्रतिष्ठाप्यपरिसमुह्य प्राग्दक्षिणाग्रैःसमूलैर्दर्भैरकंपर्यंस्त्रिवारमप्रदक्षि
णंपरिस्तीर्य पात्रासादनार्थंदर्भानास्तीर्यचरुस्थालीत्रय३शूर्प४स्फ्यो५लूखल६मुसल७स्रुव८ध्रुवा९कृष्णाजिन १० सकृदाच्छि
न्नत्रये११ध्म१२मेक्षण१३कमंडलू १४ नेकैकशआग्नेयसंस्थानासाद्यस्थाल्यांव्रीहिपूरणादितंडुलप्रक्षालनांतंकृत्वा स्थालीपुतंडु
लान्विभज्यशुद्धोदनंतिलमिश्रौदनंपायसंचश्रपयित्वा किंचिदोदनाग्रद्रवंमंडाख्यंपात्रांतरेणादायसंभृत्याग्निमतिप्रणीय तंपू
र्ववत्परिस्तीर्य स्फ्येनपित्रादिवर्गत्रयार्थं पश्चिमापवर्गलेखात्रयमुल्लिख्यप्रत्येकमद्भिरभ्युक्ष्य सकृदाच्छिन्नैनैकैकेनैकैकांलेखां
स्तृत्वा ध्रुवायामाज्यंक्षिप्त्वौपासनाग्नेर्दक्षिणतःकुशेष्वासाद्य स्रुवेणाज्यमादाय चरुत्रयंप्रत्येकमभिघार्याग्नेरुदगुद्वास्यातिप्रणी
ताग्नेःपश्चिमतोदर्भेषुक्रमेणदक्षिणसंस्थमासाद्य दधिमिश्रयवपिष्टरूपसक्तून्दधिमन्थाख्यान्मधुमिश्रयवपिष्टरूपसक्तून्मधुमं
थाख्यान्पात्रद्वयेसंभृत्य दधिमंथसक्तूनौपासनेधिश्रित्याभिघार्योदगुद्वास्यपायसाद्दक्षिणतआसाद्य अभ्यंजनांजनकशिपूप
वर्हणानांप्रत्येकंत्रयमौपासनाग्नेर्दक्षिणतआसाद्य पित्रर्थंब्राह्मणानांस्वागतवचनादितृतीयनिमंत्रणांतंकृत्वार्घ्यासादनकालेतै
जसादीनिनवसंख्याकानिपात्राण्यासादयेत् । मातृद्वित्वेवहुत्वेवापितामहीप्रपितामहीद्वित्वेवहुत्वेवातत्तत्संख्यानितद्वर्गपा
त्राण्यासादयेत् । देवतासंख्याकानिपात्राण्यासाद्यप्रोक्ष्योत्तानानिकृत्वा प्रतिपात्रंदर्भत्रयंनिधायजलंसंपूर्य शंनोदेवीतिपूर्वो

क्तेनमंत्रेणैकैकवर्गपात्रस्थंजलंसकृदनुमंत्र्य । तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तःस्वधयापितृनिमाँल्लोका
न्प्रीणयाहिनःस्वधानमः । इतिमंत्रेणमातृपितामहादिरूपानूहितयथापठितपितृशब्दवताप्रतिपात्रंमंत्रावृत्त्यातिलान्निक्षिप्यगं
धपुष्पाणिचनिक्षिप्य पितृपात्रंसंपन्नमित्यादियथालिंगमभिमृश्य दर्शवत्पित्रादिनामगोत्रपूर्वकमुक्त्वाऽऽवाह्यार्चयित्वोपवी
ती सर्वेषांनामगोत्राण्युच्चार्यसंपादितावःस्वधाअर्घ्याइतितत्तत्पात्रंतत्तत्पुरतःक्रमेणसंस्थाप्यदर्शवत्पितॄणामर्घ्यंदत्त्वा मातरि
दंतेऽर्घ्यंस्वधानमोनममेत्यादिनामातृवर्गस्यदत्वामातामहवर्गस्यचदर्शवद्दत्त्वासर्वत्रोत्तरपात्रस्थंजलंपित्रादिपात्रेक्षिप्त्वा तज्ज
लेनमुखमङ्क्त्वा न्यग्विलपात्रकरणादिपाणिशोधनांतंकृत्वा चरुत्रयाद्दधिमंथाच्चपात्रचतुष्टयक्रमेणहविःपृथगुद्धृत्यघृताक्तंकृ
त्वाग्नौकरिष्यइतिपित्रर्थब्राह्मणाननुज्ञाप्यक्रियतामितितैरुक्तेतिप्रणीताग्नाविध्ममुपसमाधाय मेक्षणमुपस्तीर्यतेनांगुष्ठपर्वमात्रं
क्रमेणहविश्चतुष्टयस्यमध्यात्पूर्वार्धाच्चपृथक्पृथगवदाय हविश्चतुष्टयंपृथक्पृथगभिघार्यअवत्तंसकृदभिघार्य सोमायपितृमते
स्वधानमइत्यग्नौदक्षिणदेशेहुत्वोद्देशत्यागौकृत्वा पुनःपूर्ववद्दक्षिणभागेहविश्चतुष्टयादवदाय अग्नयेकव्यवाहनायस्वधानमइ
तिवह्नौउत्तरभागेहुत्वोद्देशत्यागौकृत्वा यज्ञोपवीतीतूष्णींमेक्षणंप्रहृत्योपस्पृश्योभाभ्यांपाणिभ्यांपरिविष्य हुतशेषंपात्रचतुष्टय
स्यहविःसर्ववर्गत्रयद्विजभोजनपात्रेषुपरिविष्यान्नत्यागादिसंपन्नवचनांतंकृत्वा पिंडार्थमुद्धृतश्राद्धीयसर्वान्नेषुस्थालीचतुष्टय
स्थितहविश्चतुष्टयंसर्वमधुमंथांश्चप्रक्षिप्य पुनःप्रकिरणार्थसर्वस्मादन्नादुद्धृत्यशेषंनिवेद्यद्विजैरुत्तरापोशनेहस्तप्रक्षालनेचकृते
स्वयमाचम्यपूर्वास्तृतेषुदर्भेषु शुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाःशुंधंतांमातरःशुंधंतांपितामह्यःशुंधंतांप्रपि

तामह्यः शुंधंतासपत्नीकमातामहाःशुंधंतांसपत्नीकमातृपितामहाःशुंधंतांसपत्नीकमातृप्रपितामहाः इतिमंत्रैःसकृत्कमंडलुज लनिनयनंकृत्वा शुक्लांवराइत्यादिदर्शश्राद्धवक्ष्यमाणवस्वादिदेवध्यानंकृत्वा आर्द्रामलकप्रमाणान्मधुमर्पिस्तिलयुतान्नवपिं डान्कृत्वाध्रुवाज्येनाभिघार्य एतत्तइत्यादिनायथालिङ्गंवर्गत्रयस्यपिंडरूपमन्नमित्युक्तिपूर्वकंपिंडनिर्वपणंकृत्वा स्त्रीपिंडेषुपूर्व संभृतमोदनाग्रद्रवंनिषिच्य करावघर्षणाद्यग्न्युपस्थानांतंकृत्वा वीरंमेदत्तपितरइतित्रिरावृत्त्यापितृशब्दानूहेनवर्गत्रयंपितॄन्प्र त्येकंप्रार्थ्य मध्यमपिंडत्रयंपत्नीप्राशयित्वापिंडोद्वासनादिविप्रविसर्जनांतंदर्शश्राद्धवत्कृत्वा तदहरेववर्गत्रयस्यतिलतर्पणंकुर्या त् । मातृद्वित्वेपिंडदानकालेएतद्वामसन्मातरौयज्ञदेश्रीदेअमुकगोत्रेवसुरूपेयेचयुवामत्रान्वितिपिंडदानंकृत्वाऽस्मन्मातृ भ्यांयज्ञदाश्रीदाभ्याअयंपिंडःस्वधानमोनमोनममताभ्यश्च गयायांविष्णुपदेरुद्रपदेवादत्तमस्त्वितियथावासनमुच्चारयेत् । अभ्यंजनदानेयज्ञदेश्रीदेइत्युच्चार्याऽभ्यंजाथामितितैलंक्षिपेत् । अंजनदानेऽजाथामितिप्रत्येकंद्विवारमंजनंक्षिपेत् । वासो दानेएतद्वःपितरोवासइत्यादिनापितृशब्दानूहेन मंत्रावृत्त्यासर्वासांवासोदद्यात् । एवंपितामहीप्रपितामहीद्वित्वेपि । मातृ वहुत्वेपिडदाने एतद्वोस्मन्मातरःयज्ञदाश्रीदारुद्रदाअमुकगोत्रावसुरूपायेचयुष्मानत्रान्वितिपिंडंदत्त्वाऽस्मन्मातृभ्योयज्ञदा श्रीदारुद्रदाभ्योऽयंपिंडःस्वधानमोनमम । गयायामितिपूर्ववत् । अभ्यंजनदानेपूर्ववन्नामान्युक्त्वाऽभ्यङ्ध्वमितितैलंक्षिपे त् । अंजनदानेऽङ्ध्वमित्यंजनंमंत्रावृत्त्याप्रत्येकंद्विवारंक्षिपेत् । वासोदानेएतद्वःपितरइत्यादिनानूहेनसर्वासांवासोदद्यात् । पितामहीप्रपितामहीवहुत्वेप्येवंकुर्यात् । सर्वेपिंडदानादिपुमात्रादीनांद्वित्वैकनामत्वेचद्विवचनांतंतत्तन्नामनिर्दिश्यवहुत्वेएक

नामत्वेचबहुवचनांतं । अत्रयद्यपिसप्तम्यादितिथित्रयेश्राद्धकर्तव्यतोक्तातथापिगृह्यसूत्रेष्टमीष्वष्टकाइत्युपक्रम्यपूर्वेद्युःपितृभ्योदद्यादपरेद्युरन्वष्टक्यमितिसप्तमीनवमीश्राद्धयोरष्टमीमुपजीव्योक्तत्वात्तस्याएवसांवत्सरिकवदपराह्णाधिक्यादिसंविचार्य तदनुरोधेनसप्तमीनवमीश्राद्धंपूर्वेद्युःपरेद्युश्चकार्यं नतुतयोरपराह्णाधिक्यादिकंस्वातंत्र्येणविचार्यमिति । यदिमार्गशीर्षादिचतुर्षुमासेषुमलमासःस्यात्तदाशुद्धमासएवाष्टकाःकार्याःनतुमलमासे । हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामितिचतुर्ग्रहणादित्याद्याकरतोज्ञेयम् । अष्टकाश्राद्धाकरणेप्रत्यवायउक्तःकूर्मपुराणे—यस्यतेप्रतिगच्छेयुरष्टकाभिरपूजिताः । मोघास्तस्यभवंत्याशाःपरत्रैवचसर्वशःइति । एतदकरणेप्रायश्चित्तंऋग्विधाने—एभिर्द्युभिर्जपेन्मंत्रंशतवारंतुतद्दिने । अन्वष्टक्यंयदान्यूनंसंपूर्णयातिसर्वदाइति ॥ ॥ इतिश्रीनारायणभट्टकृतेप्रयोगरत्नेअन्वष्टक्यप्रयोगः ॥ ॥ ॥

अथाष्टकाविकृतिभूतोमाघ्यावर्षश्राद्धप्रयोगः ॥ ॥ तच्चभाद्रपदापरपक्षेमहालयाख्येसप्तम्यादिषुत्रिष्वहःसुअष्टकावत्सर्वकुर्यादितिवृत्तिकृत् । हरदत्तस्तुतत्रैवापरपक्षेमघायुक्तायांत्रयोदश्यांसंकल्पविधानेनमाघ्यावर्षाख्यंश्राद्धमित्याह ॥ ॥ इतिमाघ्यावर्षप्रयोगः ॥ ॥ अथप्रतिमासमपरपक्षश्राद्धम् ॥ ॥ प्रतिकृष्णपक्षंप्रतिपदाद्ययुग्मतिथिषुपृथग्मातृश्राद्धवर्जसपत्नीकपितृमातामहवर्गद्वयस्यान्वष्टक्यवत्सुराचामवर्जसर्वंकार्यम् ॥ ॥ इत्यपरपक्षश्राद्धप्रयोगः ॥ ॥ कृत्तिकादिषुकाम्यश्राद्धंवृत्तिकारमतेनाष्टमीश्राद्धवत्सर्वंकार्यं यद्वाशौनकोक्तरीत्यावृद्धिश्राद्धवत् ॥ ॥ इतिश्रीरामेश्वरभट्टसूरिसूनुनारायणभट्टविरचितेप्रयोगरत्नेअष्टकाविकृतिश्राद्धप्रयोगः ॥ ॥ इत्ययंप्रयोगरत्नग्रंथःसमाप्तः ॥ ॥ ॥

अथाश्विनस्यप्रकृतिविकृतिप्रयोगपर्यासेतदपर्यासेवापर्वणिपौर्णमासस्थालीपाकाश्वयुज्याग्रयणानांतंत्रेणप्रयोगः ॥ पूर्वो क्तकालेआभ्युदयिकश्राद्धंकृत्वादेशकालौसंकीर्त्यममोपात्तदुरितक्षयद्वाराश्रीपरमे० ममस्त्रीपुत्रादिसहितस्यन्यूनापेक्षितंविष यसंपूर्णतापूर्णानवसानसिद्धिद्वाराश्रीप० तथाममरोगजरानिवृत्तिश्रीयशोन्नप्राप्तिद्वाराश्री० थंनित्यविधिरूपंपौर्णमासस्था लीपाकाश्वयुजीकर्मव्रीह्याग्रयणश्यामाकाग्रयणानिचतंत्रेणकरिष्यइतिसंकल्प्य० अन्वाधानेचक्षुष्यंतमुक्त्वाऽत्रप्रधानंअग्निं अग्नीषोमौचरुद्रव्येण पशुपतिंचरुद्रव्येण पृषातकंपृषातकद्रव्येण इंद्राग्नीविश्वान्देवान्नवान्नेन सोमंनूतनश्यामाकचरुणा द्यावापृथिव्यौनवान्नेन शेषेणेत्यादि । पात्रासादनकालेस्थालीत्रयंनिर्वापप्रकृतिदेवताभ्यानिरुप्य ततःपशुपतयेनिरुप्य अ भ्युक्तवाससापवित्रलेपंनिमृज्य तस्मिन्नेवशूर्पेशरावादिनिधाय इंद्राग्निभ्यांविश्वेभ्योदेवेभ्यश्चतूष्णींद्विश्चतुरोमुष्टीन्नूतनतंडुला न्निरुप्य पवित्रलेपंनिमृज्य शूर्पेस्थापितपात्रांतरेसोमायत्वेतिसोमायनूतनश्यामाकतंडुलान्निरुप्य पवित्रलेपंनिमृज्य पूर्वस्मि न्शरावेद्यावापृथिवीभ्यातूष्णींनूतनतंडुलान्निरुप्य तथैवप्रोक्षणादिआज्यभागातंकुर्यात् । ततोहविषोद्धारणादिप्रकृति यागं ( अग्न्यग्नीषोमयागं ) निर्वर्त्यसुतादिभिरन्वारब्धः पशुपतिपूर्वंपृषातकयागंकृत्वा निमृज्यान्वारब्धःनूतनचरुमवदाय सजूर्ऋ० इंद्रा० सजूर्ऋ० विश्वे० दर्वींनिमृज्यसोमायस्वाहेतिश्यामाकचरुंहुत्वा आग्रयणचर्वोर्द्वयोरेकदेशंपात्रातरेकृत्वा तत्सव्यपाणौकृत्वाप्रजापतये० इतिदक्षिणेनाभिमृश्य भद्रान्न० द इति प्राश्यद्विराचम्य तत्रस्थएवअमोसि० इंद्रेतिनाभि

१ स्वसनिवीवातानुपवेश्येतिप्रयोगरत्ने । जुहुयुरितिवहुवचनात् ।

मालभेत । ततोमध्यमहविःशेषममंत्रकंपत्नींप्राशयेत् । ततःकर्ताइध्मसंनहनहोमादिकर्मशेषंसमापयेत् । इतिसंस्कारकौ
मुद्यांतंत्रप्रयोगः ॥ ॥ यदातुआश्विनपौर्णमास्यांक्रियतेतदाएककपालत्वात् आश्वयुजीकर्मणास्यसमानतंत्रताभवति ।
यदाशेषपर्वणिक्रियतेतदाप्रकृतिस्थालीपाकेनापिसमानतंत्रताबोध्या । तदेतद्वृत्तिकृता एकबर्हिरिध्माज्यस्येतिसूत्रेस्पष्टीकृतं ।
यद्यप्यत्र—सहैवश्रपयेदत्रनास्तिव्युद्धरणंतथा । आदिष्टहोममंत्रेणसर्वत्रैवप्रदीयतामितिअष्टकाप्रकरणेकारिकयाव्युद्धरणा
भिमर्शने नप्राप्तुतस्तथापि मध्यमंतुहविःशेषंपत्नीप्राश्नात्यमंत्रकमितिकारिकायाः पत्नीतुमध्यमिहविःशेषंप्राश्नातितूष्णीमिति
वृत्तेः हुतशिष्टादेकदेशंकस्मिंश्चित्पात्रेगृहीत्वासव्येपाणौकरोतीत्यादिनाभ्यालंभनांतमुक्त्वापत्नीतुनवान्नंवैश्वदेवशेषंप्राश्ना
तिइतिजयंताच्च वैश्वदेवावशिष्टंतुपत्नीप्राश्नात्यमंत्रकमितिशौनकोक्तेःतत्रविभागादिकर्तव्यमेवेतिममप्रतिभातीति संस्करा
कौमुदीस्थोविषयसंग्रहः ॥ ॥ ॥ ॥ ॥ ॥ ॥

## अथप्रसंगाद्गंगाधरशास्त्र्युद्धृताःप्रयोगाःसंगृह्यंते ॥

॥ उक्तदिनेचरुस्थाल्यादीनिदर्शपौर्णमासिकातिरिक्तानिपात्राणिआज्यंनवनीतंवा त्रैककुदं

अथपिंडपितृयज्ञप्रयोगः ॥ कार्पासंशयनीयंकशिपु कार्पासगुणधानमुपबर्हणं वासस्त
लौकिकंवाअंजनं घृतमिश्रंईंगुद्विलीनमाज्यंतिलतैलंवाभ्यंजनं उध्मःपालाशोवा । एवंसंपा
दर्थद्रव्याणिवा व्रीहीन्शकटंचसंपादयेत् । तत्रस्फ्यादीनिपंचइध्मोमेक्षणंशकटंचेत्यौदुंबराणि । पिंडपितृ
दनासंभवेदार्शपौर्णमासिकान्येवपात्राणिग्राह्याणि । देशकालकीर्तनांतेममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थं येरूपाणि
यज्ञंकरिष्ये इतिसंकल्प्य आग्नेयीमुखोग्निंध्यात्वा दक्षिणाग्नेरेकतःप्रदीप्तंधूपायदुल्मुकंप्राग्दक्षिणाप्रणयेत् । यदाग्न्यनाहिताग्निःपितृयज्ञं
प्रतिमुंचमानाअसुराःसंतःस्वधयाचरंति । परापुरोनिपुरोयेभरंत्यग्निष्टांल्लोकात्प्रणुदात्वस्मात् । यदातुसएवकेवलंपिंडपितृयज्ञंकुर्यात्तदाश्रपणोत्तरंप्रति
दर्शश्राद्धंचव्यतिपज्यकुर्यात्तदापीदानीमेवऔपासनाग्नेरतिप्रणयनं । यदातुसएवकेवलंपिंडपितृयज्ञंकुर्याणि आग्नेयीसंस्थानिकार्याणि । उल्मुकंस्थंडिला
प्रणयनं । अग्रेप्येतत्सूचयिष्यते । अस्मिन्कर्मण्यविशिष्टदिक्कानिसर्वाणिकर्माणिआग्नेयीसंस्थानिकार्याणि दर्भैःपरिस्तृणीयात् ।
दौनिधाय उभावग्नीप्रज्वाल्यआग्नेयकोणमारभ्याप्रदक्षिणंसमंतात्सकृत्परिसमुह्यअप्रदक्षिणंप्राग्दक्षिणाग्रैर्दर्भैःपरिस्तृणीयात् । परिसमूहनवत्प
पुरस्ताद्दक्षिणाग्रान्दक्षिणतःप्रागग्रान्पश्चाद्दक्षिणाग्रानुत्तरतःप्रागग्रानुत्तरानुत्तरान्दक्षिणानधरान्कुर्यात् । चरुस्थालींशूर्पं
युंक्षणंदक्षिणाग्नेः ( औपासनात् ) प्रागुदक्प्रत्यगुदग्वाप्राग्दक्षिणाग्रान्दर्भानास्तीर्यैकैकशःपात्राणिप्रयुनक्ति

स्फ्यंउलूखलंमुसलंस्रुवंध्रुवांकृष्णाजिनंसकृदाच्छिन्नंबर्हिःइध्मंमेक्षणंकमंडलुमिति । सकृदाच्छिन्नंबर्हिःसमूलंप्रशस्तं । तंडुल निर्वापेकृष्णाजिनोलूखलमुसलशूर्पाणांनिवृत्तिरितिचंद्रचूडीये । अनाहिताग्निपिंडपितृयज्ञेतुचर्वाद्यासादनहोमातिरिक्तसर्वंद क्षिणाग्निकार्यऔपासनेकुर्यात् । पात्राण्युत्तानानिकृत्वातूष्णींप्रोक्ष्यशूर्पेस्थालींप्रगृह्यदक्षिणाग्नेर्दक्षिणतोवस्थितस्यप्रागीषस्यव्री हिमच्छकटस्यदक्षिणार्धेआरुह्यसव्यंजान्वाच्यपितॄन्ध्यायन्नेकपवित्रांतर्हितांस्थालींनीचामुष्टिनाविषमसंख्यमुष्टिभिर्व्रीहिभिः पूरयेत् पितृभ्योनिर्वपामीति । तूष्णींवा । एवंव्रीहिभिःपूरयित्वास्थालीमुखंसमीकुर्वन्नुपरिराशीभूतान्हस्तेननिःसार्यशूर्पेप तितान्छकटेप्रास्येत् । शकटाभावेदक्षिणाग्रेषुकुशेषुस्फ्यंनिधायोपरिष्टाद्व्रीहीन्पात्र्यांपुरस्ताच्छूर्पेस्थालींनिधायपूरयेदिति विशेषः । शकटादवरुह्यस्थालीस्थान्व्रीहीन्सकृदुत्पूयसकृत्प्रोक्ष्यदक्षिणाग्नेर्दक्षिणतःप्रत्यगुदग्ग्रीवेकृष्णाजिनउलूखलंनिधाय दक्षिणाप्राचीतिष्ठंतीपत्नीसकृदवहन्याद्यथाफलीकृताइवभवंति । ततःशूर्पेणतुषानपोह्यसतुषवितुषाणांपृथक्करणरूपंविवेचनं नकुर्यात् । पत्न्याअसंभवेयजमानएवतिष्ठन्नवघातादिकुर्यात् । यजमानोवहतान्सकृत्प्रक्षाल्यदक्षिणाग्नौस्थालीमधिश्रित्य पवित्रवत्यांस्थाल्यामपआनीयतंडुलानोप्यमेक्षणेनप्रसव्यंपर्यालोडयन्जीवतंडुलंश्रपयेत् । शृतकल्पेचरौअनाहिताग्नेःकेवल पिंडपितृयज्ञेऽतिप्रणयनंप्राग्वत् । तस्यप्रज्वलनंपरिसमूह० परिस्त० पर्युक्षणंचउभयोरग्न्योरंतरालेसव्योत्तराभ्यांपाणिभ्यांगृही तेनस्फ्येनएकप्रयत्नेनलेखामुल्लिखेत् । अपहताअसुरारक्षांसिवेदिषदः । व्यतिषंगेतुमातामहत्रयसत्वेलेखाद्वयं । स्फ्याभावे कुशैरुल्लिख्यकुशानुदङ्निक्षिपेत् । लेखामभ्युक्ष्यसकृदाच्छिन्नेनबर्हिषासकृदवस्तीर्यक्वचित्पात्रेआज्यंनवनीतंवाविलाप्यनवनी

तंचेदेकपवित्रेणतूष्णींसकृदुत्पूयउभयोरन्यतरस्ध्रुवायांनिपिच्यदक्षिणतोदक्षिणाग्नेर्निधायस्रुवंसंमृज्यस्रुवगृहीतेनतेनस्थाली
पाकमभिघार्योदगुद्वास्यपुनरभिघार्यदक्षिणाग्नेःपश्चादासादयेत् । अनाहिताग्निस्त्वतिप्रणीतस्यपश्चात् । यस्यपश्चाच्चरुःसादित
स्तस्यदक्षिणतःअंजनाभ्यंजनकशिपूपवर्हणानिवासस्तदर्थंद्रव्याणिवासादयेत् । अग्निमभ्यर्च्यप्राचीनावीतीअभिघारितमिध्मं
पितृतीर्थेनतूष्णींदक्षिणाग्नावुपसमाधायकांस्यमयेपात्रेचरुमुद्धृत्यदक्षिणंजान्वाच्यवामहस्तगृहीतेमेक्षणेस्रुवेणोपस्तीर्यदक्षिणेन
मेक्षणमादायतेनचरोरुत्तरभागाद्विस्त्रिर्वावदायगृहीत्वावामेनमेक्षणंधारयन्स्रुवेणपात्रस्थमवत्तंचाभिघार्यमेक्षणंदक्षिणेनादा
यपराचीनपाणिरग्नावुत्तरभागेजुहुयात् । सोमायपितृमतेस्वधानमः । सोमायपितृमतइदंनमम । एवमेवपुनरवदाय । अग्नये
कव्यवाहनायस्वधानमः । अग्नयेकव्यवाहनायेदंनममेतिपूर्वाहुतेराग्नेय्यांहुत्वायज्ञोपवीती मेक्षणमग्नावनुप्रहृत्यजलंस्पृशेत् ।
ततःफलीकरणान्पवित्रंचानुप्रहरेदितिमानवे । अथवाइध्माधानाद्येतदंतंयज्ञोपवीत्येवकुर्यात् । तत्रअग्नयेकव्यवाहनायस्वा
हेतिदक्षिणभागेहुत्वासोमायपितृमतेस्वाहेत्युत्तरभागेहोमः । मेक्षणमनुप्रहृत्यापउपस्पृश्यहोमावशिष्टंस्थालीस्थंचचरुमेकीकृ
त्यावघ्राणार्थंकिंचिदवशेष्यशिष्टेनचरुणाकृतान्यथोत्तरंस्थूलान्पिंडान्ध्रुवाज्येनसर्वेणाभिघार्यप्राचीनावीतीसकृदाच्छिन्नास्तृ
तायांलेखायामादौमध्येतेचेत्येवंत्रिषुपिंडदेशेषुशुंधंतांपितरः शुंधंतापितामहाः शुंधंताप्रपितामहाः इतिमंत्रैःपितृतीर्थे
नकमंडलुजलंनिनीय तेषुपिंडान्सव्यान्वारब्धपराचीनपाणिनादद्यात् । एतत्तेअस्मत्पितःगोत्रशर्मन्वसुरूपयेचत्वामत्रानुते
भ्यश्चस्वधानमइतिप्रथमेस्थानेपिंडंदत्वा तस्मात्स्थूलंपिंडंद्वितीयेस्थानेदद्यात् एतत्तेस्मत्पितामहगोत्रशर्मन्रुद्ररूपयेच० ।

स्थूलतरंपिंडंतृतीयस्थाने एतत्तेस्मत्प्रपितामहगोत्रशर्मन्आदित्यरूपयेच० । आस्तीर्णदर्भमूलेषुपाणिंनिमृज्य । अत्रपितरो मादयध्वंयथाभागमावृषायध्वं । इतिपिंडान्सकृदनुमंत्र्यसव्यावृदावृत्योदङ्मुखोदक्षिणाग्निमीक्षमाणोयथाशक्त्यायतप्राणः प्रत्यावृत्यामीमदंतपितरोयथाभागमावृषायीषत। इतिपुनरनुमंत्र्ययज्ञोपवीतीचरोःप्राणभक्षंभक्षयेत्। हस्तंप्रक्षाल्याचम्यप्राची नावीतीशुंधंतामित्याद्यैःपूर्ववत्पुनःकमंडलुजलपिंडेपुनिनीयदर्भेणपूर्वोपकल्पितमभ्यंजनंदद्यात्। संबोधनं । रूपाभ्यंक्ष्व । त्रिभिर्दर्भपिंजूलैरंजनमादायपिंडेषुतल्लेपंनिमृजेत्। संबोधनं। रूपांक्ष्व । अथवस्त्रंतदलाभेनिष्क्रयंगंधाक्तानिसूत्राणिप्रतिपिं डंत्रीणिऊर्णापुंजंवायज्ञोपवीतंवापिंडसमीपेदद्यात्। पंचाशद्वर्षतायाऊर्ध्वंस्वंलोमप्रकोष्ठस्थंहृदयस्थंवा । एतद्वःपितरोवासो मानोतोन्यत्पितरोयुंग्ध्वं । पितरइमेवःकशिपूपबर्हणे इतिकशिपूपबर्हणेनिवेद्य । पितरइदंवोर्घ्यंस्वधा इत्यर्घ्यंनिवेद्य । पितर० अयंवोगंधःस्वधा इत्यादिभिर्गंधपुष्पधूपदीपान्निवेद्य उपहारादिचयथासंभवंनिवेद्याथैनानुपतिष्ठेत् । नमोवःपि तरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवायनमोवःपितरोरसाय । स्वधावःपित रोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतःस्याम। मनोन्वाहुवामहे० ऋ० ३ दक्षिणांदिशंग च्छन्पिंडस्थान्पितॄन्स्वलोकगमनार्थंप्रस्थापयेत्। परेतनपितरः० । यज्ञोपवीती दक्षिणाग्निंप्रत्यागच्छेत् । अग्नेतमद्याश्वंन स्तोमैःक्रतुंनभद्रंहृदिस्पृशं। ऋध्यामातओहैः। ऋक् ॥ १ ॥ गार्हपत्यंप्रत्यागच्छेत् । यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरं वाजि० नसं। गृह्येत्वस्यमंत्रस्यगार्हपत्यपदरहितस्यजपमात्रं। प्राचीनावीती । पिंडान्नमस्कृत्य। यज्ञोपवीतीमध्यमंपिंडं

वीरंमेदत्तपितरः इत्यादायपत्न्यैप्रयच्छन्प्रेष्येत् पिंडंप्रशान इति। पत्नीपिंडमादायप्राश्नीयात्। आधत्तपितरोगर्भंकुमारंपुष्क
रस्रजं। यथायमरपाअसत्। पत्न्याएवमंत्रपाठः। पत्नीबहुत्वेविभज्यसर्वाभ्यःप्रयच्छेदितिरुद्रदत्तः। कर्ताप्राचीनावीती ।
अप्स्वितरावतिप्रणीताग्नौवाजुहुयाद्गवेवाब्राह्मणायवादद्यादथयज्ञोपवीतीयज्ञपात्राणिप्रोक्ष्यद्विवदुत्सृज्येदुद्रिक्तेतृणंद्वितीयंकु
र्यात्। चरुस्थालीशूर्पे। स्फ्योलूखले। मुसलस्रुवौ। ध्रुवाकृष्णाजिने। कमंडलुतृणेचोद्वासयामि। पक्षांतरेतु। चरुस्था
लीस्फ्यौ। स्रुवध्रुवे। कमंडलुतृणेचेतिप्रयोगः। गृह्येतुजपांतेदक्षिणामुखउपविश्यविमानस्थान्पितॄन्पश्यन्मंद्रमध्योच्चस्वरै
र्याचेत्। वीरंमे० २ पिंडान्नमस्कृत्यपत्न्यापुत्रकामत्वेपूर्ववत्पिंडंप्राशयेत्। अन्यथेतरपिंडवत्प्रतिपत्तिरितिविशेषः। ततः
सकृदाच्छिन्नान्यग्नावादध्यादितिशतपथश्रुतौ। अतिप्रणीतमग्निं अभून्नोदूतइतिमंत्रेणाग्नौप्रक्षिपेदितितत्रसूत्रांतरेषुचदृ
श्यते। आभिर्गीर्भि० इदंविष्णु० भूर्भुवःस्वःइतिजपित्वाचम्यकर्मसमर्पणं। अनेनपितृयज्ञेनप्रीयतांभगवानिह। मयाभ
क्त्याकृतंसर्वंतत्सद्ब्रह्मार्पणंभवेत्। इतिपिंडपितृयज्ञः॥ ॥ ॥ ॥ ॥

अथश्रवणाकर्मसर्पबलिप्रयोगौ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मदिनात्पूर्वेद्युःप्रातःश्रवणाकर्मसर्पबल्यंगत्वेनमातृकापूज
नपूर्वकंवृद्धिश्राद्धंकृत्वा श्रवणाकर्मदिनेपूर्वाह्णेस्वस्तिवाचनंकुर्यात्। तत्राग्न्यादयःप्रीयंतां श्रवणाकर्मणेस्वस्तिइतिविशेषः।
तदंतेदिवैववितुषाणांयवानांतदभावेव्रीहीणांलौकिकाग्नौभर्जनेनप्रस्थद्वयाधिकपरिमाणाधानाःकृत्वा तासांप्रस्थमात्राःपृथक्कृ
त्वावशिष्टाभिःपिष्टरूपान्सक्तून्कृत्वातैर्नवंकलशंपूरयित्वा तंकलशंवैकंकतींदर्वींचबलिहरणींनवेशिक्येनिधायैतच्छिक्यंक्वापि

निवेशयेत् । पृथक्कृताःप्रस्थमात्राधानाःपात्रद्वयेसाम्येनविभज्यलौकिकेनसर्पिषार्धाअनक्ति । स्वगृहादन्यगाराद्वाप्राच्याशुचिंदेशंवल्यर्थंपरिगृह्णीयात् इहकरिष्यामिइति । एतावदहनिकार्यम् । श्रवणाकर्मसर्पवलिंचभुक्त्वापिकेचित्कुर्वंति । युक्तंतूपवासिनैवकार्याविति भट्टाः ॥ ॥ सायंहोमंकृत्वादेशकालकीर्तनांते ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्रवणाकर्मकरिष्येइतिसंकल्प्याग्निंसाहसनामायमितिविभाव्यध्यात्वान्वाधानं । आज्यभागदेवतेआज्येनेत्यंते अग्निंचतुश्चरुणा अच्युतंभौमंपुरोडाशेन अग्निमाशयाज्येन वाजिनोधानाभिः अग्निंस्विष्टकृतमित्यादि । पात्रासादने चरुस्थाल्यासहकपालंशरावत्रयंप्रोक्षणपात्रंच । दर्वीस्रुवौ । चमसाज्यपात्रे । इध्माबर्हिषी । शूर्पकृष्णाजिने । उलूखलमुसले । दृषदुपले । मेक्षणपिष्टोद्वपन्यौ । शम्योपवेषौ । वेदमदंतीपात्रेचेति । शूर्पद्वयस्यवासादनं । प्रोक्षणीसंस्कारादिपूर्णपात्रनिधानांतेशूर्पेचतुरोमुष्टीन्निरुप्य शूर्पांतरेचतथैवनिरुप्यपुरोडाशपर्याप्तान्वोप्य निर्वापसंख्ययाप्रोक्ष्य क्रमेणपृथगवहत्यप्रक्षालयेत् । एकस्मिन्नेवनिर्वापेतुसहैवावहत्यप्रक्षाल्य चरुपुरोडाशार्थान्विभज्य कृष्णाजिनेउदीचीनकुंवांशम्यांनिधाय तत्प्राग्भागेदृषदिपुरोडाशीयांश्चतुर्वारमध्युप्योपलांप्राचींकर्षयित्वापुनःप्रतीचीमाकृष्य मध्यदेशेदक्षिणतउत्तरतश्चतिरश्चीमाकृष्य पुनःसंततंपिष्ट्वांततःप्राच्यांसमाप्यकृष्णाजिनेपिष्टानिप्रस्कंद्यावेक्ष्यशिष्टांस्तंडुलान्पत्न्यापेषयेत् । अग्नौदक्षिणपार्श्वेसोदकांस्थालीमधिश्रित्योपवेषमादायतूष्णीमभिमंत्र्यतेनाग्नेःप्रत्यंचावंगारौपृथक्कृत्य तयोरेकंवायव्यांदिशिनिरस्यापउपस्पृश्य द्वितीयमग्नेरुत्तरपार्श्वेव

१ अत्राग्निःसाहसनामा । प्रायश्चित्तेविटश्चैवपाकयज्ञेपुसाहसइतिसंग्रहादितिरामकल्पद्रुमः ।

स्थाप्यतस्मिन्कपालमुपधायतत्रान्यमंगारंनिक्षिप्यवेदेनकपालेंगारान्निधायमदंतीपात्रेपिष्टसेकार्थमापस्तापयेत् । पिष्टोद्वपनीं पुनःप्रक्षाल्यनिष्टपनेनशुष्कायामग्नेःपश्चान्निहितायांतस्यांतिरःपवित्रंकृष्णाजिनात्पिष्टानिचतुर्वारंसमोप्य वाग्यतःपिष्टानित्रिरुत्पूयस्रुवेणप्रणीताभ्यआदायवेदेनोपयम्यपिष्टेष्वानीयपिष्टानिपक्त्वाअपक्त्वावामदंतीपात्रस्थाभिस्ताभिःपिष्टान्यनुपरिप्लाव्य मेक्षणेनसंमिश्र्यपिंडंकृत्वावेदेनकपालादंगारानपोह्यस्थाल्यांतंडुलानोप्यपुरोडाशंकपालेनिधायप्रथयन्नतुंगमनपूपाकृतिं कूर्माकारमश्वशफमात्रंकृत्वाद्भिस्त्वचंग्राहयेत् यथापुरोडाशात्कपालेऽपोनक्षरंति । ततस्तेपवित्रेआज्यपात्रेनिधायेत्यादि । आज्येनसहधानाचरुपुरोडाशान्पर्यग्निकृत्वोल्मुकंनिरस्यापउपस्पृश्यपुरोडाशमुल्मुकैःप्रताप्यदर्भैस्तृणादिभिर्वाभिज्वल्यवाचं विसृज्य वेदेनपुरोडाशेसांगारंभस्मप्रक्षिपेद्यथासुशृतोभवेत्। आज्योद्वासनादिचर्वासादनांते वेदेनपुरोडाशादंगारानपोह्याभिघार्याशयपात्रउपस्तीर्यापर्यावर्तयन्पुरोडाशमुद्वास्यवेदेनभस्मप्रमृज्याशयपात्रेनिधायकपालंप्रत्यज्यपुरोडाशमनक्ति । त्रिच्छेदं निकर्षंचाकुर्वन्नुपरिष्टात्सर्वमभ्यज्यस्रुवेणहस्तेनाधस्तादभ्यज्यलौकिकेनाज्येनपूरयित्वानिमग्नंप्रकटपृष्ठंवाकृत्वाग्न्याज्ययोर्मध्येननीत्वाबर्हिष्यासाद्य अक्ताधानाअग्नावधिश्रित्याभिघारणाद्यासादनांतंकुर्यात् । एवमनक्ताअधिश्रयणवर्जमासाद्याग्न्यर्चनाद्याज्यभागांतेउद्धृताच्चरोरवदानधर्मेणावदायजुहुयात् । अग्नेनयेत्यादिचतुर्णांमैत्रावरुणिरगस्त्यस्त्रिष्टुबग्निः श्रवणाकर्मप्रधानहोमेवि० । ॐ अग्नेनयसुपथा० ऋक् १ अग्नयइदंनमम । एवमग्रेपि । ॐ अग्नेत्वंपारया न० अग्नयइदं० २ ॐ अग्नेत्वमस्मद्युयोध्यमीवा० अग्नयइदं० ३ ॐ पाहिनोअग्ने० अग्नयइदं० ४ चतुर्भिर्ऋग्भिर्गंतेहोमः । सव्यपाणिनादक्षिणपाणावुप

स्तीर्यकृत्स्नंपुरोडाशंनिधायाशयाज्यात्सकृद्द्विर्वावदायाभिघार्यजुहुयात् । ॐ अच्युतायभौमायस्वाहा अच्युतायभौमायेदं० । अपर्यावर्तयन्नृजुंप्रतिष्ठितंहुत्वास्रुवेणाशयाज्येनपुरोडाशस्योपरिजुहुयात् । मानोअग्नइत्यादेर्मैत्रावरुणिरगस्त्यस्त्रिष्टुवग्निः श्रवणाकर्मप्रधानहोमेवि० । ॐ मानोअग्नेवसृजोअघाया० ऋक् १ अग्नयइदं० । सर्वाशयाज्यहोमस्तुशौनकविरुद्धः । स्वांजलावन्येनोपस्तरणंकारयित्वाअक्ताधानामुष्टिनाद्विस्त्रिर्वावोप्यपात्रस्थमवत्तंचाभिघार्यांजलिवामपार्श्वेनजुहुयात् । शंनोभवंतुवाजिनइत्यादेर्मैत्रावरुणिर्वसिष्ठस्त्रिष्टुब्वाजिनः । श्रवणाकर्मप्रधानहोमेवि० । ॐ शंनोभवंतुवाजिनोहवेषु० ऋक् १ वाजिभ्यइदं० । अनक्ताधानाःसर्वाःपुत्रादिभ्योदत्वाचरोर्धानाभ्यश्चसौविष्टकृतंहुत्वादक्षिणांतंसमाप्यकपालंविमुच्यसंख्यायोद्वास्यआभिर्गीर्भिरित्यादि ॥ ॥ इतिश्रवणाकर्म ॥ ॥ ॥ ॥

ततःसर्पबलिः ॥ ॥ देशकालकीर्तनांते ममोपात्तदुरितक्षयद्वाराममसपरिवारस्यसंभावितसर्पबाधानिवृत्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसर्पबलिंकरिष्ये । शिक्यस्थकलशात्सक्तूनांदर्वींपूरयित्वादायगृहादग्न्यगाराद्वाप्रागुपनिष्क्रम्य पूर्वगृहीतेशुचौदेशेपोवनीय । सर्पबलिमंत्राणांगौतमोवामदेवोयजुःसर्पाःहोमादौविनियोगः । ॐ सर्पदेवजनेभ्यःस्वाहा । इतिप्राङ्मुखोहुत्वानमस्करोति । ॐ येसर्पाःपार्थिवायआंतरिक्षायेदिव्यायेदिश्यास्तेभ्यइमंबलिमाहार्षंतेभ्यइमंबलिमुपाकरोमि । बलिंप्रदक्षिणंपरीत्यपश्चाद्बलेरुपविश्य । ॐ सर्पोसिसर्पतांसर्पाणामधिपतिरस्यन्नेनमनुष्यांस्त्रायसेपूपेनसर्पान्यज्ञेनदेवांस्त्वयिमासंतंत्वयिसंतःसर्पामाहिंसिषुर्ध्रुवांतेपरिददामि । इतिजपित्वा ज्येष्ठानुक्रमेणपुत्रादीनांपरिदानंकुर्यात् । ध्रुवमहादेवशर्माणंतेपरिददा

मि । पुत्राणामंते ध्रुवसावित्रीदेवींतेपरिददामि इत्यप्रत्तांदुहितरं । तासामंते ध्रुवपार्वतीदेवींतेपरिददामि इतिभार्यां । ध्रुवमांतेपरिददामि इत्यात्मानमं । ततः अन्यःकर्ताचेन्मांपदस्थानेयजमाननामद्वितीयांतंवदेत् । एतत्पर्यंतंबलेःकर्तुश्चमध्ये केनापिव्यवधानंनकार्यं । परेद्युःप्रातःकालमारभ्यैवमेव । सर्पदेवजनेभ्यःस्वाहेतिसायंप्रातर्बलिंहरेदाप्रत्यवरोहणात् । नात्रनमस्कारादि । प्रत्यहंबलिदानाशक्तौश्रावणीप्रतिपदमारभ्ययस्मिन्नहनिप्रत्यवरोहणंक्रियतेतस्मादर्वाचीनानिदिनानि ह्रासवृद्धिभ्यांप्रसंख्यायतेषुयावंतःप्रातःसायंकालास्तावतोवलीस्तदैवदत्वा आभिर्गीर्भिरित्यादि ॥ इतिसर्पबलिः ॥

अथाश्वयुजीकर्मप्रयोगः ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंकृत्वामृदंतरेणगृहमुपलिप्यतृणैराच्छाद्यवितानबंधनादिनागृहमलंकृत्यभुवंसमीकुर्यात् । परेद्युःसर्वेगृह्याःकृताभ्यंगस्नानाधौतशुक्लांवरधराभवेयुः । कर्ताप्रातर्होमांतेस्वस्तिवाचनंकुर्यात् । तत्र पशुपतिःप्रीयतामितिविशेषः । ततोदेशकालकीर्तनांते ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षितविषयसंपूर्णतापूर्णानुपसादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआश्वयुजीकर्मकरिष्ये । अग्निंसाहसनामायमितिविभाव्यध्यानादि । आज्यभागदेवतेआज्येनेत्यंते पशुपतिंशिवंशंकरंपृषातकंप्रधानदेवतांचरुणा पृषातकंप्रधानदेवतांपृषातकेन अग्निंस्विष्टकृतमित्यादि । चरुस्थाल्यासहपृषातकस्थाल्यासादनं । समंत्रकेनिर्वापप्रोक्षणे पशुपतयेत्वाजुष्टंनिर्वपामीत्यादि । चरुश्रपणांतेआसादितपात्रेपयोनिषिच्यतत्राज्यंनिषिंचेत् । चरुपृषातकाभ्यांसहाज्यस्यपर्यग्निकरणम् । चरोरुत्तरतःपृषातकमासाद्याज्यभागांतेचरुमवदायजुहुयात् । पशुपतयइत्यादिमंत्रयोगौतमोवामदेवोयजुःपशुपतिःपृषातकश्च आश्वयुजी

कर्मप्रधानहोमेवि० । ॐ पशुपतयेशिवायशंकरायपृषातकायस्वाहा पशुपतयेशिवायशंकरायपृषातकायेदं० । एतद्धोमकाले पुत्रादयःकर्तारमन्वारभेरन्तत्समीपेवावसीरन् । ततोयजमानाजलावन्यःकश्चिदुपस्तीर्यस्रुवेणपृषातकंद्विस्त्रिर्वावदायाभिघारयेत् । यजमानोजुहुयात् । ॐ ऊनंमेपूर्यतापूर्णंमेमोपसदत्पृषातकायस्वाहा पृषातकायेदं० । स्विष्टकृदर्थमुपस्तीर्यचरोर्हस्तेनपृषातकस्यस्रुवेणोत्तरार्धादवदायद्विरभिघार्यसौविष्टकृतादिहोमशेषंसमाप्य आभिर्गीर्भिरित्यादि ॥ इत्याश्वयुजीकर्म ॥

अथाग्रयणप्रयोगः ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंस्वस्तिवाचनंचकुर्यात् । तत्रेंद्राग्न्यादयःप्रीयंतामितिविशेषः । ततोदेशकालकीर्तनांते ममोपात्तदुरितक्षयपूर्वकजरारोगनिवृत्तिश्रीयशोन्नप्राप्तिनवधान्यप्राशनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंआग्रयणंकरिष्ये इतिसंकल्प्याग्निंसाहसनामायमितिविभाव्यध्यानादि । आज्यभागदेवतेआज्येनेत्यंते इंद्राग्नी १ विश्वान्देवान् २ द्यावापृथिव्यौ ३ एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । तूष्णींद्वादशमुष्टीन्निरुप्यतथैवप्रोक्षणादि । आज्यभागांतेविभागाभिमर्शावकृत्वैवावदानधर्मेणहोमः । आग्रयणहोममंत्राणांगौतमोवामदेवोयजुरिंद्राग्नीविश्वेदेवाद्यावापृथिवीच । आग्रयणप्रधानहोमेवि० । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूरिंद्राग्निभ्यांस्वाहा इंद्राग्निभ्यामिदं० १ । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्विश्वेभ्योदेवेभ्यःस्वाहा । विश्वेभ्योदेवेभ्यइदं० २ । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्द्यावापृथिवीभ्यांस्वाहा । द्यावापृथिवीभ्यामिदं० ३ । उत्तरार्धात्सकृदवदायस्विष्टकृद्धोमादि । चरुशेषवर्जंहविरुच्छिष्टंदक्षिणा । कर्मसमाप्तौवैश्वदेवंनवान्नेनकृत्वा आग्रयणशेषंवैश्वदेवशेषंचैकीकृत्य तत्पात्रंसव्यहस्तेनि

धायदक्षिणहस्तेनतदन्नमभिमृशेत् । प्रजापतयेत्वेत्यादेर्गौतमोत्रागदेवोयजुष्टं । अभिमर्शने० । ॐ प्रजापतयेत्वाग्रहंगृह्णामिमह्यंश्रियैमह्यंयशसेमह्यमन्नाद्याय । भद्रान्नइत्यादिद्वयोर्गौतमोवामदेवस्त्रिष्टुप्लिंगोक्ताः । प्राशने आलभनेचवि० । ॐ भद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावसेनसमशीमहित्वा । सनोमयोभूःपितवाविशेशंनोभवद्विपदेशंचतुष्पदे । इतिप्राश्यानन्यानमनस्थानएवनाभिमालभेत । ॐ अमोसिप्राणतदृतंब्रवीम्यमासिसर्वाननुप्रविष्टः । नमेजरांरोगमपनुदशरीरादनामयेधिमामृधामइंद्र । अपउपस्पृश्यआभिर्गीर्भिरित्यादि । इत्याग्रयणप्रयोगः ॥

अथाश्वयुजीकर्माग्रयणयोरेकदिनेप्राप्तौसहप्रयोगः ॥ ॥ ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवदृद्धिश्राद्धान्तेउपलेपनवितानबंधनादिस्वस्तिवाचनांतंकृत्वादेशकालकीर्तनांते ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षितविषयसंपूर्णतापूर्वानुप्रसादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआश्वयुजीकर्म, ममोपात्तदुरितक्षयपूर्वकजरारोगनिवृत्तिश्रीयशोन्नप्राप्तिनवधान्यप्राशनाधिकारसिद्धिद्वाराश्रीपर०र्थंआग्रयणंचकरिष्ये । अग्निंसाहसनामायमितिनिभाल्यध्यानं । आश्वयुजीकर्माग्रयणहोमेदेवतापरि० भागदेवतेआज्येन । पशुपतिंशिवंशंकरंपृषातकंप्रधानदेवतांचरुणा १ पृषातकंप्रधानदेवतांपृषातकेन २ इंद्राग्नी ३ विश्वान्देवान् ४ द्यावापृथिवी ५ एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । पात्रासादनेचरुस्थालीद्वयंपृषातकस्थालीप्रोक्षणपात्रंच । दर्वीस्रुवावित्यादि । शूर्पद्वयंकृष्णाजिनंच । उलूखलमुसलेइति । निर्वापे पशुपतयेत्वाजुष्टंनिर्वपामिइतिजीर्णान्निरुप्य पृषातकस्थाल्यांपयोनिषिच्य तत्राज्यमानीय शूर्पांतरेनवानांद्वादशमुष्टींस्तूष्णींनिरुप्यनिर्वा

पवज्जीर्णान्नवांश्चप्रोक्ष्य पर्यायेणावघातादिकृत्वा चरुद्वयंश्रपयेत् । आज्यंनिरुप्यहविस्त्रयेणसहपर्यग्निकरणादि । जीर्णच रोरासादनांते तत्प्राक्पृषातकंमासाद्यनवचरोरभिघारणादि । आज्यभागांतेसुतादिभिरन्वारब्धःस्वसन्निधौतानुपवेश्यवा जीर्णचरुमवदायजुहुयात् । ॐ पशुपतयेशिवायशंकरायपृषातकायस्वाहा । पशुपतयेशिवायशंकरायपृषातकायेदं० । ततो यजमानांजलावन्यउपस्तीर्य स्रुवेणपृषातकंद्विस्त्रिर्वावदायाभिघारयेत् । यजमानोजुहुयात् । ॐ ऊनंमेपूर्यतांपूर्णंमेमोपस दत्पृषातकायस्वाहा । पृषातकायेदं० । ततोनवचरोरवदायावदाय सजूरित्यादिमंत्रत्रयेणत्रिर्हुत्वाजीर्णादिहविस्त्रयोत्तरार्धैः स्विष्टकृद्धोमादि । नवहविःशेषवर्जंदक्षिणांदद्यात् । शेषमाग्रयणवत् । इत्याश्वयुजीकर्माग्रयणयोःसहप्रयोगः ॥ ॥

यदितुपूर्वाह्णसंधौशेपपर्वणिएतेक्रियेतेपूर्णमासारंभश्चपूर्वेद्युर्नकृतस्तदापूर्णमासस्थालीपाकस्यापितत्रप्राप्तेस्त्रयाणांसहप्रयो गः ॥ ॥ तत्रचयदिपूर्णमासात्प्रागेवाग्रयणमितिपक्षस्तदाग्रयणपूर्णमासाश्वयुजीकर्मणांक्रमेणसहानुष्ठानं । तत्रषण्णामपि देवतानांनवैरेवयागः । आग्रयणोत्तरत्वात् । पक्षांतरेतुपूर्णमासाश्वयुजीकर्माग्रयणानांसहानुष्ठानं । तत्रचाग्रयणेतरदेवता नांजीर्णैरेवयागइतिविशेषः । तत्राद्यपक्षेप्रयोगः ॥ प्राग्वदाग्रयणसंकल्पवाक्यमुक्त्वा, ममोपात्तदुरितक्षयद्वाराश्रीप०र्थंपूर्ण मासस्थालीपाकहोमं, ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षितविषयसंपूर्णतापूर्णानुपसादनसिद्धिद्वाराश्रीप रमे० र्थंआश्वयुजीकर्मकरिष्यइतिसंकल्पः । अन्वाधानेआग्रयणाश्वयुजीकर्मपूर्णमासस्थालीपाकहोमेदेवतापरिग्रहार्थमि त्यादि । इंद्राग्नी १ विश्वान्देवान् २ द्यावापृथिव्यौ ३ पशुपतिंशिवंशंकरंपृषातकं ४ चैताःप्रधानदेवताश्चरुणा । पृषात

। अग्निमग्नीषोमौचप्रधानदेवतेचरुणा अग्निंस्विष्टकृतमित्यादि । सर्वेभ्योनवानेवप्राग्वन्निरु
कं ५ प्रधानदेवतांपृषातकेन । अग्निमग्नीषोमौचप्रधानदेवतेचरुणा अग्निंस्विष्टकृतमित्यादि । सर्वेभ्योनवानेवप्राग्वन्निरु
प्यप्रोक्ष्यसहैवावहत्यश्रपणादि । आज्यभागांतेचरुंसाम्येनदक्षिणतउत्तरतश्चद्विधाविभज्यउत्तरस्थंपुनस्त्रेधाविभज्य । इदंप
शुपतये । इदमग्नये । इदमग्नीषोमाभ्यामितिक्रमेणाभिमृश्यपूर्ववत्क्रमेणजुहुयात् । चरुदक्षिणार्थवर्जंहविरुच्छिष्टंदक्षिणा ।
वैश्वदेवादिशेषमाग्रयणवत् । पक्षांतरेतुसंकल्पवाक्यानांव्यत्यासः । आद्याभ्यस्तिसृभ्योजीर्णान्निरुप्येतराभ्योनवान्निरुप्य
पृथक्श्रपणादिप्राग्वत्सर्वंयथायथंकुर्यात् । जीर्णचरुंत्रेधाविभज्याभिमर्शःप्राग्वत् । नवचरुशेषवर्जंदक्षिणाइत्याद्यूह्यं । यदि
तुदर्शेपूर्वाह्णसंधौशेषपर्वण्याग्रयणंक्रियतेदर्शारंभश्चपुर्वेद्युर्नकृतस्तदाद्वयोःसहप्रयोगः । तत्रापिजीर्णनवादिसर्वंयथायथंप्रा
ग्वदूह्यम् । इत्याग्रयणपूर्णमासाश्वयुजीकर्मसहप्रयोगः ॥ ॥ ॥ ॥
अथश्यामाकाग्रयणविचारः ॥ ॥ गं० राः ॥—निर्णयसिंधौश्यामाकाग्रयणमनित्यमित्युक्तं । वस्तुतस्तुसिद्धांतिभा
ष्येश्रौतेपिश्यामाकाग्रयणस्यकृताकृतत्वसाधनात् । गृह्येसौम्यमंत्रानाम्नानात् । शौनकेनाप्यनुक्तेः । अनाहिताग्निर्नवप्रा
शिष्यन्नाग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्योगृह्येग्नौजुहुयादितिसांख्यायनसूत्रे । कथमुखल्वनाहिताग्नेराग्रयणंभवतीति
स्थालीपाकंश्रपयित्वाग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्योजुहुयादितिबौधायनकर्मांतसूत्रे । आग्रयणदेवताभ्यइंद्राग्निभ्यां
विश्वेभ्योदेवेभ्योद्यावापृथिवीभ्यांस्विष्टकृच्चतुर्थीभ्योजुहुयादितिबौधायनस्मार्तसूत्रे । आग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्यो
हुत्वेत्यापस्तंबगृह्येचसौम्यस्यादर्शनात् जयंतेनाप्यनुक्तेश्च स्मार्ताग्नौश्यामाकाग्रयणंनकार्यमितियुक्तंभाति । दर्शेष्टेःपरमुक्त

माग्रयणकंप्राक्पौर्णमासाच्चतदितिदीपिकादिलेखस्त्वेतत्सूत्रागोचरःश्रौतपरःइष्टिपदात् । आश्वलायनान्यपरोवेति ॥ ॥

अथप्रत्यवरोहणप्रयोगः ॥ ॥ उक्तकालेप्रत्यवरोहणंकरिष्यन्प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंस्वस्तिवाचनंचकुर्यात् । तत्रश्वेतःप्रीयतामितिविशेषः । ततोगृहसमीपेप्ररूढान्अपामार्गःशाकस्तिल्वकःपरिव्याधइत्येतान्समूलान्परिखायोद्वास्यमृदंतरेणगृहमुपलिप्यतृणैराच्छाद्यभुवंसमीकुर्यात् । शयनार्थफलरहितधान्यतृणनिर्मितंकटंसंपाद्य अभुञ्जानःसायंहोमोत्तरंदेशकालकीर्तनांते ममस्त्रीपुत्रादिसहितस्यजलस्थलचरसर्पबाधानिवृत्त्यभयहेमंतसौमनस्यसिद्धिद्वाराश्रीप० प्रत्यवरोहणंकरिष्ये । अग्निंसाहसनामायमितिविभाव्यध्यानादि । आज्यभागदेवतेआज्येनेत्यंते श्वेतंप्रधानदेवतांद्विःपायसेन रुद्रमिध्मरज्ज्वेत्यादि । तूष्णींचतुरोमुष्टीन्निरुप्यचतुर्वारंप्रोक्ष्यपयसिचरुश्रपणादि । आज्यभागांतेसुतादिभिरन्वारब्धःपायसादवदायावदायद्वेआहुतीजुहुयात् । अपश्वेतेत्यादिद्वयोर्गौतमोवामदेवऋषिः आद्यस्यानुष्टुप् अंत्यस्यगायत्रीश्वेतोदेवता । प्रत्यवरोहणप्रधानहोमेवि० । ॐ अपश्वेतपदाजहिपूर्वेणचापरेणच । सप्तचवारुणीरिमाःसर्वाश्चराजवांधवीःस्वाहा । श्वेतायेदं० १ । ॐ नवैश्वेतश्चाभ्यागारेहिर्जघानकिंचन । श्वेतायवैदार्वायनमःस्वाहा । श्वेतायेदं० २ । नात्रसौविष्टकृत् । अभयंनइत्यादिद्वयोर्गौतमोवामदेवोयजुरग्निर्हेमंतौ । जपेवि० । ॐ अभयंनःप्राजापत्येभ्योभूयात् । इत्यग्निमीक्षमाणोजपति । ॐ शिवोनःसुमनाभव । इत्युपांशूक्त्वा हेमंतइतिमनसाध्यायेत् । पूर्वसंपादितंकटंअग्नेःपश्चात्स्वयमास्तीर्यतस्मिन्पत्नीपुत्रादिसहितउपविश्यजपेत् । स्योनेत्यादेर्मेधातिथिर्गायत्रीभूमिः । जपेवि० । ॐ स्योनापृथिविभव०थः । एतदादिस्वस्त्ययनपर्यंतान्वैकृत

मंत्रान्पुत्रादयोप्युपनीताश्चेज्जपेयुः । ततस्तत्रप्राक्शिराउदङ्मुखोदक्षिणपार्श्वेनशयीत । गृहिणोनंतरंपत्न्यादयोज्येष्ठानुक्रमेण यथावकाशंवातथैवशयीरन् । सर्वेउत्थायप्राङ्मुखाआसित्वा । अतोदेवाइत्यादेर्मेधातिथिर्गायत्रीविष्णुर्देवावा । जपेवि० । ॐ अतोदेवाअवं० भिः । इतिमंत्रंत्रिर्जपेयुः । पुनरपिसर्वेतथैवशयित्वोत्थायदक्षिणमुखाआसित्वा । ॐ अतोदेवाअवंतुनः इतिपादंसकृज्जपेयुः । पुनरपिसर्वेतथैवशयित्वोत्थायपश्चिमामुखाआसित्वा । ॐ यतोविष्णुर्विचक्रमे इतिपादंजपेयुः । पुनरपिसर्वेतथैवशयित्वोत्थायोत्तरामुखाआसित्वा । ॐ पृथिव्याःसप्तधामभिः इतिपादंजपेयुः । यजमानोरज्जुप्रासनादि होमशेषंसमापयेत् । ततःसर्वेस्वस्वशय्यायांशयीरन् । यजमानःप्रातर्होमांतेकृतसंध्यैःसर्वैःसहजपेत् । सूर्योनइत्यादिपंचानां चक्षुर्गायत्रीसूर्यः । उदुत्यमित्यादिनवानांप्रस्कण्वोगायत्रीसूर्यः । चित्रंदेवनामित्यादिषण्णांकुत्सस्त्रिष्टुप्सूर्यः । नमोमित्रस्ये त्यादिद्वादशानामभितपाजगती शंनोभवेत्यादेस्त्रिष्टुप्सूर्यः । माप्रगामेत्यादिपण्णांवंधुश्रुतवंधुविप्रवंधवोगायत्रीविश्वेदेवाः । महित्रीणामित्यादितिसृणांसत्यधृतिर्गायत्र्यादित्याः । कनिक्रददित्यादिषण्णांगृत्समदस्त्रिष्टुप् । प्रदक्षिणिदावदन्नित्यनयो र्जगती । उद्गातेवेत्यस्यातिशक्कर्यष्टिर्वाशकुंतोदेवता । जातवेदसइत्यस्यकश्यपस्त्रिष्टुवग्निर्जातवेदाः । तच्छंयोरित्यस्यशंयुः शक्करीविश्वेदेवाः । जपेवि० । जपांतेयजमानोभक्ष्यभोज्याद्यन्नंवहुगुणंसंपाद्यतेनचतुरोब्राह्मणान्संभोज्यभुक्तवद्भिस्तैःपुण्या हवाचनंकुर्यात् । यद्वातान्प्रति स्वस्त्ययनंभवंतोब्रुवंतुइतिवदेत् । तेचस्वस्त्ययनमस्त्वितिवदेयुः । ततआभिर्गीर्भिरि त्यादि ॥ इतिप्रत्यवरोहणप्रयोगः ॥ ॥ ॥ ॥ ॥ ॥

अथकेवलपार्वणश्राद्धप्रयोगः ॥ ॥ तत्रमध्याह्नसंध्योपासनांते वैश्वदेवंकृत्वा देशकालकीर्तनांते देवपितृतृप्त्यर्थपार्वणश्राद्धांगतर्पणंकरिष्येइतिसंकल्प्य दैवधर्मेण पुरूरवसंज्ञकान्विश्वान्देवांस्तर्पयामि इतिमंत्रावृत्त्याद्विःसकृद्वातर्पयित्वा आर्द्रवसंज्ञकान्विश्वान्देवांस्तर्पयामि इतितथैवसंतर्प्य पित्र्यधर्मेणश्राद्धेयक्ष्यमाणान्पित्रादीन्मंत्रावृत्त्यात्रिःसकृद्वातर्पयित्वा आचम्यतर्पणंसमाप्य । ततोद्विराचम्यपवित्रपाणिःप्राणानायम्य प्राचीनावीतीदेशकालौसंकीर्त्य । पुरूरवसंज्ञकानांविश्वेषां देवानांआर्द्रवसंज्ञकानांविश्वेषांदेवानां अस्मत्पितुरित्यादित्रयाणामुद्दिश्य तृप्त्यर्थपार्वणश्राद्धंकरिष्ये । इच्छाचेत्स्मृत्यनुसारेण पित्रादेःसपत्नीकस्येतिविशेषणंदेयं । मातामहानामपिसपत्नीकानामिच्छातउच्चारणंस्मृत्यनुसारात् । उपवीतीदेवार्थविप्रनिमंत्रणादि पाणिहोमोभुक्तशेषमात्रेणोच्छिष्टसमीपेपिंडदानंच । मातामहादिसत्वेअपहताइतिमंत्रावृत्त्याद्वेलेखेउल्लिखेदित्यादिविशेषः । अत्रापेक्षितोमंत्रेपूहविचारस्तुमहालयप्रकरणेवक्ष्यते ॥ इतिकेवलपार्वणप्रयोगः ॥ ॥ ॥

अथपिंडपितृयज्ञपार्वणश्राद्धयोर्व्यतिषंगप्रयोगः ॥ ॥ तत्रतिलोदकसंपादनांतंपार्वणवत्कृत्वा आचम्यतीर्थप्रवेशादि देशकालकीर्तनांते उपक्रांतंपार्वणश्राद्धं, ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंचव्यतिषज्यकरिष्येइतिसंकल्प्याग्निंध्यात्वा येरूपाणीत्यादि । मातामहादिकरणपक्षेसकृदाच्छिन्नद्वयं । पात्रप्रोक्षणादिश्रपणांते मातामहादिसत्वेमंत्रावृत्त्याद्वितीयांलेखामुल्लिख्यद्वयोरभ्युक्षणादि । अभ्यंजनासादनांतेमातामहादिसत्वेद्वितीयंकशिपूपवर्हणंवासस्तदर्थद्रव्यं वासादयेत् । एतदंतंपितृयज्ञस्यकृत्वास्वागतप्रश्नादिपित्र्यविप्रपाणिशोधनांतंश्राद्धंकुर्यात् । यत्तुइध्माधानांतेस्वागतप्रश्ना

दीतितत्परिशिष्टविरुद्धम् । अथकांस्येस्थालीपाकादन्नमुद्धृत्येत्यादिमेक्षणानुप्रहरणांतंपिंडपितृयज्ञंकृत्वा मंडलादिकरिष्ये इत्यादिर्पिंडनिपरणंकरिष्यइतिप्रश्नांतोपिंडपितृयज्ञवत्पिंडदानादिपात्रोत्सर्गांतंकृत्वा अनाचांतेषुपिंडदानपक्षेइदानींब्राह्मणा नाचमय्य विकिरणादिश्राद्धशेषंसमापयेत् । इतिपिंडपितृयज्ञपार्वणश्राद्धयोर्व्यतिषंगप्रयोगः ॥ ॥ ॥

अथाष्टकाप्रयोगः ॥ ॥ तत्राश्वलायनमतेमार्गशीर्षादीनांचतुर्षुकृष्णपक्षगतास्वष्टमीषुचतस्रोष्टकाः । भाद्रपदापरपक्षे ष्टम्यांत्वष्टकाधर्मकंमाघ्यावर्षसंज्ञकंपंचममितिमुख्यःपक्षः । चतुर्ष्वष्टकानामसंभवेमाघे तत्रासंभवेपौषफाल्गुनयोरन्यतर स्मिन्वाएकाष्टका स्वकालेमाघ्यावर्षंचेतिद्वयमेव । इतरैस्तुउक्तेष्वेवपंचसुमासेषुपंचाष्टकाःकार्याः । अशक्तौमार्गशीर्षादि त्रयेतिस्रःभाद्रपदेचतुर्थींतिचतुष्टयं । अत्यशक्तौमाघेभाद्रेचेतिद्वयं । एषुसर्वेषुपक्षेषुप्रत्यष्टमिपूर्वेद्युःश्राद्धमन्वष्टक्यंश्राद्धंच भवत्येव । ततोप्यशक्तौमाघभाद्रयोरष्टमीश्राद्धमात्रंसर्वेषां । तत्राप्यशक्तौआमैर्मूलफलैर्हिरण्येनवाप्रदानमात्रं । अत्राप्य शक्तौएषामेष्टकाइतिध्यायन् अनड्डुह्यस्तृणदानं अग्निनाशुष्कतृणदाहं तिलतर्पणं अनूचानेभ्यउदकुंभदानंश्राद्धमंत्राध्य यनंवाकुर्यात् ॥ ॥ तत्रपूर्वेद्युष्कश्राद्धप्रयोगः ॥ ॥ श्राद्धयोग्याष्टमीदिनात्पूर्वेद्युःपार्वणवत्तर्पणांतंवैश्वदेवांतंवाकृत्वा देशकालकीर्तनांते पार्वणवद्देवान्पितॄंश्चोक्त्वा तृप्त्यर्थमित्यंतेश्वोष्टकाश्राद्धंकर्तुकामःपूर्वेद्युःश्राद्धंकरिष्ये । विप्रान्निमंत्र्यम ध्याह्नेतान्संनिधाप्य व्यतिषंगवदग्निध्यानादिकुर्यात् । तत्रहविस्त्रयपक्षेपात्रासादनेतिस्रःस्थालीरासाद्यतासुव्रीहिपूरणादि क्षालनांते प्रथमायांशुद्धौदनं द्वितीयायांतिलमिश्रौदनं तृतीयायांपायसंच क्रमेणाग्नेयीसंस्थंश्रपयेत् । लेखोल्लेखनादिकृत्वा

ओदनादीनभिघार्योदगुद्वास्यातिप्रणीतात्पश्चादाग्नेयीसंस्थानासाद्यकशिपूपवर्हणासादनांतं । अपूपमात्रपक्षेतत्स्थापनार्थैकैव स्थाली । शूर्पोलूखलमुसलकृष्णाजिनानांनिवृत्तिः । अपूपास्तुव्रीहितंडुलसंभवाघृतयुक्ताबहुच्छिद्राश्चतुःपुरुषाहारपर्याप्ता लौकिकाग्निपक्काग्राह्याः । अत्रपक्षेपात्रप्रोक्षणांतेलेखोल्लेखनादिकृत्वा हविरासादनकालेअपूपानासादितस्थाल्यामादायाग्ना वधिश्रित्याभिघारणादिकशिपूपवर्हणासादनांतं । ततोभूमिशोधनादिशुद्ध्यर्थमंत्रजपादिवापित्र्यविप्रपाणिशोधनांतंकृत्वात्रिषुपात्रेषुओदनादिभ्यस्त्रिभ्यःपृथगुद्धृत्य केवलापूपपक्षेएकस्मिन्नेवपात्रेउद्धृत्यघृतेनांजनादीध्माधानांतेपिंडपितृयज्ञवत्रिभ्यो हविर्भ्योद्विर्द्विरवदाय पक्षांतरेअपूपेभ्यएवद्विरवदाय पात्रस्थान्यवत्तंचाभिघार्यजुहुयात् । एवंपुनःपुनरवदायाष्टाभिश्चतुर्दशभिर्वाहोमः ॥ तत्रमंत्राः ॥ उदीरता० हवेषुस्वधानमः पितृभ्यइदं० १ । एवमग्रेपि । इदंपितृभ्यो० २ आहंपितॄन्० ३ बर्हिषदःपितरः० ४ उपहूताःपितरः० ५ आच्याजानु० ६ आसीनासो० ७ येनःपूर्वे० ८ येतातृषुर्दे० ९ येसत्यासो० १० अग्निष्वात्ता० ११ त्वमग्नईळितो० १२ येचेहपितरो० १३ येअग्निदग्धा० १४ होमांतेमेक्षणमनुप्रहृत्यमंडलकरणादि । स्थालीपाकत्रयेणसह पक्षांतरेअपूपैःसहभुक्तशेषमुद्धृत्यशेषनिवेदनादिसर्वंव्यतिषंगवत्कुर्यात् । पूर्वंतर्पणंनकृतंचेदिदानीं कार्यम् ॥ इतिपूर्वेद्युःश्राद्धप्रयोगः ॥ ॥ ॥ ॥ ॥ ॥

अथाष्टमीश्राद्धप्रयोगः ॥ ॥ तत्रपूर्ववन्मध्याह्नसंध्योपासनांतेवैश्वदेवंकृत्वा देशकालकीर्तनांते कामसंज्ञकानांविश्वेषांदेवानां कालसंज्ञकानांविश्वेषांदेवानां अस्मत्पितुरित्यादित्रयःषड्वा तृप्त्यर्थमित्यंतेअष्टकाश्राद्धंकरिष्ये । विप्रान्निमंत्र्यसंनिधा

प्य अष्टकाश्राद्धांगहोमंकरिष्ये । तत्रदेवतापरिग्रहार्थमित्याद्याज्यभागदेवतेआज्येनेत्यंते अग्निंद्विः विश्वान्देवांश्चतुः प्रजापतिंसकृत् एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । अष्टाविंशतिमुष्टींस्तूष्णींनिरुप्यतथैवप्रोक्ष्य श्रपणाद्याज्यभागांतेचरोर्विभागमकृत्वाअवदानधर्मेणसप्ताहुतीर्जुहुयात् । अग्नेनयेत्यादिद्वयोरगस्त्यस्त्रिष्टुबग्निःहोमेवि० । ॐ अग्नेनयसु० धेमस्वाहा अग्नयइदं० १ ॐ अग्नेत्वंपारया० शंयोःस्वाहा अग्नयइदं० २ । ग्रीष्मइत्यादिचतुर्णांवामदेवस्त्रिष्टुब्विश्वेदेवाः होमेवि० । ग्रीष्मोहेमंत० मायुःस्वाहा विश्वेभ्योदेवेभ्यइदं० ३ ॐ शांतापृथिवी० सर्वतःस्वाहाविश्वेभ्योदेवेभ्यइदं० ४ ॐ आपोमरीचीः० क्षराणिस्वाहा विश्वेभ्योदेवेभ्यइदं० ५ ॐ विश्वआदित्या० दधातुस्वाहा विश्वेभ्योदेवेभ्यइदं० ६। प्रजापतेहिरण्यगर्भस्त्रिष्टुप्प्रजापतिः होमेविनि० ॐ प्रजापतेन० रयीणांस्वाहा प्रजापतयइदं० ७ । स्विष्टकृद्धोमादिसमाप्य । ततोभूमिशोधनादिशुद्ध्यर्थमंत्रजपादिवाश्राद्धप्रयोगंकेवलपार्वणवत्कृत्वांतेतर्पणंकुर्यात् ॥ इत्यष्टमीश्राद्धप्रयोगः ॥ ॥

अथापरेद्युरन्वष्टक्यश्राद्धप्रयोगः ॥ ॥ सचप्रायेणपूर्वेद्युःश्राद्धवत् । विशेषस्तूच्यते । संकल्पेपितृत्रयानंतरंमात्रादित्रयं पक्षेमातामहादित्रयंचोच्चार्य तृप्त्यर्थमित्यंते अन्वष्टक्यश्राद्धंकरिष्ये । विप्रान्निमंत्र्य संनिधाप्य दक्षिणाप्रवणदेशोपरिकृतेस्थंडिलेरेखादिसंस्कृतेऔपासनाग्निंनिधाय समंततोवस्त्रादिनापरिश्रित्योत्तरतोद्वारंकुर्यात् । नवापरिश्रयणम् । अग्निंप्रज्वाल्य येरूपाणीत्युल्मुकंप्रणीयपरिसमुह्य समूलदर्भैरकंपयन्त्रिवारंपूर्ववत्परिस्तीर्यपर्युक्ष्य स्थालीचतुष्टयसहितानि पात्राण्यासादयेत् । सकृदाच्छिन्नद्वयंत्रयंवासाद्यप्रोक्षणादि । ओदनादिचरुत्रयश्रपणं । श्रपणकाले किंचिदोदनाग्रद्रवंपा

त्रेसंभृत्यमंत्रावृत्त्याद्वेतिस्रोवालेखाउल्लिख्याभ्युक्षणादि । स्रुवसंमार्गांते चतुर्थस्थाल्यांदधिमिश्रभर्जितयवपिष्टरूपान्दधिमं थान्निधाय चरुत्रयस्याभिघारणाद्यासादनांतेदधिमन्थानग्नावधिश्रित्याभिघारणाद्यासादनांतंकृत्वादक्षिणतअंजनाभ्यंजने कशिप्वादीनांद्वयंत्रयंवासाद्य । भूमिशोधनादिशुद्ध्यर्थमंत्रजपादिवाश्राद्धप्रयोगंकुर्यात् । होमेहविश्चतुष्कादवदानं । उदीर तामित्यादिमंत्रस्थानेसोमायेत्यादिप्राकृतमंत्राभ्यांद्वेआहुतीइतिविशेषः । पिंडार्थान्नेमधुमंथानामपिग्रहणं । स्त्रीपिंडार्थान्नेपूर्व संभृतओदनाग्रद्रवोऽपिग्राह्यः । अर्घ्यपिंडादिमंत्रेषूहप्रकारस्तुमहालयप्रकरणेवक्ष्यते ॥ इत्यन्वष्टक्यश्राद्धप्रयोगः ॥ ॥

माघ्यावर्षश्राद्धंतु—एवमेवदिनत्रयेभाद्रपदस्यकृष्णपक्षेकार्यं । तच्चाष्टम्यनुसारेणकार्यमितिवृत्तौ । त्रयोदश्यनु सारेणेतिहरदत्तः । कस्मिंश्चिद्दिनत्रयेकार्यमितिमतांतरंतेनैवोक्तं । तत्रसंकल्पादावष्टकापदस्थानेमाघ्यावर्षशब्दप्रयोगइति विशेषः ॥ ॥ एषुत्रिषुश्राद्धेषुविप्रसंख्यामाहाश्वलायनः—नवावरान्भोजयेदयुजोवेति । अस्यविवरणंशौनकः—नवाव रान्द्विजानेषुत्रिषुकर्मसुभोजयेत् । अशक्तौसप्तपंचत्रीनयुग्मांश्चयथाबलं । सप्तत्वपक्षेपित्रादिद्वितयस्यत्रयस्त्रयः । वरणीया स्तृतीयस्यत्वेकएवविशिष्यते । पंचपक्षेपिपित्रर्थंवरणीयास्त्रयोन्ययोः । द्वयोःप्रत्येकमेकैकोवरणीयोविशिष्यते । इति ॥

॥ इतिदातारोपाह्वगंगाधरशास्त्रिपरिष्कृतपाकसंस्थाप्रयोगाः ॥

# अथोत्तरनारायणभटीअंत्येष्टिः ॥

सर्वप्रायश्चित्तप्रयोगः ॥ ॥ श्रीः ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः । नत्वाशिवौसंविचार्यकुरुतेंत्येष्टिपद्धतिम् ॥ १ ॥ आसन्नमरणंपित्रादिकंपुत्रादिस्तीर्थेनीत्वा प्रायश्चित्तंकारयेत् । तदीयंस्वयंवाकुर्यात् । तच्चषडब्दंत्र्यब्दंसार्धाब्दमन्यद्वायथाशक्तितदैवसुवर्णादिप्रत्याम्नायद्वारापरिषदोनुमतंकुर्यात् । संकल्पमात्रंकृत्वासूतकांतेवाकुर्यात् । षडब्दादिव्यवस्थेत्थम्—त्रिंशत्कृच्छ्रमब्दं पंचचत्वारिंशत्कृच्छ्रंसार्धाब्दं नवतिकृच्छ्रंत्र्यब्दंचेति । कृच्छ्रंप्राजापत्यमितिपर्यायौ । कृच्छ्रेगवादयस्तन्निष्क्रयरजतान्यतरनिष्कतदर्धतत्पादादयःप्रत्याम्नायाः । तेचगायत्र्ययुतजपे तिलहोमसहस्रे द्वादशब्राह्मणभोजने तीर्थयोजनयात्रायां एकगोदाने सुवर्णरूप्यनिष्कतदर्धतदर्धानांगोमूल्यानांशक्त्यादाने शुष्ककेशस्यद्वादशस्नानेषु द्विगुणद्वादशामान्नदानादौचएकःप्राजापत्यइति । तत्रशक्तस्यामान्नंद्विगुणं द्रव्यंचतुर्गुणमित्यादियोज्यम् । निष्कस्यप्रमाणं लोकशास्त्रयोरेकवाक्यतायांमाषाश्चत्वारिंशत् ४० तदर्धविंशतिः २० तदर्धदश १० । मुख्यंसुवर्णं तदशक्तौरजतंग्राह्यम् ॥ तत्रसामग्र्युपकल्पनम् ॥ गंधपुष्पधूपदीपनैवेद्यफलतांबूलानिपंचगव्यानिगोमूत्रगोमयक्षीरदधिघृतादीनिमृत्तिकाभस्मगोमयदूर्वातिलाःसमिधोदर्भाःहोमार्थंघृतंपर्षद्दक्षिणानिवंधानुवादकपूजार्थंदक्षिणापूर्वोत्तरांगगोप्रदानद्रव्यंपूर्वोत्तरांगविष्णुश्राद्धद्रव्यमित्यादि। एवंसामग्रींसंपाद्यसंभवेरिक्तायांतिथावन्यस्मिन्वापुण्येह्निचतुरस्त्रीनेकंवाध्यात्मविदंब्राह्मणंपरिषत्त्वेनोपवेश्य

कृतस्नानःशक्तश्चेदार्द्रवासाअभुंजानःसमाहितमनाःपरिषदंप्रदक्षिणीकृत्यहृदयेनदूयमानोधरण्यांसाष्टांगंप्रणमेत् । विप्रैःकिं तेकार्यंमिथ्यामावादीःसत्यमेववदेतिपृष्टःकर्ताआचम्यप्राणानायम्य देशकालौसंकीर्त्य करिष्यमाणसर्वप्रायश्चित्तांगत्वेनेदं गोवृषयोर्निष्क्रयीभूतंनिष्कतदर्धतत्पादान्यतमप्रमाणंरजतद्रव्यंसभ्येभ्योदातुमहमुत्सृज्येनममेतिसंकल्पपूर्वकंसभ्याग्रेनिधाय ॥ अमुकशर्मणोममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांनिरासार्थमनुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतः इतिवदेत् । (स्वस्याशक्तौपुत्रादिःप्रतिनिधिश्चेन्ममपितुर्जन्मप्रभृतीतीत्यादिवदेत्) । ततः—सर्वेधर्मविवेक्तारोगोप्तारःसकलाद्विजाः । ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः । मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं । प्रसादःक्रियतांमह्यंशुभानुज्ञांप्रयच्छथ । पूज्यैःकृतःपवित्रोऽहंभवेयंद्विजसत्तमैः । इतिप्रार्थयेत् । पुत्रादिश्चेत्कर्तातदासच्छब्दस्थाने पितुः पित्रा इत्यादितन्नामनिर्दिशेत् । प्रार्थनानंतरंमामनुगृह्णंतुभवंतःइतिप्रणमेत् । ततःसभ्यैस्तस्यशक्त्यादिविचार्यप्रायश्चित्तेनिश्चिते कर्तामासपक्षाद्युच्चार्यकरिष्यमाणसर्वप्रायश्चित्तांगत्वेननिबंधपूजांसभ्यानुवादकपूजांचकरिष्यइतिसंकल्प्य आदौचंदनपुष्पादिभिःपुस्तकपूजांकृत्वानिबंधपूजात्वेनाकिंचिद्द्रव्यंनिधायानुवादकपूजांकुर्यात् । अनुवादकमुदङ्मुखमुपवेश्य परमेश्वरस्वरूपिणेऽनुवादकब्राह्मणायेदमासनं इत्यादिदक्षिणांतंपूजनंकृत्वा इमांभूतिरूपांदक्षि



१ अत्रमध्येसभावितपापानामत्यधिकंकचित् ।

णामनुवादकायतुभ्यमहंसंप्रददेनममेतिदद्यात् । ततःसभ्याःपुस्तकवाचनपूर्वकमनुवादकस्याग्रेकथयेयुः । अनुवादकश्चक
र्तारंवदेत् । तद्यथा । अमुकशर्मणस्तवजन्मप्रभृतिअद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिक
सांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजाति
भ्रंशकरप्रकीर्णकपातकानांनिरासार्थंपर्षदुपदिष्टंषडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तं प्रतिप्राजापत्यंतत्प्रत्याम्नायगोनिष्क्र
यीभूतरजतनिष्कतदर्धतत्पादान्यतमद्रव्यदानद्वाराप्राच्योदीच्यांगसहितंत्वयाआचरितव्यंतेनतवशुद्धिर्भविष्यतित्वंकृता
र्थोभविष्यसि इतित्रिवारमुपदिशेत् । कर्ता ॐ भवदनुग्रहःइत्यंगीकृत्य संमानपूर्वकंप्रणम्यपर्षदंविसृजेत् । ततःकर्ता
रिक्तायांसायाह्नेगंगादौदेशकालौसंकीर्त्य अमुकशर्मणोममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिक
वाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणा
पात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांनिरासार्थंपर्षदुपदिष्टंपडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तं प्रतिप्राजापत्यंतत्प्र
त्याम्नायगोनिष्क्रयीभूतरजतनिष्कतदर्धतत्पादान्यतमपरिमितद्रव्यदानद्वाराप्राच्योदीच्यांगसहितंयथाशक्त्यहमाचरिष्यइ
तिसंकल्प्य । शिरसिहस्तंनिधाय । यानिकानिचपापानिब्रह्महत्यासमानिच । केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहं ।
इतिमंत्रेणशिखाकक्षोपस्थवर्जंनखकेशादीन्वापयित्वा।क्षौरांतेद्वादशगंडूषान्कृत्वा प्राङ्मुखोभूत्वा। आयुर्बलंयशोवर्चःप्रजाः

१ अशक्तौक्षौराभावेसार्धाब्दादिव्रतंद्विगुणकृला पर्षद्दक्षिणापिद्विगुणादेया ।

पशुवसूनिच । ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते । इतिमंत्रेणाभिमंत्रितेनद्वादशांगुलप्रमाणेनांपामार्गादिकाष्ठेन । मुख दुर्गंधिनाशायदंतानांचविशुद्धये । ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं । इतिमंत्रेणदंतशुद्धिंकृत्वा ताद्दशान्यकाष्ठेनजिह्वा मुल्लिख्य द्वादशगंडूषान्कृत्वाचम्यस्नात्वा । भस्मादिदशविधस्नानानिकुर्यात् ॥ ॥ तत्रभस्मस्नानमेवम् । प्रायश्चित्तांगंभ स्मस्नानंकरिष्यइतिसंकल्प्य भस्मगृहीत्वा ॐ ईशानःसर्वविद्याना० ईशानायनमइतिशिरसि । तत्पुरुषायविद्महे० तत्पुरु षायनमइतिमुखे । अघोरेभ्योथघोरेभ्यो० अघोरायनमइतिहृदये । वामदेवायनमोज्येष्ठाय० वामदेवायनमइतिगुह्ये । सद्योजातंप्रपद्यामि० सद्योजातायनमइतिपादयोः । प्रणवेनसर्वांगेषुविलिप्य । यद्वा अग्निरितिभस्म वायुरितिभस्म जल मितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वंहवाइदंभस्मेतिमंत्रैर्विलिप्य । ततःस्नात्वाऽऽचामेत् ॥ ॥ गोमयस्नानं ॥ ततःप्रायश्चित्तांगंगोमयस्नानंकरिष्यइतिसंकल्प्य गोमयमादायवामहस्तेकृत्वा ॐ भूर्भुवःस्वरितिव्याहृतिभिस्त्रेधाविभज्य दक्षिणभागंप्रणवेनदिक्षुविक्षिप्योत्तरभागंचतीर्थेप्रक्षिप्य शेषंसूर्यायदर्शयित्वागंधद्वारामितिमंत्रेणाभिमंत्र्य अग्रमग्रंचरंतीना मोषधीनांवनेवने । तासामृषभपत्नीनांपवित्रंकायशोधनं । तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा । इतिमंत्रेणवासर्वांगमनु लिप्यस्नात्वाचामेत् ॥ ॥ अथमृत्तिकास्नानं ॥ सर्वप्रायश्चित्तांगभूतंमृत्तिकास्नानंकरिष्यइतिसंकल्प्य अश्वक्रांतेइतिमृद मभिमंत्र्य । उद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं । इतिमृदमादाय नमोमित्रस्यवरुणस्य० इतिमंत्रेणसूर्यायप्रदर्श्य गंधद्वारामितिमंत्रेण स्योनापृथिविइतिवा इदंविष्णुइतिमंत्रेणवा शिरःप्रभृत्यंगानिविलिप्यस्नात्वा

द्विराचामेत् ॥ ॥ अथवाविस्तरेणमृत्तिकास्नानं ॥ तद्यथा ॥ बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि । प्रयाभूमिंप्रवत्वति महाजिनोषिमहिनि । इतिभूमिंप्रार्थ्य । मावोरिषत्खनितायस्मैचाहंखनामिवः । द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं । इति खनित्वा । स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । इतिमृदंगृहीत्वा । आयनेतेपरायणेदूर्वारोहंतुपुष्पि णीः । हृदाश्चपुंडरीकाणिसमुद्रस्यगृहाइमे । इतिदूर्वामादायगायत्र्याभ्युक्ष्यभूमौमृदंनिधाय मृत्तिकास्नानंकरिष्यइतिसंक ल्प्यमृदंकुशोदकेनप्रोक्ष्यदिक्षुक्षिपेत् । त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं । ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघ वाधात्विंद्रः । इतिपूर्वस्यां । यमायमधुमत्तमंराज्ञेहव्यंजुहोतन । इदंनमऋषिभ्यःपूर्वजेभ्यःपूर्वेभ्यःपथिकृद्भ्यः । इतिदक्षि णस्यां । तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः । अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः । इति पश्चिमायां । वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावंतःसचेमहि । इतिउत्तरतः । तत्सूर्यंरोदसीउभेदोषावस्तोरुपब्रुवे । भोजेष्वस्माँअभ्युच्चरासदा । इत्युपरिष्टात् । अधःपश्यस्वमोपरिसंतरांपादकौहर । मातेकशप्लकौदृशन्स्त्रीहिब्रह्माबभूविथ । इत्यधःक्षिप्त्वांगेषुलिंपेद्यथा । सहस्रशीर्षा० इतिशिरसि । अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंम स्तिष्कांजिह्वायाविवृहामिते । इतिमुखे । ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । यक्ष्मंदोषण्य१मंसाभ्यांबाहु भ्यांविवृहामिते । इतिग्रीवायां । आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते । इतिहृदये । नाभानाभिनआददेचक्षुश्चित्सूर्येसचा । कुवेरपत्यमादुहे । इतिनाभौ । त्वामिंद्रसजोषसमर्कंबिभर्षिबाह्वोः ।

वज्रंशिशानओजसा । इतिबाह्वोः । सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवंतंयऔशिजः । इतिकक्ष्योः । यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते । उर्वीरापोनकाकुदः । इतिकुक्ष्योः । बह्वीनांपितावहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य । इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः । इतिपृष्ठे । ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां । यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते । इत्यूर्वोः । मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । इतिजान्वोः । एतावानस्यमहिमातोज्यायांश्चपूरुषः । पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि । इतिपादयोः । यस्यविश्वानिहस्तयोःपंचक्षितीनांवसु । स्पाशयस्वयोअस्मध्रुक्दिव्येवाशनिर्जहि । इतिहस्तयोः । अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । इतिपुरुषसूक्तेनचसर्वांगोद्वर्तनं । ततः । अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे । शिरसाधारयिष्यामिरक्षस्वमांपदेपदे । भूमिर्धेनुर्धरणीलोकधारिणी । उद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं । मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता । मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं । मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके । त्वयाहतेनपापेनगच्छामिपरमांगतिं । इतिसतिलदूर्वांमृदंशिरसिनिधायमृत्तिकास्थानंप्रक्षालयेत् । अथशुद्धोदकस्नानं । आपोअस्मान्मातरःइत्युक्त्वासूर्याभिमुखः इदंविष्णु० इतिमंत्रेणप्रवाहाभिमुखोमज्जेत् । अथवा आपोहिष्ठेतितृचेनवारिस्नानंकुर्यात् ॥ अथपंचगव्यैःकुशोदकेनचेतिषट्स्नानानि । तत्रादौसर्वप्रायश्चित्तांगंगोमूत्रस्नानंकरिष्यइतिसंकल्प्य । तत्सवितु० गोमूत्रस्नानंकृत्वापुनःस्नात्वाचामेत् । एवमग्रेपि । गोमयस्नानंकरिष्ये । गंधद्वारां० इतिगो

मयेन । क्षीरस्नानंकरिष्ये। आप्यायस्वसमेतुते० इतिक्षीरस्नानांतेस्नानमाचमनंच । ततोदधिस्नानंकरिष्ये । दधिक्राव्णोअकारिषं० इतिदधिस्नानांतेजलेनस्नात्वाआचामेत्। ततोघृतस्नानंकरिष्ये । घृतंमिमिक्षे० इतिघृतस्नानं। ततःस्नानाचमनेचकार्यें।कुशोदकस्नानंकरिष्यइतिसंकल्प्य । देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम०भिषिंचामीतिकुशोदकस्नानांतेशुद्धोदकेनस्नात्वातीर्थंप्रार्थयेत्। हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः।यन्मयाभुक्तमनसाधूनांपापेभ्यश्चप्रतिग्रहः। यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं । तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः । इतिद्वाभ्यां । अर्वतेहेळो० इतिद्वाभ्यांचतीर्थंप्रार्थ्य । याःप्रवतो० इतितीर्थमभिमृश्य स्नात्वाचम्यमार्जयेत् । तत्रमंत्राः । ॐ इमंमेगंगे० १ सुमित्र्यान० १ समुद्रज्येष्ठाः० ४ एतोन्विंद्रं० ३ तरत्समंदी० ४ यदंतियच्चदूरके० ५ त्रिभिष्ट्वंदेव० क्षीरंसर्पिर्मधूदकं ७ आपोहिष्ठा० ३ इतिमंत्रैर्मार्जनंकृत्वा । इमंमेगंगेयमुने० इदंतेन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्रवहंतिनद्यः । सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य । इत्युदकमालोड्य। ऋतंचसत्यं० इतितृचेनाघमर्षणंकृत्वात्रिर्द्वादशवारंवामज्जनंकृत्वास्नानांगतर्पणंकुर्यात् । तद्यथा । उपवीतीसाक्षताभिरद्भिर्देवतीर्थेन ब्रह्मादयोयेदेवाः तान्देवांस्तर्पयामि भूर्देवांस्तर्पयामि भुवर्देवांस्तर्पयामि स्वर्देवांस्तर्पयामि भूर्भुवःस्वर्देवांस्तर्पयामि । निवीतीसाक्षताभिरद्भिःऋषितीर्थेन कृष्णद्वैपायनादयोयेऋषयः तानृषींस्त०भूर्ऋषींस्त० भुवर्ऋषींस्त० स्वर्ऋषींस्त०भूर्भुवःस्वर्ऋषींस्तर्पयामि। प्राचीनावीतीसतिलाभिरद्भिःपितृतीर्थेन सोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः तान्पितॄंस्त० भूःपितॄंस्त० भुवःपितॄंस्त० स्वःपितॄंस्तर्प० भूर्भुवःस्वःपितॄं

स्तर्पयामिइतिस्नानांगतर्पणंकृत्वा । अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम । भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिं । इतितीरेजलंदत्त्वा । येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः । तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं । इतितीरेउत्तरीयंनिष्पीड्य । यन्मयादूषितंतोयंशारीमलसंभवात् । तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं । इतियक्ष्मतर्पणंविधाय धौतेवाससीपरिधाय द्विराचम्यतिलकंधृत्वाऽऽचम्यदेशकालौस्मृत्वा श्रीविष्णुप्रीत्यर्थंसर्वप्रायश्चित्तपूर्वांगत्वेनविहितंविष्णुश्राद्धंकरिष्यइतिसंकल्प्य । शालग्रामशिलायांदर्भवटौवा इदंविष्णु० इतिविष्णुमावाह्य षोडशोपचारैःपंचोपचारैर्वासंपूज्य पापापहश्रीविष्णुप्रीत्यर्थंसर्वप्रायश्चित्तांगाद्यविष्णुश्राद्धसंपत्तयेश्रीविष्णूद्देशेनब्राह्मणचतुष्टयभोजनपर्याप्तामान्नानितन्निष्क्रयीभूतंद्रव्यंवानानानामगोत्रेभ्यश्चतुर्भ्योब्राह्मणेभ्योदातुमहमुत्सृज्येनममेतिसंकल्प्यचतुर्भ्योब्राह्मणेभ्यःपूजनपूर्वकंविभज्यदद्यात् । तेनपापापहमहाविष्णुःप्रीयतां । सर्वप्रायश्चित्तपूर्वांगत्वेनविहितंगोदानंकरिष्ये इतिसंकल्प्य एकांगांतन्निष्क्रयंवाद्यगोदानत्वेनकुटुंबिनेद्विजायदद्यात् । तद्यथा । गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश । यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच । इतिगांयथाविभवंसंपूज्य इमांगांयथाशक्त्यलंकृतां इदंगोनिष्क्रयद्रव्यंवापापापहमहाविष्णुप्रीत्यर्थंब्राह्मणायदातुमहमुत्सृज्येइतिदद्यात् ॥ ततोदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंसर्वप्रायश्चित्तपूर्वांगहोमंकरिष्ये । तदंगतयास्थंडिलोपलेपनोल्लेखनाद्यग्निप्रतिष्ठापनादिकरिष्यइतिसंकल्प्यतत्कृत्वा जुष्टोदमूनेत्यादिविटनामानमग्निंप्रतिष्ठापयामीत्यंते चत्वारिशृंगेत्यादिनाध्यात्वान्वादध्यात् । सर्वप्रायश्चित्तपूर्वांगहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंते अत्रप्रधानंअग्निंवायुंसूर्यंप्रजापतिंच प्रतिदैवतंसप्तविंश

तिसंख्याज्याहुतिभिः सप्तसंख्याज्याहुतिभिर्वा तथा पृथिवींविष्णुंरुद्रंब्रह्माणंअग्निंसोमंसवितारंआत्मानंप्रजापतिमग्निंस्विष्ट
कृतंचएकैकयापंचगव्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्वयमग्नावाधायपरिसमूहनादिपा
त्रासादनांतेतृणेनसहपंचगव्यपात्रमासाद्याज्यसंस्कारकालेपंचगव्यंकृत्वाज्येनसहपर्यग्निकुर्यात् ॥ ॥ ॥
ब्रह्मकूर्चपंचगव्यविधिः ॥ ॥ सुवर्णताम्रपलाशपद्माद्यन्यतमपात्रेताम्रायागोर्मूत्रंत्रिपलमष्टमापंवागायत्र्याप्रणवेनवा
दाय श्वेतगोशकृदंगुष्ठार्धपरिमितंषोडशमापंवागंधद्वारामितिमंत्रेणप्रणवेनवादाय पीतायाःकपिलायावागोःक्षीरंसप्तपलंद्वा
दशमाषंवा आप्यायस्वेतिप्रणवेनवादाय नीलायाःसप्तपलंदशमापंवादधि दधिक्राव्णइतिप्रणवेनवादाय कृष्णायाघृतमेक
पलमष्टमाषंवा शुक्रमसिज्योतिरसितेजोसिइत्यनेनघृतंमिमिक्षेइत्यनेनवाप्रणवेनवादाय ततःदेवस्यत्वेतिआपोहिष्ठेतिप्रणवेन
वाकुशोदकमेकपलंचतुर्माषंवाप्रक्षिपेत्। एवंगोमूत्रादीन्येकपात्रेकृत्वाप्रणवंसमुच्चार्यहस्तेनालोड्यपुनःप्रणवमुच्चार्ययज्ञियकाष्ठे
ननिर्मथ्यप्रणवेनाभिमंत्रयेत् । ततःआज्यपंचगव्यासादनाद्याज्यभागांतेस्रुवेण । ॐ भूःस्वाहा अग्नयइदंनमम। ॐ भुवः
स्वाहा वायवइदं० । ॐ स्वःस्वाहा सूर्यायेदं० । ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदंनममेत्याज्यस्यप्रतिदैवतंसप्तविंशतिरि
त्येवमष्टोत्तरशताहुतीः प्रतिदैवतंसप्तेत्येवमष्टाविंशतिसंख्याहुतीर्वाहुत्वा साग्रैःसप्तपत्रैर्हरितैःकुशैर्दशाहुतीर्जुहुयात् । तत्र
मंत्राः । ॐ इरावतीधेनुमतीहिभूतंसूयवसिनीमनुपेदशस्या । व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा ।

-१ पलकर्षचतुष्टय । कर्षस्तुला ।

पृथिव्याइदंनमम १ । ॐ इदंविष्णु० सुरेस्वाहा । विष्णवइदं० २ । ॐ मानस्तोकेतनये० हव्रामहेस्वाहा । रुद्रायेदं० ३ । ॐ ब्रह्मजज्ञानं० विवःस्वाहा । ब्रह्मणइदं० ४ । ॐ अग्नयेस्वाहा अग्नयइदं० ५ । ॐ सोमायस्वाहासोमायेदं० ६ । ॐ तत्सवितुर्वरेण्यं० प्रचोदयात्स्वाहा सूर्यायेदं० ७ । ॐ स्वाहा आत्मनइदं० ८ । ॐ प्रजापतेन० रयीणांस्वाहा । प्रजापतय इदं० ९ । ॐ अग्नयेस्विष्टकृतेस्वाहा अग्नयेस्विष्टकृतइदं० १० । इतिदशपंचगव्याहुतीर्हुत्वा केवलाज्यस्ययदस्येतिस्विष्टकृतंहुत्वा प्रायश्चित्तादिहोमशेषंसमाप्य बर्हिषिपूर्णपात्रनिनयनाद्यग्न्युपस्थानपरिस्तरणविसर्जनादियस्यस्मृत्यंते अनेनसर्वप्रायश्चित्तपूर्वांगहोमाख्येनकर्मणायज्ञनारायणरूपीपरमेश्वरःप्रीयतामित्युक्त्वा । ततो व्रतग्रहणंकरिष्यइतिद्विजान्पृष्ट्वातैः कुरुष्वेत्यभ्यनुज्ञातः । यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके । प्राशनंपंचगव्यस्यदहत्वग्निरिवेन्धनं । इत्युक्त्वाप्रणवेनहुतशेषमशेषंगृहीत्वाप्रणवेनैवसर्वंपंचगव्यंपिबेत् । अशक्तौगोमूत्रादिस्वल्पंग्राह्यं सर्वस्यपेयत्वात् । एतच्चग्रामाद्बहिर्नद्यादेस्तीरेनक्षत्रदर्शनेकार्यं । मुमूर्षोस्तुगृहादावेव । अस्मिन्दिनेशक्तस्योपवासः । अशक्तौहविष्याशनम् । अयंचेरात्रतीत्यादिपंचगव्यस्यदशाहुतिहोमोब्रह्मकूर्चाख्यपंचगव्यपानेसर्वत्रोह्यः । गृहमागत्यप्रातरारभ्यसंकल्पितप्रायश्चित्तंसंकल्पितप्रत्याम्नायानुसारेणानुष्ठायोत्तरांगानिकुर्यात् । गोनिष्क्रयरजतादिदानपक्षेपंचगव्यप्राशनांते—इदंषडब्देअशीत्युत्तरशतकृच्छ्रप्रत्याम्नायगोनि

१ ब्रह्मस्थानेगंनोदेवीतिमन्त्रेणाब्धइतिकेचित् ।

ष्क्रयीभूतं त्र्यब्देनवतिकृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतं प्रतिकृच्छ्रंनिष्कतदर्धतदर्धान्यतमप्रमाणंरजतद्रव्यंनानानामगोत्रेभ्यो ब्राह्मणेभ्योदातुमहमुत्सृज्यइतिद्रव्यदानसंकल्पंकृत्वातदैवद्रव्यंविभज्यदद्यात् ॥ ॥ ॥

अथप्रायश्चित्तोत्तरांगानि ॥ ॥ तत्र संकल्पः ॥ आचीर्णस्यसर्वप्रायश्चित्तस्यसांगतासिद्ध्यर्थमुत्तरांगानिकरिष्ये। तत्रहोमं कर्तुंस्थंडिलादिकरिष्ये इतिसंकल्प्योपलेपनोल्लेखनादिसंस्कृतेस्थंडिलेविटनामानमग्निंप्रतिष्ठाप्य ध्यात्वासमिद्द्वयमादाय सर्व प्रायश्चित्तोत्तरांगहोमेदेवतापरिग्रहार्थमन्वाधानमित्यादिचक्षुपीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं अग्निंवायुंसूर्यंप्रजापतिंचप्र तिदैवतंसप्तविंशतिसप्तान्यतरसंख्याज्याहुतिभिः शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्द्वयमग्नावाधाय परिसमूहनाद्याज्यभागहोमांते ॐ भूःस्वाहा अग्नयइदं० । ॐ भुवःस्वाहा वायवइदं० । ॐ स्वःस्वाहा सूर्यायेदं० । ॐ भूर्भु वःस्वःस्वाहा प्रजापतयइदं० । इत्याज्यस्यसप्तविंशतिःसप्तवेत्येवमष्टोत्तरशताहुतीरष्टाविंशतिसंख्याहुतीर्वाहुत्वा स्विष्टकृदा दिहोमशेषंसमाप्य वर्हिंपिपूर्णपात्रनिनयनादिश्रीपरमेश्वरःप्रीयतामित्यंतंसर्वंकुर्यात् । ततःआचम्यप्राणानायम्यदेशकालौ स्मृत्वाश्रीविष्णुप्रीत्यर्थंप्रायश्चित्तोत्तरांगत्वेनविहितंविष्णुश्राद्धंकरिष्यइतिसंकल्प्य शालग्रामशिलायांदर्भवटौवा इदंविष्णु रितिमंत्रेणविष्णुमावाह्यषोडशोपचारैःपंचोपचारैर्वासंपूज्य पापापहश्रीविष्णुप्रीत्यर्थं सर्वप्रायश्चित्तोत्तरांगविहितविष्णुश्रा द्धसंपत्तयेश्रीविष्णूद्देशेनब्राह्मणचतुष्टयभोजनपर्याप्तामनिष्क्रयीभूतंद्रव्यंचतुर्भ्योब्राह्मणेभ्योदातुमहमुत्सृज्येनममेतिसंकल्प्य चतुर्भ्योब्राह्मणेभ्यःपूजनपूर्वकंविभज्यदद्यात् । पापापहमहाविष्णुःप्रीयताम् । ततःसर्वप्रायश्चित्तोत्तरांगत्वेनविहितंगोदा

नंकरिष्यइतिसंकल्प्य एकांगांतन्निष्क्रयंवाद्विजायदद्यात् । तद्यथा । गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश । यस्मात्तस्माच्छि वंमेस्यादिहलोकेपरत्रच । इतिमंत्रंपठित्वा इमांगांयथाशक्त्यलंकृतां इदंगोनिष्क्रयद्रव्यंवापापापहमहाविष्णुप्रीत्यर्थंगोत्राय शर्मणेब्राह्मणायदातुमहमुत्सृज्येनममेतिसंकल्पयेत् । एवंप्रायश्चित्तंकृत्वाशक्तौसत्यांदशदानान्यपिकुर्यात् । तानिच । गोभू तिलहिरण्याज्यवासोधान्यगुडानिच । रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमादिति । एतानिव्रतांगत्वेनविहितानीतिमहा र्णवः । एतानिदशदानानिसभ्येभ्यएवतदसंभवेअन्येभ्योपिदेयानि । मंत्रहीनंक्रियाहीनं० इतिवदन्विष्णुंस्मरेत् । ततोय न्मयाकृतंसर्वप्रायश्चित्तंतदच्छिद्रमस्त्वितिकर्त्रोक्तेअच्छिद्रमस्त्वितिब्राह्मणाःप्रतिब्रूयुः । यद्वा । व्रतच्छिद्रंतपश्छिद्रंयच्छिद्रं यज्ञकर्मणि । सर्वंभवतुमेऽच्छिद्रंयस्यचेच्छंतिवैद्विजाः । इतिप्रतिवचनं । ततःशक्त्यनुसारेणब्राह्मणान्भोजयेदित्यलम तिविस्तरेण । इतिसर्वप्रायश्चित्तप्रयोगः । एतत्प्रायश्चित्तमकृत्वैवयदिपित्रादिर्मृतस्तदापातकसत्तानिश्चयेपुत्रादिनाइदमवश्यं कार्यं । अनिश्चयेनावश्यकम् । पुत्रादिनाकरणेपंचगव्यप्राशनाभावः । गृह्याग्निसागरेतुतस्मिन्नेवदिनेउत्तरांगहोमश्चतस्मिन्ने वाग्नौकार्यइत्युक्तं । तत्रतंत्रप्रयोगचिकीर्षायांपूर्वागहोमप्रधानदेवताःपंचगव्यहोमप्रधानदेवताश्चसंकीर्त्यततस्तदैवप्रक्रांतप्राय श्चित्तानंतरं उत्तरांगेक्रियमाणेतुप्रधानं अग्निंवायुंसूर्यंप्रजापतिंचप्रतिदैवतंसप्तविंशतिसंख्याज्याहुतिभिः सप्तसंख्याज्याहु तिभिर्वाशेषेणस्विष्टकृतमित्यादिपंचगव्यहोमांतेस्विष्टकृतःप्राक्पंचगव्यंप्राश्य सर्वप्रायश्चित्तीयंद्रव्यंपूर्ववदुत्सृज्योत्तरांगहोमं कृत्वास्विष्टकृदादिहोमशेषंसमाप्यउत्तरांगत्वेनविहितविष्णुश्राद्धगोदानेकृत्वाकर्मशेषंसमापयेदिति ॥ ॥ ७ ॥

अथस्त्रीशूद्रप्रायश्चित्तम् ॥ ॥ स्त्रीणांहोमःकृताकृतः । करणपक्षेविधवायाःक्षौरांतंपूर्ववत्कृत्वा अमंत्रकाणिदशस्नानानि । सधवायास्तुदंतधावनंकृत्वातूष्णींदशस्नानानि । वस्त्रपरिधानांतेविष्णुश्राद्धगोदानेकृत्वा प्रायश्चित्तहोमार्थमाचार्यंत्वांवृणेइतिविप्रंवृत्वा पूर्ववद्विप्रद्वारासर्वंपूर्वांगंकारयित्वा स्वयंपंचगव्यंतूष्णींप्राश्य मुख्यप्रत्याम्नायद्रव्यंविसृज्योत्तरांगानि कारयेत् । होमाभावपक्षेदशविधस्नानांतेविष्णुश्राद्धगोदानेकृत्वा विप्रेणपंचगव्यंकारयित्वा तूष्णींप्राश्यप्रायश्चित्तद्रव्यंसंकल्प्यदत्वोत्तरांगविष्णुश्राद्धगोदानदशदानानिकुर्यात् । इतिविप्रस्त्रियाःप्रायश्चित्तप्रयोगः ॥ अथशूद्रस्यसंकल्पांतमविकृतंप्राग्वत् । ततःक्षौरांतेअमंत्रकस्नानानि । वस्त्रतिलकधारणांतेविष्णुश्राद्धगोदाने । विप्रद्वारापंचगव्यंकारयित्वास्वयंतूष्णींपिबेत् । शूद्रेणकपिलायाःपंचगव्यानिनपेयानि । नास्यविप्रद्वारापिहोमः । प्रायश्चित्तद्रव्यंसंकल्प्यदत्वोत्तरांगविष्णुश्राद्धगोदानानिदशदानानिचकुर्यात् ॥ इतिविशेषः ॥ ॥ ॥ ॥ ॥

उत्क्रांतिधेनुदानम् ॥ ॥ अथोत्क्रांतिधेनुंदरिद्रायकुटुंबिनेश्रोत्रियायब्राह्मणायदद्यात् । अद्येत्यादिदेशकालावुत्कीर्त्यअमुकगोत्रस्यामुकशर्मणोममसुखेनप्राणोत्क्रमणप्रतिबंधकोक्तनिष्कृत्यनुक्तनिष्कृतिसकलपातकक्षयद्वारासुखेनप्राणोत्क्रमणार्थंयथाशक्त्युपस्कृतोत्क्रांतिधेनुदानंकरिष्येइतिसंकल्प्य ब्राह्मणंगांचयथाविभवमुक्तालंकारादिभिःसंपूज्य गवामंगेष्वित्यादियज्ञसाधनभूताया विप्रायवेदविदुषेइत्यादिपठित्वा संकल्पवाक्यमुक्त्वा इमामुत्क्रांतिधेनुंयथाशक्त्यलंकृतांरुद्रदेवत्यामममुकगोत्रायामुकशर्मणेतुभ्यंसंप्रददे प्रतिगृह्यतामित्युक्ते प्रतिग्रहीत्राकामस्तुतिपाठपूर्वंप्रतिगृह्णामीत्युक्तेदक्षिणांदद्यात् । पित्रा

दिरशक्तश्चेत्पुत्रादिर्दद्यात् । तत्रममेतिपदस्थानेपित्रादेरित्यूहेविशेषः । धेन्वभावेप्रत्याम्नायत्वेनद्रव्यंदद्यात् । अत्रवैतरणीधेनुदानंतिलपात्रदानंचोक्तम् । तत्प्रयोगादिएकादशाहिकेदानकांडेआलोचनीयम् ॥ ॥ ॥

अथातुरसन्निधौजाप्यम् ॥ ॥ प्राणोत्क्रमणकाले गोमयोपलिप्तभूमौकुशोपर्युपविष्टोदक्षिणशिरःशयितोवा तुलस्यूर्ध्वपुंड्रगंगामृत्तिकादिपवित्रैरलंकृतःपरमेश्वरंस्मरन्पुत्रोत्संगेधारितशिरस्तिष्ठेत् । ततोनानानमित्यादिस्वयंपठेदन्योवाश्रावयेत् । ततःअद्येत्यादिअमृतत्वप्राप्तिकामनयापुण्यसूक्तादिपाठमहंकरिष्येश्रोष्येवा । नानानमितिसूक्तस्यशिशुरांगिरसःपवमानःसोमःपंक्तिःअमृतत्वप्राप्तयेजपेश्रवणेवाविनियोगः । नानानंवाउनोधियोवित्रतानिजनानां । तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव । जरतीभिरोषधीभिःपर्णेभिःशकुनानां । कार्मारोअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायेंदोपरिस्रव । कारुरहंततोभिषगुपलप्रक्षणीनना । नानाधियोवसूयवोनुगाइवतस्थिमेंद्रायेंदोपरिस्रव । अश्वोवोळ्हासुखंरथंहसनामुपमंत्रिणः । शेपोरोमण्वंतौभेदौवारिन्मंडूकइच्छतींद्रायेंदोपरिस्रव ॥ १ ॥ शर्यणावतिसोममिंद्रःपिवतुवृत्रहा । वलंदधानआत्मनिकरिष्यन्वीर्यंमहदिंद्रा० । आपवस्वविशांपतआर्जीकात्सोममीढ्वः । ऋतवाकेनसत्येनश्रद्धयातपसासुतइंद्रायेंदो० । पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् । तंगंधर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिंद्रा० । ऋतंवदन्नृतद्युम्नसत्यंवदन्सत्यकर्मन् । श्रद्धांवदन्सोमराजन्धात्रासोमपरिष्कृतइंद्रायेंदो० । सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः । संयंतिरसिनोरसाःपुनानोब्रह्मणा

१ नानानमितिसूक्तंतुअंतकालेसदापठेत् । जह्याचैवपरंस्थानममृतत्वसगच्छतिइतिऋग्विधानात् ।

ग्राव्णासोमेंमहीयतेसोमेनानंदंजनयन्निंद्रायेंदो॰ । यत्रज्यो
हरइंद्रायेंदो॰ ॥ २ ॥ यत्रब्रह्मापवमानछंदस्यां३वाचंवदन् । ग्राव्णासोमेंमहीयतेसोमेनानंदंजनयन्निंद्रायेंदो॰ । यत्रराजावैवस्वतोयत्रावरोधनंदिवः ।
तिरजस्रंयस्मिँल्लोकेस्वर्हितं । तस्मिन्मांधेहिपवमानामृतेलोकेऽअक्षितइंद्रायेंदो॰ । लोकायत्रज्योतिष्मंतस्तत्रमाममृतंकृ॰ ।
यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रायेंदो॰ । यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः । कामस्ययत्रा
यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपं । स्वधाचयत्रतृप्तिश्चतत्रमाममृतं॰ । यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते । तमाहुःसुप्रजाइतियस्तेसोमाविधन्मनइंद्रायेंदो॰
प्ताःकामास्तत्रमाममृतं॰ ॥ ३ ॥ यइंदोःपवमानस्यानुधामान्यक्रमीत् । तमाहुःसुप्रजाइतियस्तेसोमाविधन्मनइंद्रायेंदो॰ । सप्तदिशोनानासूर्याःसप्तहोता
ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः । सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदो॰ । यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः । अरातीवामान
रऋत्विजः । देवाआदित्यायेसप्ततेभिःसोमाभिरक्षनइंद्रायेंदो॰ । यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः । देवैःसुकृतंकर्मभिस्तत्रमाममृतंकृधींद्रा
स्तारीन्मोचनःकिंचनाममदिंद्रायेंदो॰ ॥ ४ ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतंकर्मभिस्तत्रमाममृतंकृधींद्रा । यत्रगंगाचयमुनायत्रप्राचीसर
येंदो॰ । यत्रतत्परमाव्ययंभूतानामधिपतिः । भावभाविचयोगींचतत्रमाममृतंकृधींद्रायेंदो॰ । यत्रगंगाचयमुनायत्रप्राचीसर
स्वती । यत्रसोमेश्वरोदेवस्तत्रमाममृतंकृधींद्रायेंदो॰ ॥ ५ ॥ इतिनानानंसूक्तं । ततउपनिषद्भागान्अन्यानिचपुण्यसूक्तानि
गीतांस्तोत्राणिचविष्णुसहस्रनामादीनिपठेत् शृणुयाद्वा । श्रोतुःसंकल्पाशक्तौश्रावयिताऽमुकशर्मणोस्यामृतत्वरूपफलप्राप्त
येमुकंश्रावयिष्येइतिसंकल्पयेत् । श्रीरामादिस्मरणंचकार्यं ॥ इतिआतुरसंनिधौजाप्यविधिः ॥ ॥ ॥ ॥

मरणोत्तरंविधिः ॥ ॥ पूर्वमकृतेप्रायश्चित्तेप्राणोत्क्रमणोत्तरंपुत्रादिःकर्माधिकारीआचम्यप्राणानायम्यदेशकालौसं कीर्त्य अमुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरण जातिभ्रंशकरप्रकीर्णकपातकानांनिरासार्थं षडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तंप्रतिप्राजापत्यकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतदानेनसूतकांतेहमाचरिष्ये। (मात्रादौतुअमुकगोत्रायाःअमुकदायाःप्रेतायाःप्रेतत्वेत्यादिपूर्ववत्सर्वत्र)। पुनर्देशकालौस्मृत्वामुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्पृश्यस्पृष्टांतरालमरणखट्वामरणादिजनितप्रत्यवायपरिहारार्थं पंचदश-द्वादश-नव-षट्-त्रि-कृच्छ्राद्यन्यतमकृच्छ्रात्मकंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतदानेनसूतकांतेहमाचरिष्ये॥ ॥रात्रिमृतौदिवादाहे। अमुकगोत्रस्यामुकप्रेतस्यरात्रावकृतसंस्कारजनितप्रत्यवायपरिहारपूर्वकंदाहाद्यधिकारसिद्ध्यर्थं पंचगव्यस्नापनपूर्वकंकृच्छ्रत्रयप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्र० सूतकांतेआचरिष्ये॥ ॥ पुनर्देशकालकथनांतेआत्मशुद्धिद्वारापित्रादेरौर्ध्वदेहिकाधिकारसिद्ध्यर्थेद्वादश-षट्-त्रि-कृच्छ्राद्य

१ तत्रपुत्राद्यधिकारिणापित्रादिकमासन्नमरणंदृष्ट्वापडब्दत्र्यब्दसार्धाब्दादिप्रायश्चित्तंतिलपात्रवैतरणी-उत्क्रांति-मोक्ष-ऋणधेन्वादिदानानिचतेनकारणीयानिस्वयंवातमुद्दिश्यकर्तव्यानि। उक्तप्रायश्चित्तादिदानांतविधिमकृत्वापित्रादिमरणेपुत्रादिनाप्रायश्चित्तंकृत्वादाहादिकर्तव्यं । दानानित्वेकादशाहे। २ किंचिदूनपंचकलात्मकस्ताम्रकार्षापणोभवतीतिशक्तितारतम्येनतंवोल्लिखेत्।

न्यतमंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयी० इतिसंकल्प्यसूतकांतेतदैववाकुर्यात् । ततःकर्ताअन्येचपुत्राःपित्रादिमरणनिमित्तंवपनंकरिष्यइतिसंकल्प्य । यानिकानिचपापानिब्रह्महत्यासमानिच । केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहं । इतिकक्षोपस्थवर्जंकेशश्मश्रुलोमनखानिदक्षिणसंस्थानिवापयित्वास्नात्वाअहतंवासःपरिधायमृतोविच्छिन्नाग्निश्चेत्पुनःसंधानंकुर्यात् ॥ पुनःसंधानप्रयोगोग्रेवक्ष्यते ॥ ॥ ॥

अथगृहात्स्मशानेशवनयनप्रकारः ॥ ॥ ( तत्रेपूर्वंदशहोत्राभिःप्रेतस्नानं । इतःसर्वंकृत्यंप्राचीनावीतिनाकार्यंदक्षिणापवर्गंच । मंत्रास्तु–चित्तिःस्रुगासी३त् । चित्तमाज्यमासी३त् । वाग्वेदिरासी३त् । आधीतंबर्हिरासी३त् । केतोअग्निरासी३त् । विज्ञातमग्नीदासी३त् । प्राणोहविरासी३त् । सामाध्वर्युरासी३त् । वाचस्पतिर्होतासी३त् । मनउपवक्तासी३त् १० । तेवाएतंग्रहमगृह्णत । वाचस्पतेविधेनामन् । विधेमंतेनाम । विधेस्त्वमस्माकंनामद्यांगच्छ । इति ) प्रेतंसंस्नाप्यगोपीचंदनतुलसीमूलमृत्तिकाभिरलंकृत्य नलदमालां जपामालांवाकंठेप्रतिमुच्य अहतेनवाससाप्रत्यगग्रेणत्रिभिर्भागैःशिरः

---

१ इदंवपनरात्रिमृतौपरेहनिदिवैवकार्यं । कर्तृभिन्नैस्तदैवदशमेहनिवाययाचार । भर्तरिमृतेपल्याअपिआद्येदशमेहनिवावपनकार्यं । २ अयधनुश्चिह्नातर्गतःस्नानविधिरग्रेतनमध्वापिंडदानविधिश्चप्राचीननारायणभट्टप्रयोगेनोपलभ्यतेतथापिप्रचुरप्रचारादत्रोपन्यस्त । ३ स्नानेप्रचेताः–स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैःपूजनतत । नग्नदेहदहेन्नैवकिंचिद्देयपरित्यजेत् । यम.–प्रेतदहेच्छुभैर्गंधैःस्नापितस्त्रग्विभूपितम् । आश्वलायनसूत्रे–सस्थितेप्रेतालंकारान्कुर्वंतिकेशश्मश्रुलोमनखानिवापयंतिगधादिनानुलिंपतिनलदमालाप्रतिमुचतीति । ४ अत्रकेचनभस्मगोमयमृत्तिकाभिःशवस्नापयति तदनाकरंप्रमाणानुपलभात् । ५ कृष्णवर्णाशीर (वाळा) मूलैरचितामालानलदमाला । जपाजासवदइतिप्रसिद्धा ।

प्रभृत्यंगुलिपर्यंतंपादतलवर्जंप्रेतमाच्छाद्यतस्यपाददेशस्थंचतुर्थभागंछित्त्वातेनात्मनउत्तरीयंकुर्यात् । द्वादशाहांतंप्रेतकृत्येषु तदेवधार्यं । ततःशिविकायांप्रेतंप्राक्शिरसमूर्ध्वमुखंशाययित्वा सजातीयाःप्रेतंदाहदेशंप्रतिनयेयुः । श्रौताग्नयःस्मार्ताग्नि र्वाग्रेन्येननेतव्यः । प्रेताग्न्योर्मध्येऽन्येननगंतव्यं । सर्वेसपिंडादयोऽधःकृतोपवीताअप्रावरणामुक्तकेशावृद्धपुरःसराःप्रेतम नुगच्छेयुः । यदिगृहेमृतस्तर्हिब्राह्मणोनगरस्यपश्चिमद्वारेणनेयः । क्षत्रियउत्तरद्वारेण । वैश्यःपूर्वेण । शूद्रोदक्षिणेन । दाहदेशस्तुग्रामादाग्नेयेनैर्ऋत्येवामध्योन्नतःसर्वतोनिम्नोनावरणोवहुलौषधिश्च । तंदेशंप्राप्यशवमर्वागेवनिधाय तद्देशात्कंट कादीनिसमूलान्यपास्येत् । पथिमध्येशिविकांनिधाय ( सक्तुपिंडद्वयंकृत्वा । अतिद्रवेतिद्वयोर्यमश्वानौत्रिष्टुप्अध्वनिपिंड दानेवि० । अतिद्रवसारमेयौश्वानौचतुरक्षौशवलौसाधुनापथा । अथापितॄन्सुविदत्राँऽउपेहियमेनयेसधमादमदंति । शवस्यदक्षिणेश्यामायायंपिंडउपतिष्ठतु । यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ । ताभ्यामेनंपरिदेहिराजन्स्व स्तिचास्माअनमीवंचधेहि । प्रेतवामभागेशवलायायंपिंडउपतिष्ठतुइत्यध्वपिंडद्वयंदत्वा ) ततोवाहकाव्युत्क्रमेणप्रेतंवहंतः शिविकांश्मशानदेशंनिदध्युः । दाहदेशाद्वायव्यामग्निंनिदध्यात् । यदिविच्छिन्नोग्निस्तर्हियतोविच्छेदस्तावत्कालगणनयाग्नि विच्छेदप्रायश्चित्तंतदैवकुर्यात्संकल्पयेद्वा । तच्चनास्तिक्यादग्नित्यागेमासद्वयेकृच्छ्रंकार्यं । मासचतुष्टयेऽतिकृच्छ्रः । षण्मा

१ अत्राध्वपिंडत.पूर्वंइमेजीवेत्यस्यसंकुसुकोमृत्युस्त्रिष्टुप्प्रेतमुखावलोकनेवि० । इमेजीवाविमृतैराववृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य । प्राचोअगामनृत येहसायद्राघीयआयुःप्रतरंदधानाः ॥ इतिमुखावलोकनं वातास्तेवांत्वित्यनेनांजलिदानंचक्वचित्पुस्तकेषूपलभ्यतेपरंतुप्रचुरप्रचाराभावान्नमध्येसंगृहीतं ॥

सोर्ध्वचांद्रादिष्वेकम् । संवत्सरादूर्ध्वंत्रैमासिकंद्वैमासिकंवा । आलस्यादिनाग्नित्यागेतुद्वादशाहातिक्रमेत्र्यहमुपवासः । मासातिक्रमेद्वादशाहमुपवासः । संवत्सरातिक्रमेमासोपवासःपयोभक्षणंवा । प्रमादादग्नित्यागेआत्रिरात्राद्वादशलघुप्राणायामाः । आपडहाच्चतुर्विंशतिः । आद्वादशाहात्पंचाशत् । आविंशत्यहाच्छतम् । आमासादुपवासः । आषष्टिरात्रात्त्रिरात्रम् । संवत्सरात्कायम् । अतःपरंप्रत्यब्दंकायं । संवत्सरोर्ध्वमग्नित्यागेचांद्रम् । द्वित्रिवर्षत्यागेचांद्रंसोमायनंचचांद्रद्वयंवा । त्रिवर्षत्यागेकृच्छ्राब्दगोदानंचेत्यादि प्रत्याम्नायाःकल्प्याः । यावत्कालंविच्छेदस्तावदाहुतिपरिमितंहोमद्रव्यंचदद्यात् ।

अथप्रेतस्यपुनःसंधानम् ॥ ॥ मृतस्यगृह्याग्निविच्छेदे आचम्यपवित्रंधृत्वातूष्णींप्राणानायम्यविष्णुंस्मृत्वादेशकालौनिर्दिश्यअमुकगोत्रस्यामुकशर्मणःममपित्रादेःगृह्याग्निविच्छेददिनादारभ्यएतावंतंकालंगृह्याग्निविच्छेदजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं प्रत्यब्दंएकैककृच्छ्रप्रायश्चित्तंयथाशक्तिगोनिष्क्रयप्रत्याम्नायद्वारासूतकांतेहमाचरिष्ये । तथाचगृह्याग्निविच्छेदेनलुप्तानांसायंप्रातर्होमानांतथादर्शपूर्णमासस्थालीपाकानांचसंपत्तिपर्याप्तंव्रीह्याज्यनिष्क्रयद्रव्यंसूतकांतेब्राह्मणेभ्योदातुमहमुत्सृज्ये । अमुकगोत्रस्यामुकशर्मणःपित्रादेःअग्निविच्छेदनिमित्तकंदाहायाग्निसिद्ध्यर्थंप्रेताधानंकरिष्ये तदंगंस्थंडिलादिकरिष्येइतिसंकल्प्य चतुरस्रंस्थंडिलंकृत्वासंभारान्यथालाभंसंपाद्यतद्गोमयेनोपलिप्ययज्ञियकाष्ठेनोल्लिख्यलौकिका

---

१ अत्रसंभाराः—पलाशोदुंबराश्वत्थशमीवैकंकतावुजम् । वल्मीकोखरवाराहमूषकोत्खातमृत्तिकाः । वालुकासिकतारश्मशानिध्वस्ततरुत्वचः । यथालाभमेतान्संभारान्संपाद्यलौकिकाग्निंप्रतिष्ठापयेत् ।

ग्निंस्थंडिलस्याग्नेय्यांनिधाय जुष्टोदमूनेत्यादिनावाह्य व्याहृतिभिरग्निंप्रतिष्ठाप्यसमिध्यचत्वारिशृंगेतिध्यात्वा परिसमुह्यपरिस्तीर्यपर्युक्ष्य अग्नेरुत्तरतोदर्भेषुप्रोक्षणीस्रुवौआज्यपात्रंसंमार्गदर्भानासाद्य प्रोक्षणीपात्रमुत्तानंकृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रेकुशद्वयरूपेपवित्रेनिधायशुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूय पात्राण्युत्तानानिकृत्वासर्वाणित्रिःप्रोक्षेत्। तेपवित्रेआज्यपात्रेनिधायआज्यपात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्यअग्नेरुत्तरतोदर्भेषुनिधायज्वलतादर्भोल्मुकेनावज्वल्यअंगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यपुनर्ज्वलतातेनैवदर्भोल्मुकेनआज्यंत्रिःपर्यग्निकृत्वातदुल्मुकंनिरस्यअपउपस्पृश्य सवितुष्ट्वेतिउत्पूयअग्नौपवित्रंप्रहरेत्। ततआत्मनोग्रतोभूमिंप्रोक्ष्यतत्रास्तीर्णदर्भेष्वाज्यपात्रंनिधाय स्रुवंसंमृज्य तूष्णीमग्निमभ्यर्च्य। अयाश्चेतिविमदोअयाळग्निःपंक्तिःलौकिकस्याग्नेरौपासनत्वसिद्ध्येआज्यहोमेविनियोगः। ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि। अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा। अयसेग्नयइदं। इत्याज्याहुतिंहुत्वा। [ यस्याग्नयोजुह्वतोमांसकामाःसंकल्पयंतोयजमानमांसं। जानंतुतेहविषेसादितायस्वर्गलोकमिमंप्रेतंनयंतुस्वाहा स्वरिदं० ] भूःस्वाहा अग्नयइदं०। भुवःस्वाहा वायवइदं०। स्वःस्वाहा सूर्यायेदं०। भूर्भुवःस्वःस्वाहा प्रजापतयइदं०। एवंहुत्वापरिस्तरणानिविसृज्यपुनःपरिसमुह्यपर्युक्ष्याग्निंसंपूज्यविष्णुंस्मरेत्। एवमौपासनःसिद्धोभवति। पत्नीमरणेप्येवं॥ निरग्निकस्यब्रह्मचार्यादेःनिरग्निकाया

१ यस्याग्नयइत्याहुतिमत्रकेचिदाहुः। आहिताग्नेरेवेयमित्यपरे।

अपिवाकपालाग्निः । अग्निवर्णकपालंतुकृत्वातत्रविनिक्षिपेत् । करीपादिततोयस्तुजातःसतुकपालजः । अनुपनीताऽविवाहितयोरप्येवं । विधवाविधुरयोरुत्तपनीयकःकपालाग्निरेववा । दर्भैरग्निंतुप्रज्वाल्यपुनर्दर्भैश्चसंयुतः । पुनर्दर्भैस्तृतीयोग्निरेपञ्चत्तपनीयकः । लौकिकेनवासर्वेषांदाहः । आहिताग्नेर्वैतानाग्निभिस्त्रिभिः ॥ ॥ ॥ ॥

"स्मार्ताग्निमतोविशेषः ॥ ॥ शुक्लपक्षेरात्रिमृतस्यप्रातराहुतीर्जुहुयात् । कृष्णपक्षेअहर्मरणेसायमाहुतिमारभ्यपक्षहोमवत् मरणदिनाद्दर्शपर्यंतंदिनसंख्ययाचतस्रश्चतस्रआहुतीर्जुहुयात् । दर्शस्थालीपाकंचकुर्यात् । सचेत्थम्—देशकालौनिर्दिश्यश्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणंप्रातर्होमंइदानीमपकृष्यतंडुलैर्होष्यामि । अग्निंप्रज्वाल्य परिसमूहनादिकृत्वा तंडुलान्पर्यग्निकरणादिनासंस्कृत्य तूष्णींसमिधमग्नावाधाय शतसंख्याकतंडुलान्हस्तेनादाय । ॐ सूर्यायस्वाहा सूर्यायेदं० । पुनस्तंडुलानादाय ॐ प्रजापतयेस्वाहा प्रजापतयइदं० ॥ ॥ कृष्णपक्षेमृतस्यतु—श्रीपरमेश्वरप्रीत्यर्थं दर्शस्थालीपाकात्प्राक्तनान्सायंप्रातर्होमान् इदानीमपकृष्यतंडुलैर्होष्यामि । अग्निंप्रज्वाल्य परिसमूहनादिकृत्वा तंडुलान्संस्कृत्य तूष्णींसमिधमाधाय प्रतिहोमंद्वेद्वेआहुतीजुहुयात् । ॐ अग्नयेस्वाहा अग्नयइदं० । प्रजापतयेस्वाहा प्रजापतयइदं० । ॐ सूर्यायस्वाहा सूर्यायेदं० । ॐ प्रजापतयेस्वाहा प्रजापतयइदं० ॥ ॥ अथदर्शस्थालीपाकस्थानेपूर्णाहुतिः॥ श्रीपरमेश्वरप्रीत्यर्थंदर्शस्थालीपाकस्थानेपूर्णाहुतिंहोष्यामि । पूर्ववदाज्यंसंस्कृत्यस्रुवेणजुहुयात् । ॐ अग्नयेस्वाहा अग्नयइदं० । इंद्राग्निभ्यांस्वाहा इंद्राग्निभ्यामिदं० । एतत्सर्वंदाहदेशाद्वायव्यभागेकर्तव्यम् ॥ इतिस्मार्ताग्निमतोविशेषः ॥" ॥

"स्मार्ताग्निमतोदाहकालेपात्रन्यासः ॥ ॥ अथपुत्रादिराप्लुत्यकुर्याद्दारुचयंमहत् । तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसंमुखे । आज्यपूर्णंस्रुवंदद्याद्दक्षिणाग्रांनसिस्रुचम् । पादयोरधरांप्राचीमरणीमुरसीतराम् । पार्श्वयोःशूर्पचमसौसव्यदक्षिणयोःक्रमात् । सुसमेतुन्यसेन्नयुब्जमंतरूर्वोरुलूखलम् । चात्रोविलीढमत्रैवअग्नयेरप्ययंविधिः । अत्रन्युब्जंन्यसेदित्युक्तंतच्छंदोगपरं । पात्रन्यासोक्तेःसाग्नेरुत्तानतैवेतिज्ञेयम् ॥ आहिताग्नौ—शम्यांशिश्नेविनिक्षिप्यअरणीमुष्कयोरपि । जुहूंचदक्षिणेहस्तेवामेतूपभृतंन्यसेत् । शिश्नेतूलूखलंदद्यात्पृष्ठेचमुसलंन्यसेत् । उरसिक्षिप्यदृषदंतंडुलाज्यतिलान्मुखे । श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः । कर्णेनेत्रेमुखेघ्राणेहिरण्यशकलंन्यसेत् । अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत् ॥ आहिताग्नौविशेषः —एवमेवाहिताग्नेश्चपात्रन्यासादिकंभवेत् । कृष्णाजिनादिकंचात्रविशेषोध्वर्युचोदितः । तत्रैव—अनयैवावृतानारीदग्धव्यायाव्यवस्थिता । अग्निप्रदानमंत्रोस्यानप्रयोज्यइतिस्थितिः ॥ इतिप्रेतशरीरेपात्रविन्यासः॥" ॥

अथौर्ध्वदेहिकविधिः ॥ ॥ ततोमध्यदेशोच्छ्रितंसमंतान्निम्नंबहुलौषधिकंश्मशानंकल्पयित्वाकंटकिक्षीरवृक्षादीन्युद्धास्यतत्रभूम्यैकदेशंआग्नेय्यांनैर्ऋत्यांवाप्रकल्प्यतत्रवायवीप्रभृत्याग्नेयीपर्यंतं ऊर्ध्वबाहुनरायामंदीर्घंदक्षिणाप्रवणमाग्नेयीप्रवणंवाईशानीमारभ्यनिर्ऋत्यायतंपंचारत्नितिर्यगायतंद्वादशांगुलमपरिमिताधःखातंगर्तंखानयेत् । ततोदाहगर्तादीशानेजानुमात्रंवितस्तिमात्रंवागर्तंकृत्वाजलमापूर्यतत्रावकांशीपालं(शैवालं)चनिक्षिपेत् इदंगर्तोदकंनाम । अस्मिन्कर्मणिप्राचीनावीतित्वमाग्नेय्यभिमुखतादक्षिणापवर्गत्वंचज्ञेयं । ततःकर्ताहस्तौपादौप्रक्षाल्यआचम्यअमंत्रकंप्राणायामंकृत्वाउत्तरीयंधृत्वादेश

कालौसंकीर्त्य । अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमोक्षार्थंऔर्ध्वदेहिकंकरिष्येइतिसंकल्प्य । प्राचीनावीती । उपसर्पतिसंकुसुकः
पितृमेधास्त्रिष्टुप् । भूमिप्रार्थनेविनियोगः। उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां । ऊर्णम्रदायुवतिर्दक्षिणावतएषा
त्वांपातुनिर्ऋतेरुपस्थात् । अपसर्पंतुतेप्रेतायेकेचिदिहपूर्वजाः । स्वस्तिनःकृणुतामाशुआयातःपुनरागमात् । इतिभूमिंप्रार्थ्य ।
दिविजाताअप्सुजातायाजाताओषधीभ्यः । अथोयाअद्रिजाआपस्तानःशुंधंतुशुंधनीः । इतिस्थलशुद्धिंकृत्वा । अपे तेतियमः
पितरस्त्रिष्टुप् । भूमिप्रोक्षणेवि०। अपेतवीतविचसर्पतातोस्माऽएतंपितरोलोकमक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यव
सानमस्मै । इतिमंत्रेणपूर्वोक्तगर्तोदकेनान्यजलेनवाशमीशाखयात्रिरप्रदक्षिणंपरिव्रजन्खातंप्रोक्षेत् । प्रतिपरिव्रजनंमंत्रावृत्तिः।
आयसेनदर्भशलाकयावायमायदहनपतयेचोल्लिखामिइत्येकांरेखांमध्ये । कालायदहनपतयेचोल्लिखामिइतिउत्तरतः। मृत्यवे
दहनपतयेचोल्लिखामीतिदक्षिणतउल्लिख्य ततःखातेहिरण्यशकलानितिलांश्चप्रक्षिप्य रेखासुतिलोदकंनिक्षिपेदेभिर्मंत्रैः। यमाय
दहनपतयेपितृभ्यःस्वधानमः इतिमध्यरेखायां । कालायदहनपतयेपितृभ्यःस्वधानमः इत्युत्तरस्यां । मृत्यवेदहनपतयेपितृभ्यः
स्वधानमःइतिदक्षिणस्यां । ततःप्रेतास्येतिलान्क्षिप्त्वासजातीयाहृतैर्यज्ञियकाष्ठैःकुशलेनचितिंकारयेत् । ततःकर्तातस्यांबर्हिरा
स्तीर्य तदुपरिऊर्ध्वलोमकृष्णाजिनमास्तीर्य प्रेतमग्नेरुत्तरेणनीत्वादक्षिणशिरसंचितौनिवेशयेत् । ततःप्रेतस्यमुखे नासिकापुटद्व

१ यस्यकपालाग्निर्लौकिकाग्निर्वातस्यतुव्याहृतिभिरग्निप्रतिष्ठाप्यखातोल्लेखनंकुर्यात् ।

येचक्षुर्द्वये श्रोत्रद्वये एवंसप्तछिद्रेषुहिरण्यशकलानिक्षिप्त्वा तदभावेआज्यबिंदून्वानिक्षिप्य प्रेतशरीरेघृताक्तांस्तिलान्प्रक्षिप्य। अग्निंपरिसमुह्यपरिस्तीर्य दक्षिणतोऽग्नेःपर्युक्ष्यवह्नेरुत्तरतःपात्रासादनंपवित्रकरणं प्रोक्षणीं स्रुवं चमसं आज्यभाजनंचेतिएकैक शउत्तानानिपात्राण्यासादयेत् । प्रोक्षणीपात्रेपवित्रंनिधायउदकेनपूरयित्वाउत्पूयसर्वाणिपात्राणिप्रोक्षेत्। ततोगर्तोदकंचम सेआसिच्यदर्भैराच्छाद्यप्रणयेत् । इममग्नइतिदमनोग्निस्त्रिष्टुप् पूर्वस्थापितचमसानुमंत्रणेविनियोगः । इममग्नेचमसंमाविजिं ह्वरःप्रियोदेवानामुतसोम्यानां । एषयश्चमसोदेवपानस्तस्मिन्देवाअमृतामादयंते । इतिचमसानुमंत्रणं ॥ ॥ अथप्रेतोपा सनम् ॥ ॥ सव्यंदेशकालौनिर्दिश्यप्रेतोपासनंकरिष्ये । अग्नेत्वंक्रव्यादनामासिइति, क्रव्यादनामानमग्निंप्रतिष्ठापयामि इतिवाप्रतिष्ठाप्य । समिद्द्वयमादाय अग्निं कामं लोकं अनुमतिं एताःप्रधानदेवताअग्नावाज्येनयक्ष्ये । प्रेतंप्रेतोरसिआज्ये नयक्ष्ये । भूर्भुवःस्वःस्वाहा प्रजापतयइदं० इतिसमिद्द्वयंजुहुयात् । परिसमुह्य चितिसहितमग्निपरिस्तीर्यपर्युक्ष्य पवित्रमा ज्यपात्रेनिधायतस्मिन्नाज्यमासिच्यावज्वल्यतूष्णीमुत्पूय स्रुवंसंमृज्य तूष्णीमग्निमलंकृत्य वामजानुपातयित्वा प्राचीनावी ती पराचीनपाणिःस्रुवेणजुहुयात् ॥ अग्नयेस्वाहा अग्नयइदं० । कामायस्वाहा कामायेदं० । लोकायस्वाहा लोकायेदं० । अनुमतयेस्वाहा अनुमतयइदं० । एवमग्नौचतस्रआज्याहुतीर्हुत्वा पंचमींप्रेतोरसिजुहुयात् । अस्माद्वैत्वमजायथाअयंत्वद भिजायतां । असौ(अमुक)स्वर्गायलोकायस्वाहा । अमुकप्रेतायेदं० । असावित्यत्रसंबुद्ध्याप्रेतनामनिर्दिशेत् । अत्रस्विष्ट

कृतंपात्रसंयोजनंचनास्ति । ततःसक्तुपिंडेनअपूपपंचकंकृत्वा[1]पृषदाज्येनाभिघार्यं । अग्नेर्वर्मेतिदमनोग्निस्त्रिष्टुप् प्रेतस्यललाटे मुखेचसक्तुपिंडदानेवि० । अग्नेर्वर्मपरिगोभिर्व्ययस्वसंप्रोर्णुष्वपीवसामेदसाच । नेत्वाधृष्णुर्हरसाजर्हृषाणोदधृग्विधक्ष्यन्पर्यंखयाते । इतिललाटेमुखेचद्वौपिंडौदत्वा । अतिद्रवेतिमंत्रद्वयस्ययमश्वानौत्रिष्टुप् बाहुद्वयेहृदयेचसक्तुपिंडदानेवि० । अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा । अथापितॄन्त्सुविदत्राँउपेहियमेनयेसधमादंमदंति । यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ । ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माअनमीवंचधेहि । इतिबाहुद्वयेपिंडद्वयंहृदयेएकः पिंडइत्येवंपंचसक्तुपिंडान्दद्यात् । ततोधनिष्ठापंचकत्रिपान्नक्षत्रादौमरणेतद्विधिंकृत्वानंतरंचितिपूरणंकार्यं ॥ ॥ ७ ॥

अथपंचकादिमरणेदाहविधिः ॥ ॥ धनिष्ठापंचकमरणे[2]शवसमीपेदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यधनिष्ठापंचकमरणसूचितवंशारिष्टविनाशार्थंपंचकमरणविधिंकरिष्ये । दर्भाणांप्रतिमाःकार्याःपंचोर्णासूत्रवेष्टिताः । यवपिष्टेनानुलिप्तास्ताभिःसहशवंदहेत् । गंधमाल्याद्यैःप्रतिमाअलंकृत्यदाहसमयेप्रेतोपरिन्यसेत् । प्रथमांशिरसि द्वितीयांनेत्रयोः तृतीयांवामकुक्षौ चतुर्थींनाभौ पंचमींपादयोः इति । ततस्तासु क्रमेणाज्यंजुहुयादेभिर्मंत्रैः। प्रेतवाहायस्वाहा प्रेतवाहायेदं १ ॥ प्रेतसखायस्वाहा प्रेतसखायेदं २ ॥ प्रेतपायस्वाहा प्रेतपायेदं ३ ॥ प्रेतभूमिपायस्वाहा प्रेतभूमिपायेदं ४ ॥ प्रेतहर्त्रेस्वाहा

---

१ दधिमिश्रमाज्यपृषदाज्यम् । २ तत्रायविशेषः ॥ नक्षत्रातरेमृतस्यपंचकेदाहप्राप्तौपुत्तलविधिरेवनशांतिक ॥ पंचकमृतस्यनक्षत्रातरे भिन्यादौदाहप्राप्तौशांतिकमेवनपुत्तलविधिः ॥

प्रेतहर्त्रइदं ५ ॥ ततस्तदुपरिउदकधारांदत्वा । यमायसोमंसुनुतयमायजुहुताहविः । यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः स्वाहा । यमायेदं । त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा । त्र्यंबकायेदं । इतिमंत्राभ्यांप्रतिमासुप्रत्येकंद्वेद्वेआज्याहुतीजुहुयात् । ततःप्रेतमुखेकनकहीरकनीलपद्मरागमौक्तिकेतिपंचरत्नानितदभावे कर्षार्धस्वर्णंतदभावेघृतंदत्वापुत्तलैःसहप्रेतंदहेत् ॥ इतिधनिष्ठापंचकमरणविधिः ॥ ॥ ॥

अथत्रिपादभरणीनक्षत्रत्रिपुष्करद्विपुष्करेषुमृतौ ॥ ॥ यदिभद्रातिथीनांस्याद्भानुभौमशनैश्चरैः । त्रिपादृक्षैश्चसंयोगः कथितःसत्रिपुष्करः । द्विपुष्करोद्वयोर्योगेयथास्वंस्याद्विपादभैः । भद्रातिथयोद्वितीयासप्तमीद्वादश्यः । त्रिपादनक्षत्राणिकृत्तिकापुनर्वसूत्तराविशाखोत्तराषाढापूर्वाभाद्रपदाख्यानि । द्विपुष्करनक्षत्राणिमृगशिरश्चित्राधनिष्ठाख्यानि । त्रिपुष्करयोगे त्रिपादेचमृतौ अद्येत्यादिअमुकत्रिपादनक्षत्रत्रिपुष्करयोगमरणसूचितवंशारिष्टविनाशार्थं कृच्छ्रत्रयप्रायश्चित्तपूर्वकंतद्विधिं करिष्येइतिसंकल्प्य पुत्तलत्रयंनिर्मायसंपूज्य दाहसमये प्रथमांशिरसि १ द्वितीयांनेत्रयोः २ तृतीयांकुक्षौ ३ विन्यस्य । प्रेतवाहायस्वाहा १ प्रेतसखाय० २ प्रेतपाय० ३ इतिनामभिस्तदुपरिपूर्ववद्धृतंहुत्वा यमायसोमं० त्र्यंबकं० इतिमंत्राभ्यां प्रतिमासुद्वेद्वेआहुतीजुहुयात् । वहवपांजातवेदःपितृभ्योयत्रैनान्वेत्थनिहितान्पराके । कुल्याउप्रताःक्षरंतुसत्याएताआशिषःसंतुकामैःस्वाहा । अग्नयेजातवेदसइदं० । इति ॥ ॥ द्विपुष्करेतु—संकल्पेकृच्छ्रत्रयप्रायश्चित्तपूर्वकद्विपुष्करोहः । प्रथ

मांशिरसि १ द्वितीयांनेत्रयोः २ इतिपुत्तलद्वयमेवदत्वासंपूज्य घृतहोमजलधारादिपूर्ववत् । सर्वातेप्रेतमुखेकनकहीरादि पंचरत्नप्रक्षेपः ॥ इतित्रिपादत्रिपुष्करद्विपुष्करादौविधिः ॥ ॥

अथप्रेतानुमंत्रणम् ॥ ॥ क्रव्यादमितिदमनोग्निस्त्रिष्टुप् । अग्निप्रज्वालनेविनियोगः । क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः । इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् । [त्वंभूतकृज्जगद्योनेत्वंलोकपरिपालकः । उक्तः संहारकस्तस्मादेनंस्वर्गंमृतंनय ।] इतिमंत्रेणपुंसःशिरोदेशेस्त्रियाःपाददेशेऽग्निंप्रज्वाल्यवक्ष्यमाणमंत्रैर्वस्त्रपल्लवेनचितौवायुः कार्यः । वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः । त्वचःसुखामांससुखाअस्थिसौख्यावहंतुत्वांमरुतःसुकृतां यत्रलोकाः । इमाआपोमधुमत्योस्मिंस्तेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इमाआपोमधुमत्योंतरिक्षेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इमाआपोमधुमत्यःस्वर्गेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इति ॥ ॥ ततोदह्यमानंप्रेतं तिलप्रक्षेपेणानुमंत्रयीत । प्रेहिप्रेहीतिद्वयोर्यमःपितरस्त्रिष्टुप् । दह्यमानप्रेतानुमंत्रणेविनियोगः । प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरःपरेयुः । उभाराजानास्वधयामदंतायमंपश्यासिवरुणंचदेवं । संगच्छस्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन् । हित्वायावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ ॥ अतिद्रवेतिद्वयोर्यमश्वानौत्रिष्टुप् । दह्यमानप्रेतानु० । अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा । अथापितॄन्त्सुविदत्राँउपेहियमेनयेसधमादंमदंति । यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ । ताभ्यामेनंपरिदेहिराजन्स्वस्तिचास्माअनमीवंचधेहि ॥ ॥ मैनमितिपण्णांदमनोग्नि

त्रिष्टुप् । दह्यमानप्रेतानु० । मैनमग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं । यदाशृतंकृणवोजातवेदोथेमेनंप्रहिणु
तात्पितृभ्यः । शृतंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः । यदागच्छात्यसुनीतिमेतामथादेवानांवशनीर्भवाति ।
सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा । अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः । अजोभागस्तप
सातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः। यास्तेशिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकं। अवसृजपुनरग्नेपितृभ्योयस्तऽआ
हुतश्चरतिस्वधाभिः। आयुर्वसानऽउपवेतुशेषःसंगच्छतांतन्वाजातवेदः । यत्तेकृष्णःशकुनऽआतुतोदपिपीलःसर्पउतवाश्वा
पदः । अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँऽआविवेश ॥ ॥ पूषात्वेतिचतसृणांदेवश्रवाःपूषात्रिष्टुप् । दह्यमान
प्रेतानु० । पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुवनस्यगोपाः । सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः । आयु
र्विश्वायुःपरिपासतित्वापूषात्वापातुप्रपथेपुरस्तात् । यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसविताददधातु । पूषेमाआशाऽअनु
वेदसर्वाःसोऽअस्माँऽअभयतमेननेषत् । स्वस्तिदाआघृणिःसर्ववीरोप्रयच्छन्पुरएतुप्रजानन् । पप्रथेपथामजनिष्टपूषापप्रथे
दिवःप्रपथेपृथिव्याः । उभेअभिप्रियतमेसधस्थआचपराचचरतिप्रजानन् ॥ ॥ उपसर्पेतिचतसृणांसंकुसुकःपितृमेधास्त्रि
ष्टुप् द्वितीयाप्रस्तारपंक्तिः चतुर्थीजगती । दह्यमानप्रेतानु० । उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां । ऊर्णम्रदायु
वतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् । उच्छ्वंचस्वपृथिविमानिवाधथाःसूपायनास्मैभवसूपवंचना । मातापुत्रंयथासि
चाभ्येनंभूमऊर्णुहि । उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां । तेगृहासोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ।

उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोऽअहंरिषं । एतांस्थूणांपितरोधारयंतुतेत्रायमःसादनातेमिनोतु ॥ ॥ सोमए
केभ्यइतिपंचानांयमोभाववृत्तोनुष्टुप् । दह्यमानप्रेतानु० । सोमएकेभ्यःपवतेघृतमेकउपासते । येभ्योमधुप्रधावतितांश्चिदे
वापिगच्छतात् । तपसायेअनाधृष्यास्तपसायेस्वर्ययुः । तपोयेचक्रिरेमहस्तांश्चिदेवापिगच्छतात् । येयुध्यंतेप्रधनेषुशूरासोये
तनूत्यजः । येवासहस्रदक्षिणास्तांश्चिदेवापिगच्छतात् । येचित्पूर्वऋतसापऋतावानऋतावृधः । पितृन्तपस्वतोयमतांश्चिदे
वापिगच्छतात् । सहस्रणीथाःकवयोयेगोपायंतिसूर्यं । ऋषीन्तपस्वतोयमतपोजाँऽअपिगच्छतात् ॥ ॥ उरूणसावित्यस्यय
मश्वानौत्रिष्टुप् । दह्यमानप्रेतानु० । उरूणसावसुतृपाउदुंबलौयमस्यदूतौचरतोजनाँऽअनु । तावस्मभ्यंदृशयेसूर्यायपुनर्दा
तावसुमद्येहभद्रं । एतैर्मंत्रैर्दह्यमानंप्रेतमनुमंत्र्य ॥ ॥ ततःकपालमोक्षानंतरंकर्तासव्येसेमृन्मयोदकुंभंगृहीत्वाश्मशानस्थि
तंनातिस्थूलमस्फुटितंश्लक्ष्णमश्मानमादाय कुंभस्यपृष्ठभागेतेनाश्मनाछिद्रंकृत्वा प्रेतपाददेशादारभ्यतत्पर्यंतमप्रदक्षिणंपरि
व्रजन्जपेत् । वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः । त्वचःसुखामांससुखाअस्थिसौख्यावहंतुत्वांमरुतःसु
कृतांयत्रलोकाः । इमाआपोमधुमत्योस्मिंस्तेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इत्येकवारंपरिक्रम्यपाददेशएवस्थित्वा
तेनैवाश्मनाकुंभेद्वितीयच्छिद्रंकृत्वाव्रजन्जपेत् । वातास्तेवांतु० । इमाआपोमधुमत्योंतरिक्षेतेलोकउपदुह्यंतामक्षीयमाणाः
स्वधानमः । पुनस्तथैवतृतीयच्छिद्रंकृत्वापूर्ववद्व्रजन्जपेत् । वातास्तेवांतु० । इमाआपोमधुमत्यःस्वर्गेतेलोकउपदुह्यंतामक्षी
यमाणाःस्वधानमः । एवंत्रिःपरिक्रम्यप्रेतशिरोदेशेस्त्रियाःपाददेशेअश्मोपरिकुंभंस्फोटयित्वादक्षिणामुखःशिलाहस्तःकर्ता ।

इमेजीवाःसंकुसुकोमृत्युस्त्रिष्टुप् । सव्यमावृत्यगमनेविनि० । इमेजीवाविमृतैरावंवृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य । प्रांचोअगा मनुतयेहसायुद्राघीयआयुःप्रतरंदधानाः । (अयंमंत्रःकर्तुरेव । जयंतमतेसर्वेषां) इतिकर्तृसहिताःपृष्ठतोनवेक्षमाणाःसव्य मावृत्यकनिष्ठपूर्वाःकर्तृपुरःसरंसर्वेनिर्गच्छेयुः ॥ ॥ ॥ ॥ ॥

अथतिलांजलिदानम् ॥ ॥ ततोयत्रोदकंवहत्स्थिरंभवतितत्रगत्वासर्वेसपिंडाःसोदकाःसगोत्रिणःस्त्रियश्चापिमुक्तके शाएकवाससोदक्षिणामुखाःमहाजलेस्नात्वापूर्वपरिहितंवस्त्रंचप्रक्षाल्यपुनस्तत्परिधायसर्वेएकदानिमज्ज्यपुनःकैश्चिदुक्तेनअपन इतिमंत्रेणवामहस्तेनअनामिकयाजलावलोडनंकृत्वा सचैलंस्नात्वाचम्योत्तीर्य येनाश्मनाकुंभच्छिद्राणिकृतानितमश्मानंशुचौ तीरेदक्षिणाग्रेदर्भेस्थापयित्वावृद्धपूर्वादक्षिणामुखाअपसव्येनतस्योपरिसतिलमेकैकंजलांजलिंदक्षिणहस्तपितृतीर्थेनसव्योत्तर पाणिभ्यांयुगपद्युग्मादद्युः ।क्षत्रियवैश्ययोरुदङ्मुखाः । शूद्रब्राह्मणयोर्दक्षिणामुखादद्युः । अमुकंगोत्रअमुकप्रेतएतत्तेतिलो दकमुपतिष्ठतामिति । ब्रह्मचारीतुनदद्यात् । पितृमातृगुर्वाचार्यमातामहमातामहीभ्यःसोपिदद्यात् । शववाहकैश्चांजलिर्दे यः । अन्येसुहृदोदद्युर्नवा । दानेपिनाश्मनियमः । पतितव्रात्यादयोनदद्युः । ततःकर्ताअमुकगोत्रअमुकप्रेतदाहजनिततृपोप शमनार्थइदंतेवासोदकमुपतिष्ठतामितिअश्मनिउत्तरीयोदकंदद्यात् । ततःकर्तृभिन्नाःसर्वेसपिंडादयःशवस्पर्शिनश्चान्यानिवा

१ सिधौतुअमुकगोत्रोमुकनामाप्रेतस्तृप्यतुइत्यूहउक्तः ।

सांसिपरिधायआर्द्राण्यधोदशानिसकृन्निष्पीड्यशोपणार्थमुदग्दशानिनिक्षिप्य दिनदाहेआतारकोदयात् रात्रिदाहेआसूर्योद
यात्तत्रैवासीरन् । शववाहकानामप्येवं ॥ ॥ ततःपूर्वशोपणार्थस्थापितानिवस्त्राणिधारयेयुः । ततःकर्तापिपरिधानीयं
आर्द्रवस्त्रंउत्तीर्यत्रिगुणमधोदशमर्धवन्निष्पीड्यशोपणायउदगग्रंविसृजेत् । ततोदिवामृतौदृष्टेष्वृक्षेपुरात्रिमृतौउदितेसूर्ये वा
लपुरःसराःवृद्धजघन्याः गृहंगत्वाद्वारदेशेनिंबपत्राणिविदश्यथूत्कृत्याचम्य पापाणाग्निगोमयाक्षततैलोदकदूर्वावृपभसर्पपा
न्यथालाभंस्पृष्ट्वादेहल्यश्मनिचरणंदत्वागृहंविशेयुः । शववाहकानामपिनिंबपदशनादिएकाहमाशौचंच । तद्गृहवासिनां
त्र्यहं । तदन्नभुक्तौतद्गृहवासेचदशाहं । निंबपत्रभक्षणंभाजनस्थापनंचकृताकृतमितिस्मृत्यर्थसारे । ततःयष्ट्यादिलंबितयोः
शिक्ययोर्नवेमृन्मयभाजनद्वयेजलंदुग्धंचप्रक्षिप्य प्रेतात्रस्नाहिइदंचपिबेतिवदेत् । अस्मिन्दिनेगृहेपाकोनविधेयः । क्रीतंसु
हृद्भ्योलब्धंवाश्नीयुः । गोत्रजादीनांतद्दिनेतद्गृहएवभोजनं । आमिपलवणपयोमिष्टापूपपायसादिनाश्नीयुः । हविष्यान्नमेव
भुंजीरन् । कर्ताभोजनकालेसघृतमन्नमादाय अमुकप्रेतायेदमन्नमुपतिष्ठतामितिभूमौदत्वागृहोपरिप्रक्षिपेत् भोजनपात्रसमी
पेवादद्यात् । दशाहांतंभोजनस्थानविपर्ययोपिनकार्यः । लेखनहास्यहर्षोच्चासनोत्कृष्टवस्त्रादिधारणतैलाभ्यंगस्त्रीसंगखट्वाश
यनान्यस्पर्शादीनिवर्जयेयुः । रात्रौपृथगेवतृणास्तृतभूमौशयीरन् । महागुरुनिपातेपुत्र्यहमेकाहंचोपवासः । पारणाचक्रीते
नसुहृद्भ्योलब्धेनवा । पत्न्याश्चैवं । बालवृद्धातुराणांनैतेनियमाः ॥ ॥ ॥ ॥

“प्रेतकृत्येविशेपनिर्णयः ॥ ॥ प्रथमेहनियद्देयंतद्देयंस्याद्दशाहिकम् । तथा—उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।
पूर्वदत्तांजलीन्दद्यात्पिंडदानंतथैवच । प्रथमेऽहनियोदेशोयश्चकर्तायच्चतंडुलादिद्रव्यंयच्चोत्तरीयशिलापाकपात्रादितदेवद
शाहांतम् । एतदन्यतमव्यत्ययेयतोव्यत्ययस्ततःपुनरावृत्तिः । शिलाविपर्ययेपिघटस्फोटादेर्नावृत्तिरित्युक्तेलौकिकशिला
ग्रहणम् । तेनपिंडदानतिलांजल्यादिकस्यैवावृत्तिर्नदाहस्य । केचिदाचार्यविपर्ययेप्यावृत्तिमाहुः ॥ ॥ अथप्रेतश्राद्धेव
ल्मुकोल्लेखनादिकं । तृप्तिप्रश्नंचविकिरंशेपप्रश्नस्तथैवच । प्रदक्षिणाविसर्गश्चसीमांतगमनंतथा । अष्टादशपदार्थाश्चप्रेतश्राद्धे
विवर्जयेत् । इति । तथा । प्रेतश्राद्धेतुयत्पात्रमर्घ्यार्थंपरिकल्प्यते । तस्यैवोत्तानताप्रोक्ताशेषेषुन्युब्जतामता ॥ इति ” ॥

अथप्रथमदिनविधिः ॥ ॥ कर्ताआर्द्रवस्त्रःतस्मिन्दिनेतत्कालएव अन्यदिनेषुवा पूर्वाह्णएवप्रागुदीच्यांग्रामाद्बहिः
सरित्संगमेमहाजलसन्निधौवागत्वाभूमिंसंशोध्यतत्रदशाहांतंकर्मकुर्यात् । स्नात्वाआर्द्रेनवीनेवाससीधृत्वा आचम्यदेशका
लौस्मृत्वा सोत्तरीयः प्राचीनावीतीदक्षिणामुखः अमुकगोत्रस्यामुकप्रेतस्य ( मात्रादौतु अमुकगोत्रायाअमुकःप्रेतायाः )
प्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंप्रथमदिनविधिंकरिष्यइतिसंकल्प्य ताम्रादिमयंनवंभांडंसंशोध्यतस्मिन्पिंडार्थसक्तुप्रक्षा
लितान्प्रसृतिपरिमितांस्तंडुलान्सोदकान्निधायतत्पात्रंलौकिकाग्नावधिश्रित्यस्वयंचरुंश्रपयित्वा मृत्तिकास्नानादिकुर्यात् ।
देशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंप्रथमेहनिदाहजनिततापोपशमनार्थं

मृत्तिकास्नानादिकरिष्येइतिसंकल्प्य । उदुत्यंजातवेदसंदेववंहंतिकेतवः । दृशेविश्वायसूर्यं । इतिशुद्धमृदमादाय । आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् । इतिसूर्यायदर्शयित्वा । सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं । इतिशिरसिविलिप्य । अंगादंगाल्लोम्नोलोम्नो जातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । इतिसर्वांगेलिंपेत् । स्नात्वाआचम्यएवंपुनर्द्विवारंकार्यं । ततः आचम्यअद्येत्यादिप्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यदाहजनिततृपोपशमनार्थंतिलतोयांजलिदानंकरिष्यइतिसंकल्प्य । कुशोपर्यश्मानंस्थापयित्वातदुपरिअमुकगोत्रामुकप्रेत दाहजनिततृपोपशमनार्थंएपतिलतोयांजलिस्तवोपतिष्ठतांइतिदक्षिणामुखोदद्यात् । तिलांजलिसंख्या । प्रतिदिनंएकैकइतिदश । प्रतिदिनंत्रयस्त्रयइतित्रिंशत् । प्रतिदिनंएकैकवृद्धिरितिपंचपंचाशत् । द्वयोत्तरवृद्ध्यावादद्यात् प्रत्यहंदशदशवेत्येवंशतंभवंति । प्रत्यंजलिस्नानंकार्यं । एपांपक्षाणांमध्येऽन्यतमपक्षाश्रयणेन तिलांजलयोदेयाः । ततःस्नात्वाआचम्य तिलसर्पिर्मधुशर्करापयोमिश्रितंभक्तपिंडंकृत्वादक्षिणामुखःप्राचीनावीतीदद्यात् । अमुकगोत्रअमुकप्रेतआद्येहनिशिरोवयवनिष्पत्त्यर्थंएपपिंडस्तवोपतिष्ठतामितिकुशोपरिमहांतंपिंडंदत्वापुनःअमुकगोत्रामुकप्रेतएतत्तेतिलोदकमुपतिष्ठतामितिपिंडोपरिपितृतीर्थेनतिलोदकंप्रक्षिप्य पुनरमुकेत्यादिउपतिष्ठतामित्यंतेनतुलसीदलंभृंगराजपत्रंधूपदीपादिचदत्वा । अनादिनिधनोदेवःशंखचक्रगदाधरः । अक्षय्यःपुंडरीकाक्षःप्रेतमोक्षप्रदोस्तुवै । अभिरम्यतांइति

पठेत् । अभिरतास्मःइतिप्रतिवचनमाचार्यः । इदंपिंडदानंसतिलोदकंप्रेताप्यायनमस्त्वितिब्रूयात् । अस्तुप्रेताप्यायनमिति आचार्योवदेत् । ततःपिंडंजलेप्रवाह्यस्नात्वाआचामेत् ॥ इतिप्रथमदिनेवयवपिंडदानविधिः ॥ ॥

अथनवश्राद्धम् ॥ ॥ प्रथमेह्नितृतीयेचपंचमेसप्तमेतथा । नवमैकादशेचैवतन्नवश्राद्धमुच्यते । नवश्राद्धेषुमंत्राभावः । आचम्यप्राणानायम्यदेशकालौस्मृत्वाअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमोक्षार्थंआद्येहनिनवश्राद्धंकरिष्येइतिसंकल्प्य प्राचीनावीतीदक्षिणाभिमुखःआत्मनोऽग्रेदर्भवटुंउदङ्मुखंसंस्थाप्य अमुकगोत्रामुकप्रेतनवश्राद्धेअयंतेक्षणउपतिष्ठतामितिएकंकुशं दत्वा अमुकगोत्रामुकप्रेतनवश्राद्धेइदंतेपाद्यमुपतिष्ठतामितिपाद्यंदत्वा अमुकगोत्रस्यामुकप्रेतस्यनवश्राद्धेआसनमुपतिष्ठतामितिदर्भवटुवामभागेएकंसतिलंकुशंदत्वास्वाग्रेदक्षिणाग्रमेकंकुशंनिधाय तत्रैकमुत्तानंपात्रमासाद्यतदुपरिपवित्रंनिधायतूष्णींजलमासिच्यतूष्णीमेवतिलान्प्रक्षिप्यतूष्णीमर्घ्यंनिवेद्य अमुकगोत्रामुकप्रेतनवश्राद्धेइदमर्घ्यंतवोपतिष्ठतामितिअर्घ्यंदत्वा अमुकगोत्रामुकप्रेतआच्छादनमुपतिष्ठतामित्याच्छादनदर्भंदद्यात् । नात्रगंधादिदानं । ततोघृताक्तमन्नंसक्तुवादाय अमुकगोत्रायामुकप्रेतायस्वाहेत्येकामाहुतिंदर्भवटुपाणौजुहुयात् । इदमग्नौकरणंकेचिन्नेच्छंति । ततःसोपस्करमामंकुशवटोरग्रेनिधाय विष्णोआमंरक्षस्वेतिस्पृष्ट्वातूष्णींपात्रमालभ्य । अमुकगोत्रायामुकप्रेतायनवश्राद्धेदास्यमानमामंयथाशक्तिसोपस्करंसोदकुंभंसदक्षिणंतन्निष्क्रयंवोपतिष्ठतामितितिलोदकंदद्यात् । ततःपिंडदानार्थमेकंकुशंनिधायाभ्युक्ष्य अमुकगोत्रायामुकप्रेतायाद्येहनिनवश्राद्धेऽयंसक्तुपिंडउपतिष्ठतामितिपिंडंदत्वा तदुपरितिलोदकमुपतिष्ठतामितिदत्वानुमंत्र्यशक्त्याप्राणंनिरुध्यपुनर

नुमंत्र्यशेषमाघ्रायअमुकगोत्रेत्यादिउपतिष्ठतामित्यंतेन अभ्यंजनाजनेकशिपूपबर्हणेदशांभृंगराजपत्रादिचनिवेद्योपस्थाय अमु
कगोत्रायामुकप्रेतायनवश्राद्धेदक्षिणोपतिष्ठतामितिदक्षिणांदत्वातूष्णींविकिरंदत्वा अनादिनिधनइतिश्लोकंपठित्वा अभिर
म्यतामित्युक्तेअभिरतास्मइतिप्रत्युक्तेपिंडंप्रवाह्यस्नायात् ॥ इतिनवश्राद्धम् ॥ ॥ ॥ ॥

अथनग्नप्रच्छादनश्राद्धम् ॥ ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वा प्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्व
निवृत्तिकामःप्रथमदिनविहितंनग्नप्रच्छादनश्राद्धंकरिष्यइतिसंकल्प्य उदङ्मुखंदर्भवटुमुपवेश्यअमुकगोत्रामुकप्रेतनग्नप्र० अयं
तेक्षणउपतिष्ठतां । एवंअमुकेत्यादिपाद्यं० । अमुकगोत्रस्यामुकप्रेतस्यनग्नप्र० आसनमुप० । एकपवित्रकोक्तवदर्घ्यपात्रेजलमा
सिच्यानुमंत्र्य । तिलोसिप्रेतदेवत्योगोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तःप्रेतेमाँल्लोकान्प्रीणयाहिनःइतिमंत्रेणतूष्णींवातिलान्प्र
क्षिप्यतूष्णींनिवेद्य अमुकगोत्रामुकप्रेतनग्न० इदमर्घ्यंतवोपतिष्ठतां । अमुकेत्यादि इदमाच्छादनंतवोपतिष्ठता । अमुकगोत्रा
यामुकप्रेतायस्वाहेतिदर्भवटौहुत्वा अमुकगोत्रायामुकप्रेतायदास्यमानमामंयथाशक्तिसोपस्करंसघृतंसोदकुंभंसवस्त्रंयथाश
क्तिकास्यपात्रसुवर्णरजतलोहतैलदक्षिणोपेतंसोपानत्कंसोदपात्रमुपतिष्ठताम् । ततःपिंडदानार्थमेकंकुशंनिधायाभ्युक्ष्य शुंधं
ताप्रेताइत्युदकंनिनीयामुकगोत्रायामुकप्रेतायनग्नप्रच्छादनश्राद्धेअयंसक्तुपिंडउपतिष्ठतां पिंडोपरितिलोदकमुपतिष्ठता । ततो
नुमंत्रणादिकशिपूपबर्हणदशादानांतंसर्वंनवश्राद्धवत्तूष्णींकृत्वा । अमुकेत्यादिप्रेतनग्नप्र० तुलसीदलंभृंगराजंचोपतिष्ठतामिति
दत्वोपस्थाय अमुकगोत्रायामुकप्रेतायनग्नप्रच्छादनश्राद्धेदक्षिणोपतिष्ठतां । अनादिनिधनोदेवइत्यादिस्नानातंपूर्ववत् ॥ इति ॥

[1]अथपाथेयश्राद्धम् ॥ ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वाप्राचीनावीती अमुकगोत्रस्यामुकप्रेतस्यमनुष्यलोकात्प्रे
तलोकगमनार्थंपाथेयश्राद्धंकरिष्येइतिसंकल्प्य अमुकगोत्रामुकप्रेतपाथेयश्राद्धेअयंतेक्षणउपतिष्ठतां । अमुकेत्यादिपाद्यं० ।
अमुकगोत्रस्यामुकप्रेतस्यपाथेयश्राद्धेआसनं० । एकपवित्रार्घ्यपात्रेजलमासिच्यानुमंत्र्य तिलोसीत्यूहितमंत्रेणतूष्णींवातिला
न्प्रक्षिप्य तूष्णींनिवेद्यअमुकगोत्रामुकप्रेतपाथेय० । अर्घ्यं० । अमुकेत्यादिआच्छादनमुपतिष्ठतां । अमुकगोत्रायामुकप्रेताय
स्वाहेतिपाणौहुत्वा अमुकगोत्रायामुकप्रेतायामंतन्निष्क्रयंवायथाशक्तिसोपस्करंसघृतंसोदकुंभंसवस्त्रंयथाशक्तिकांस्यसुवर्णर
जतलोहतैलदक्षिणोपेतंसोपानत्कंसोदपात्रमुपतिष्ठतामितितिलोदकंक्षिपेदिति । ततःपिंडदानार्थमेकंकुशंनिधायाभ्युक्ष्यशुंधं
तांप्रेताइत्युदकंनिनीयअमुकगोत्रायामुकप्रेतायपाथेयश्राद्धेअयंसक्तुपिंडउपतिष्ठतां । अनुमंत्रणादिकशिपूपबर्हणदशादानांतं
सर्वंनवश्राद्धवत्तूष्णींकृत्वाअमुकेत्यादिप्रेत० तुलसीदलंभृंगराजंचउप० इति दत्वोपस्थाय । अमुकगोत्रायामुकप्रेतायपाथेय
श्राद्धेदक्षिणोपतिष्ठतां । अनादिनिधनइत्यादिस्नानांतंपूर्ववत् ॥ इतिपाथेयश्राद्धं ॥ इतिप्रथमदिनविधिः ॥ ॥

अथास्थिसंचयनम् ॥ ॥ तच्चआशौचमध्येतुप्रथमेद्वितीयेतृतीयेचतुर्थेसप्तमेनवमेवादिनेकार्यम् । कृष्णपक्षेदशम्या
ऊर्ध्वमयुग्मतिथिष्वेकादश्यांत्रयोदश्यांपंचदश्यांवाकृष्णपक्षांतेसपिंडीकरणात्पूर्वंस्मृत्युक्तेकालेफल्गुनीद्वयाषाढाद्वयप्रोष्ठप
दाद्वयत्रिजन्मपुष्यहस्तनक्षत्रेपुन । ननंदातिथौ । अंगारकार्कमंदवारेपुन । अस्पृश्यश्वसूकरशूद्रादिस्पर्शेपंचगव्येनशालग्राम

[1] अस्थिसंचयनानतरपाथेयश्राद्धंकार्यमितिस्मृत्यर्थसारे । शिष्टास्त्विहैवकुर्वंति ।

तुलस्युदकेनप्रोक्षणंकुर्यात् ॥ दाहदेशंगत्वाआचम्यतूर्ष्णींप्राणानायम्यदेशकालौस्मृत्वाप्राचीनावीती अमकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थंअस्थिसंचयनंकरिष्यइतिसंकल्प्य शमीशाखयाक्षीरमिश्रोदकेनाप्रदक्षिणंत्रिःपरिव्रजन्चितिदेशंप्रोक्षेत् । शीतिकेइतिदमनोग्निस्त्रिष्टुप् । चितिप्रोक्षणेवि० । शीतिकेशीतिकावतिह्लादिकेह्लादिकावति । मंडूक्याउसुसंगमइमंस्वग्निंहर्षय । इतिमंत्रेणपादादारभ्यसर्वांचितिंप्रोक्षेत् । प्रतिप्रोक्षणंमंत्रावृत्तिः । ततोवृद्धाविपमाःकर्तृसहिताअंगुष्ठोपकनिष्ठिकाभ्यांएकैकमस्थिपादप्रभृतिशिरःपर्यंतंगृहीत्वा यथाशब्दोनभवतितथाकुंभेनिदध्युः । स्त्रियाःकुंभ्यां । स्तनरहितःकुंभः । सस्तनाकुंभी । अन्यद्भस्मशूर्पेणसंशोध्यसूक्ष्माण्यस्थीन्यपिकुंभेनिधायभस्मगंगायांक्षिपेत् । ततोयत्रवर्षाकालादन्यकालेजलंनागच्छेत्तादृशेशुचिप्रदेशेगर्तंकृत्वा । उपसर्पेतिसंकुसुकःपृथिवीमृत्युःपितरोवात्रिष्टुप् । गर्तेस्थिकुंभनिक्षेपणेविनि० । उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां । ऊर्णम्रदायुवतिर्दक्षिणावतएपात्वापातुनिर्ऋतेरुपस्थात् । इतिमंत्रेणकर्तागर्तेघटंनिदध्यात् । उच्छ्वंचस्वेतिसंकुसुकोमृत्युःपितरःपृथ्वीवाप्रस्तारपंक्तिः । गर्तेपांसुक्षेपणेवि० । उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवंचना । मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि । अनेनघटस्यसमंतात्खातेमृदंक्षिपेत् । उच्छ्वंचमानेतिसंकुसुकःपृथ्वीमृत्युःपितरोवाजगती । अस्थिकुंभसमीपेजपेवि० । उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां । तेगृहासोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र । इतिमंत्रमंजलिंबद्धाजपेत् । उत्तेस्तभ्नामीतिसंकुसुकःपृथ्वीपितरोमृत्युर्वात्रिष्टुप् । कपालेनघटस्यपिधानेवि० । उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोअहंरिषं । एतांस्थूणांपितरोधारयंतुतेत्वायमःसादं

नातेमिनोतु । इतिनवखर्परेणघटंपिदध्यात् । ततोयथाकुंभोनदृश्यतेतथामृदंनिधायपश्चादनवेक्ष्यमाणोन्यत्रगत्वास्नायात् ॥

अथास्थिसंचयनश्राद्धम् ॥ ॥ ततोगोमयेनस्मशानदेशमुपलिप्य तत्रदक्षिणाग्रांत्रिकोणांवेदिंकृत्वा हरिद्रादिनालंकृत्य तत्रोदकपूर्णकुंभंचतुष्टयंनिधाय तदुपरिमहांतंभक्तपिंडान्संस्थाप्य देशकालौसंकीर्त्यप्राचीनावीती अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थंवेदिकाराधनंकरिष्ये । तूष्णींतिलोदकंकृत्वा । अमुकगोत्रायामुकप्रेतायभोजनार्थमयंपिंडःपानार्थंचोदकुंभोदकमुपतिष्ठतामितिसकुशंतिलोदकंक्षिप्त्वा १ । तत्पश्चिमभागे स्मशानवासिनेरुद्रायायंपिंडःपानार्थंचोदकुंभउपतिष्ठतामिति कुंभोपरिपिंडांतरं २ । ततःतदुत्तरतः स्मशानवासिभ्यःप्रेतेभ्योयंपिंडःपानार्थंचोदकुंभउपतिष्ठतामितिकुंभोपरिपिंडांतरं ३ । मध्यात्पूर्वतोदक्षिणतोवाप्रेतसख्येयंपिंडःपानार्थंचोदकुंभउपतिष्ठतामितिकुंभोपरिपिंडांतरं ४ । एवंचतुरःपिंडदान्त्वा पिंडोपरिस्मशानवासिनेरुद्राय स्मशानवासिभ्यःप्रेतेभ्यः प्रेतसखिभ्यश्चक्रमेण इदंतिलोदकमुपतिष्ठतामितिप्रत्येकंदत्वा यवपिष्टेनपोलिकात्रयं पादुकाषट्कं छत्रत्रयंचसंपाद्य तन्मध्येएकांपोलिकांपादुकाद्वयंएकंछत्रंचकालायदहनपतयेइदमुपतिष्ठतां पोलिकांपादुकाद्वयंछत्रंचमृत्यवेदहनपतयेइदमुपतिष्ठतां पोलिकांपादुकाद्वयंछत्रंचयमायदहनपतयेइदमुपतिष्ठतामिति प्रत्येकंक्रमेणदद्यात् । ततो यमश्वभ्यामुपतिष्ठतामितिपोलिकांपादुकांछत्रंचदत्वास्नायात् । ततोदेशकालौसंकीर्त्य अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमोक्षार्थंअस्थिसंचयनश्राद्धंकरिष्ये । प्राचीनावीतीतूष्णींतिलोदकंकृत्वामंडलंकृत्वा तत्रदक्षिणाग्रदर्भशिखायां अमुकगोत्रअमुकप्रेत अस्थिसंचयनश्राद्धेअयंतेक्षणउपतिष्ठतां इतिदर्भवटौक्षणाद्युपचारान्दद्यात् ।

अमुकगोत्रअमुकप्रेतपाद्यमुपतिष्ठतां । अमुकगोत्रस्यामुकप्रेतस्यअस्थिसंचयनश्राद्धेइदमासनमुपतिष्ठतां । ततोभूमौदक्षिणा
ग्रकुशेएकमर्घ्यपात्रमासाद्यतत्रैकंपवित्रंजलंतिलांश्चक्षिप्त्वा अमुकगोत्रअमुकप्रेतअस्थि० इदमर्घ्यंतवोपतिष्ठतां। अमुकेत्यादि
गंधंतुलसीपत्रंभृंगराजपत्रमुपतिष्ठतां । अमु० प्रेत दास्यमानमाच्छादनमुपतिष्ठतां । अमुकगोत्रायामुकप्रेतायसूतकांतेदास्य
मानंआमान्नंतन्निष्क्रयंवा सोदकुंभंसदक्षिणमुपतिष्ठतां । अस्थिसंचयनश्राद्धेपिंडप्रदानंकरिष्ये । अमुकगोत्रायामुकप्रेताय
अस्थि० अयंसक्तुपिंडउपतिष्ठतां । पिंडोपरितिलोदकमुपतिष्ठतां । गंधंतुलसीपत्रंभृंगराजपत्रमुपतिष्ठतां । सूतकांतेदास्य
मानंतांबूलंदक्षिणाचोपतिष्ठतां । तूष्णींसक्तुशेषेणविकिरंदत्वा। अनादिनिधनोदेवःशंखचक्रगदाधरः । अक्षय्यःपुंडरीकाक्षः
प्रेतमोक्षप्रदोस्तुवै । अभिरम्यतां । आचार्यःअभिरतास्मः । पिंडंप्रवाह्यस्नायात् ॥ इत्यस्थिसंचयनश्राद्धम् ॥

॥ अथद्वितीयादिदिनकृत्यम् ॥

॥ ततःपूर्वदिनकृत्यदेशेद्वितीयदिनविधिंकुर्यात् । आचम्यदेशकालौसंकीर्त्यप्राची
नावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंद्वितीयदिनविधिंकरिष्येइतिसंकल्प्य हविःश्रपयित्वा प्रथ
मदिनवत्संकल्पपूर्वकंमृत्तिकास्नानत्रयंविधाय प्रथमदिनपरिगृहीततिलांजलिदानपक्षाश्रयणेनअश्मनिसंकल्पपूर्वकमंजलिदा
नंकृत्वा अमुकगोत्रस्यामुकप्रेतस्यद्वितीयेहनि चक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतां इतिदर्भशिखोपरिपिंडं
दत्वा । तिलोदकभृंगराजतुलसीदलदानादिपूर्ववत् । अनादिनिधनइत्युक्त्वापिंडंप्रवाह्यस्नायात् । एवंसर्वदिनेषु । तृतीय ३
पंचम५ सप्तम७ नवमादि९ दिनेषुतत्तद्दिनोहेनपूर्वोक्तवद्विषमश्राद्धंकुर्यात्॥ तृतीयेहनिभुजवक्षोग्रीवामुखावयवनिष्पत्त्यर्थं ३।

चतुर्थेपार्ष्णिकुक्षिकटिनाभिगुदलिंगावयवनि० ४ । पंचमेऊरुजानुजंघावयवनि० ५ । षष्ठेगुल्फपादागुलिमर्माद्यवयवनि० ६ । सप्तमेअस्थिमज्जाशिरावयवनि० ७ । अष्टमेनखरोमाद्यवयवनि० ८ । नवमेमर्मवीर्यादिसर्वावयवनि० ९ । तुलसीभृंगराजदानादिकृत्वाअनादिश्लोकपाठपिंडप्रवाहणस्नानांतपूर्ववत् ॥ इतिनित्यविधिः ॥ ॥ ॥

अथदशमदिनकृत्यम् ॥ ॥ अद्येत्यादिसंकल्प्य अमुकगोत्रस्यामुकप्रेतस्यक्षुत्पिपासानिवृत्त्यर्थं अयंपिंडउपतिष्ठतांइति पिंडदानं तिलोदकभृंगराजादिपिंडप्रवाहणांतंप्राग्वत् ॥ ॥ ततोमृदात्रिकोणांवेदिंकृत्वागोमयेनोपलिप्यहरिद्रादिनालंकृत्यतत्रकुंभपंचकंजलपूर्णंस्थापयेत् तदुपरिओदनपिंडांश्च । अद्येत्यादि० वेदिकोपरिसोदकुंभचरुपिंडप्रदानंकरिष्ये । अपसव्यं । मध्येअमुकगोत्रायअमुकप्रेतायक्षुत्पिपासानिवृत्त्यर्थंअयंपिंडः सोदकुंभउपतिष्ठतां १ । ततःपूर्वे प्रेतसखिभ्यःअयंपिंडःसोदकुंभउपतिष्ठतां २ । दक्षिणेवैवस्वतायसयमायअयंपिंडःसोदकुंभउपतिष्ठतां ३ । पश्चिमेवायसेभ्यःअयंपिंडःसोदकुंभउपतिष्ठतां ४ । उत्तरेप्रेताधिपतयेरुद्रायअयंपिंडःसोदकुंभउपतिष्ठतां ५ । पिंडोपरितिलोदकंदत्वा पादुकाद्वयपोलिकाछत्रपताकादिप्रत्येकंतेभ्यस्तेभ्यउपतिष्ठतां इतिदद्यात् । ततःपश्चिमदेशस्थंपिंडंवायसोयावद्भक्षयतितावत्तिष्ठेत् । ततोश्मानंतिलतैलेनाभ्यज्यजलेक्षिपेत् । तत्रमंत्रः । इहलोकंपरित्यज्यगतोसिपरमांगतिम् । गतोसिदिव्यदेहेनकुशेत्वाहंनियोजये । इति । ततःकर्त्राप्रार्थिताःसर्वेबांधवाःसंबंधिनश्चत्रींस्त्रीन्धर्मोदकांजलीनेकैकंवाजलतीरेप्रेतोद्देशेनदद्युः । ततःपुत्रादीनांयथाचारंवाससांत्यागःकेशश्मश्रुवपननखच्छेदादिच । ततःसर्वेसगोत्राःपुरंध्र्यश्चयथादेशाचारंगौरसर्षपकल्केनतिलामलककल्केनवाभ्यक्ताः

एककालेजलेसशिरस्कंस्नात्वाचम्यवाग्यताःवृषभंगांसुवर्णंचस्पृष्ट्वाशुक्लवाससोगृहंगत्वासर्वेतत्रैवभुंजीरन् ॥ इतिदशाहकृत्यं ॥

“अथतीर्थेस्थिक्षेपपूर्वांगविधिः ॥

॥ गंगातोयेषुयस्यास्थिक्षिप्यतेशुभकर्मणः। नतस्यपुनरावृत्तिर्ब्रह्मलोकात्सनात
नात्। दशाहांतरस्थिक्षेपेनास्तादिविचारः। दशाहोत्तरंतु—अस्तंगतेगुरौशुक्रेतथामासेमलिम्लुचे। गंगायामस्थिनिक्षेपंन
कुर्यादितिगौतमः। यत्रास्थीनिनिखातानिसंतितांभूमिंसचैलस्नानपूर्वकंपृथक्गोमूत्रादिभिःप्रोक्षेत्। देशकालनिर्देशां
तेऽस्मत्पित्रादेरमुकशर्मणोमुकगोत्रस्यतीर्थेस्थिक्षेपार्थमस्थ्युद्धरणंकरिष्ये। पृथग्गोमूत्रादिभिर्गायत्र्यादिमंत्रैस्तांभूमिंप्रोक्ष्य गा
यत्र्यागोमूत्रेण। गंधद्वारामितिगोमयेन। आप्यायस्वेतिक्षीरेण। दधिक्राव्णइतिदध्ना। घृतंमिमिक्षइतिघृतेनप्रोक्ष्य।
उपसर्पेतिचतसृणांशंखःपितरस्त्रिष्टुप् क्रमेणभूप्रार्थनखननमृदुद्धरणास्थिग्रहणेषुविनियोगः। उपसर्पमातरं० इतिभूमिंप्रार्थ्य।
उच्छ्वंचस्वपृथिवि्मा० इतिभूमिंखनित्वा। उच्छ्वंचमानापृथिवी० इतिमृदमुद्धृत्य। उत्तेस्तभ्नामि० इत्यस्थीनिगृहीत्वा
स्वयंजलाशयेगृह्योक्तविधिनामार्जनतर्पणाघमर्षणादियुजास्नात्वा अस्थीनिस्पृष्ट्वैवदशस्नानानिकुर्यात्। तत्रगायत्र्यादिपंचमं
त्रैर्गोमूत्रगोमयक्षीरदधिसर्पिःस्नानानिकृत्वा देवस्यत्वेतिकुशोदकेन मानस्तोकइतिभस्मना अश्वक्रांतेरथक्रांतइतिमृदा मधु
वाताइतिमधुना आपोहिष्ठेतिशुद्धोदकेनस्नायात्। एवंदशस्नानांतेस्थ्नांकुशैर्मार्जनंकुर्यात्। तत्रमंत्राः। अतोदेवाइत्यृक् १
अथसप्तसूक्तानि। एतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चीइंद्रोनुष्टुप् ३ शुचीवोहव्येतिमैत्रावरुणिर्वसिष्ठोमरुतस्त्रिष्टुप् ३
नतमंहइत्यष्टर्चस्यांहोमुग्विश्वेदेवाबृहतीअंत्यात्रिष्टुप् ७ इतिवाइतित्रयोदशर्चस्यलवइंद्रोगायत्री १३ स्वादिष्ठयेतिदशर्चस्य

सूक्तस्यमधुच्छंदाःपवमानःसोमोगायत्री १० ममाग्नइतिदशर्चस्यविहव्योविश्वेदेवास्त्रिष्टुवंत्याजगती १० कद्रुद्रायेतिनवर्चस्यघौरःकण्वोरुद्रोगायत्री ९ एतैःप्रतिमंत्रंमार्जयित्वाततोयदीयान्यस्थीनितस्यकृतसपिंडीकरणस्यपार्वणविधिनास्थिक्षेपांगभूतंश्राद्धंहिरण्येनकुर्यात्। दशाहांतरस्थिक्षेपकरणेएकोद्दिष्टविधिनाश्राद्धं। देशकालसंवंधनामगोत्रादिस्मृत्वापुरूरवार्द्रवसं० नां। प्राचीनावीतीअस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणां गंगायांकरिष्यमाणास्थिक्षेपांगभूतंश्राद्धंहिरण्येनकरिष्ये। तिलोदकं०। पुरूरवार्द्रवविश्वेदेवार्थेत्वयाक्षणःकरणीयइतिदैवे पित्राद्यर्थेइतिपित्र्येक्षणंदत्वा एवमुभयत्रासनादिआच्छादनांतंपूजांकृत्वाग्नौकरणं। यथाशक्तिहिरण्यंपात्रेनिधाय देवेभ्यःपितृभ्यश्चत्यक्त्वा तृप्तिप्रश्नवर्जंसंपन्नवचनांतंकृत्वा सक्तुभिःपिंडदानं। ततःअपहतेत्यादिवासोदानांतेनमोवःपितरइत्यत्रइषेपदस्थानेहेमद्रव्यायेत्यूहः। सक्तुनाविकिरदानंपाथेयश्राद्धवत्। आमस्थानेहिरण्यप्रोक्षणं। ततःश्राद्धसमाप्त्यंतंप्रकृतिवत्। स्मृत्युक्तसंकल्पेतुउशंतस्त्वेत्यादिमंत्रेष्वपियथायथमूहोवोध्यः। एवंश्राद्धंसमाप्यतिलतर्पणंकृत्वा पुनःपंचगव्यपंचामृतशुद्धोदकैरस्थीनिप्रक्षाल्यवक्ष्यमाणपदार्थैरस्थीनिवेष्टयेत्। यक्षकर्दमेनानुलिप्य (द्वादशकर्षचंदनं कुंकुमंषट्कर्पाः कर्पूरश्चतुःकर्षः कस्तूरीचएतेषांमेलनाद्यक्षकर्दमः) पुष्पैःप्रपूज्य हेममौक्तिकरौप्यप्रवालनीलमणीनस्थिपुप्रक्षिप्य अजिनकंवलदर्भभूर्जपत्रशाणगोकेशताडपत्रैःक्रमेणसप्तधावेष्टयताम्रसंपुटेस्थापयेत्। ततःस्वसूत्रोक्तविधिनास्थंडिलेग्निंप्रतिष्ठाप्याष्टोत्तरंतिलाज्याहुतीःपृथक्जुहुयात्। उदीरतामितिचतुर्दशर्चस्यशंखःपितरस्त्रिष्टुवेकादशीजगतीअस्थिप्रक्षेपांगतिलाज्यहोमेवि०एतत्सूक्तस्यसप्तावृत्तिभिः ९८ अवशिष्टादशाहुत्यःप्रथमऋगा

हुत्वास्विष्टकृदादिहोमशेषंसमाप्यास्थीनिगृहीत्वाचांडालपतितव्रात्यादिस्पर्शमकृत्वैवशुचिस्ती
वृत्त्याइत्येवमष्टोत्तरशतं १०८ हुत्वास्विष्टकृदादिहोमशेषंसमाप्यास्थीनिगृहीत्वाचांडालपतितव्रात्यादिविधाय
र्थंगच्छेत्। तत्रनियमाः। मूत्रपुरीषशौचाचमनकालेस्थीन्यन्यत्रस्थापयेत्। ततस्तीर्थंप्राप्यतीर्थप्राप्तिनिमित्तकंस्नानादिविधाय
अस्थीनिस्थापयित्वा अमुकगोत्रस्यामुकशर्मणोब्रह्मलोकादिप्राप्तयेमुकतीर्थेस्थिप्रक्षेपमहंकरिष्येइतिसंकल्प्य पलाशपर्णपुटेपं
चगव्येनास्थीन्यासिच्यहिरण्यशकलमाल्यघृततिलमिश्रितास्थीनिमृत्पिंडेनिधायदक्षिणांदिशमवेक्षमाणोनमोस्तुधर्माय इति
वदंस्तीर्थेप्रविश्यनाभिमात्रजलेस्थित्वा समेप्रीतोस्त्वित्युक्त्वातीर्थेक्षिपेत् । ततःस्नात्वाजलाद्बहिरागत्यसूर्यंदृष्ट्वाहरिंस्मृत्वा
विप्रायथाशक्तिदक्षिणांदद्यात्। अमुकस्यास्थिक्षेपःकृतस्तत्सांगतार्थंरजतमिदंसंप्रददेनमम। इति। अकृतेसपिंडनेएकोद्दिष्ट
श्राद्धंकुर्यात्। शेषप्रयोगःपूर्ववत्। (एतदशक्तौनिर्दिष्टप्रयोगांतर्गतहिरण्यश्राद्धहोमौवर्जयित्वान्यत्सर्वंयथावत्कुर्यादितिशौ
नकाशयः)। इत्यस्थ्युद्धरणविधिस्तीर्थेस्थ्नांप्रक्षेपविधिश्च ॥" ॥ ॥ ॥
अथैकादशाहकृत्यम् ॥ ॥ तत्रप्रातरुत्थायगृहानुलेपनंकृत्वास्पृष्टानांमृद्भांडानांत्यागः सर्वेषांसपिंडानांसचैलंस्नानं त
त्रस्पृष्टवस्त्रादीनांप्रक्षालनं तच्चमाधवप्रायश्चित्तग्रंथेचश्वपाकमपिशोधयेदितिब्रह्मकूर्चहोमस्यात्यंतंपापदाहकत्वश्रवणात्कर्त्रा
स्वस्याशौचजन्यसकलदोषनिवृत्त्यैब्रह्मकूर्चहोमंकृत्वापंचगव्यप्राशनंकार्यं। अथवा पंचगव्यप्राशनमात्रेणापिपापक्षयश्रवणा
त्तत्कालंकेवलंपंचगव्यंसंपाद्यप्राशयेन्नहोमस्यैवावश्यकत्वं ब्रह्मकूर्चहोमस्यद्विदिनसाध्यत्वेनेदानीमसंभवात्॥ कर्ताचम्यप्रा
णानायम्यदेशकालौस्मृत्वाममाशौचजन्याशुचित्वनिवृत्तिपूर्वकशरीरशुद्ध्यर्थंपंचगव्यप्राशनमहंकरिष्यइतिसंकल्प्य ताम्रे

पालाशेवापात्रेताम्रायागोमूत्रमष्टमापप्रमाणंतत्सवितुरितिगायत्र्यादाय गंधद्वारामितिश्वेतगोःशकृत्पोडशमापमादाय आ प्यायस्वेतिपीतगोःक्षीरंद्वादशमापं दधिक्राव्णइतिनीलगोर्दधिदशमापं शुक्रमसिज्योतिरसितेजोसिइतिकृष्णगोघृतमष्टमाप मादाय तत्रदेवस्यत्वेतिकुशोदकंचतुर्मापंप्रक्षिप्यप्रणवेनैवयज्ञियकाष्ठेनालोड्यप्रणवेनाभिमंत्र्यप्रणवेनपिवेत् । कर्तृभिन्नाः सर्वेपियथाचारंपिवेयुराचमेयुश्च । एवंपंचगव्यप्राशनेनशरीरशुद्धिंसंपाद्यवृषोत्सर्गादिकंकर्मकुर्यात् । क्वचित्पंचकत्रिपादन क्षत्रत्रिपुष्करद्विपुष्करादिसंभावनायां सूतकांतेततःपुत्रःकुर्याच्छांतिकमंततइतिवचनेअंततःशब्दात्पुत्रेणसूतकनिवृत्तिस्ना नोत्तरंप्रातर्वृषोत्सर्गमहैकोद्दिष्टश्राद्धात्प्रागेवशांतिःकर्तव्येतिप्रतीयते । अतःपूर्वंशांतिकंततोवृषोत्सर्गादिसंगृहीतं इति ॥

अथधनिष्ठापंचकादिशांतिः ॥ ॥ द्विराचम्यप्राणानायम्यदेशकालावुत्कीर्त्य अमुकगोत्रस्यअमुकशर्मणः धनिष्ठापंच कमरणनिमित्ताधोगतिनिरासपूर्वकंविमुक्त्यर्थं ममवंशस्यसकलारिष्टपरिहारपूर्वकसकलाभ्युदयसिद्ध्यर्थंपंचकशांतिंयमादिच तुर्दशदेवतानांस्थालीपाकविधिनाकरिष्ये तदंगत्वेनाचार्यवरणंकरिष्येइतिसंकल्प्यवृणुयात् । वृताचार्यःसंकल्पपूर्वकंकर्मसं कल्प्य यदत्रसंस्थितमितिभूशुद्ध्यंते। धनिष्ठापंचकशांत्यंगहोमंकर्तुंस्थंडिलादिसकलंकर्म०। वरदनामानमग्निंप्रतिष्ठाप्य चत्वा रिशृंगेत्यादिध्यात्वान्वादध्यात् । समिद्द्वयमादाय क्रियमाणेधनिष्ठापंचकशांतिहोमेदेवतापरिग्रहार्थमित्याद्याज्यभागांतमु क्त्वा अत्रप्रधानं—यमं धर्मराजं मृत्युं अंतकं वैवस्वतं कालं सर्वभूतक्षयं औदुंवरं दध्नं नीलं परमेष्ठिनं वृकोदरं चित्रं

चित्रगुप्तं एताःप्रधानदेवताश्चरुद्रव्येण शेषेणस्विष्टकृतमित्यादि। निर्वापकाले यमायत्वाजुष्टंनिर्वपामीत्यादिचतुर्दशदेवतानां प्रत्येकंचतुरश्चतुरोमुष्टीन्निरुप्य तत्संख्ययाप्रोक्ष्यचरुश्रपणाद्याज्यभागांते उद्धरणपात्रेचरुमुद्धृत्यचतुर्दशधाविभज्यइदंयमाय इदंधर्मराजायइत्यादियथादैवतमभिमृश्य अवदानधर्मेणचरुमवदाय ॐयमायस्वाहा यमायेदं० इतिसर्वत्रयथालिंगंत्यागः। ॐ धर्मराजायस्वाहा। मृत्यवे०। अंतकाय०। वैवस्वताय०। कालाय०। सर्वभूतक्षयाय०। औदुंबराय०। दध्नाय०। नीलाय०। परमेष्ठिने०। वृकोदराय०। चित्राय०। चित्रगुप्ताय०। इतिहुत्वा चतुर्दशदेवताहविर्भागादुत्त रार्धात्सकृत्सकृदवदायद्भिरभिघार्यस्विष्टकृतंहुत्वाहोमशेषंसमापयेत्। प्रायश्चित्तान्यशेषाणि०। कर्ताकृतस्यपंचकशांति कर्मणःसांगतासिद्ध्यर्थआचार्याययथाशक्तिहेमकृष्णगोकृष्णवस्त्रनिष्क्रयद्रव्यंदातुमहमुत्सृज्ये। अमुकगोत्रस्यामुकशर्मणोऽमृ तत्वप्राप्तयेब्राह्मणद्वारायथाशक्तिरुद्रजपं ममसकलवंशस्यापमृत्युनिवारणार्थंमृत्युंजयमंत्रजपं सर्वारिष्टपरिहारार्थंशांतिपाठ जपंचकरिष्ये। कृतस्यकर्मणःसांगतासिद्ध्यर्थंब्राह्मणभोजनंदक्षिणाप्रदानंचकरिष्ये। गच्छगच्छसुरश्रेष्ठ०। अनेनपंचकशां त्याख्येनकर्मणापरमेश्वरःप्रीयतां। इतिपंचकशांतिः। सूतकांतेततःपुत्रःकुर्याच्छांतिकपौष्टिकं। कांस्यपात्रस्थितंतैलंवीक्ष्य दद्याद्द्विजन्मने ॥ इयमेवत्रिपादर्क्षत्रिपुष्करद्विपुष्करादिषुशांतिर्ज्ञेया ॥ इतिपंचकशांतिः ॥ ॥ ॥

अथवृषोत्सर्गः ॥ ॥ एकादशेह्निप्रेतस्ययस्यनोत्सृज्यतेवृषः। प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धशतैरपि। अयंद्वादशाहे प्युक्तः। क्वचिन्मृताहेपि—विषुवद्वितयेचैवमृताहेबांधवस्यचेति। वत्सराभ्यंतरेपित्रोर्वृषस्योत्सर्गइष्यते। इति। अत्रका

म्यवृषोत्सर्गवन्नाचार्यवरणंकिंतुस्वयमेवसर्वंकुर्यात् ॥ अथप्रयोगः ॥ द्विराचम्यपवित्रपाणिःप्राणानायम्यदेशकालौनिर्दिश्य अमुकगोत्रस्यामुकशर्मणःप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्त्यर्थंवृषोत्सर्गंकरिष्ये तदंगंस्थंडिलोलेपनाद्यग्निप्रतिष्ठादिकरिष्यइ तिसंकल्प्य अध्वरनामानमग्निंप्रतिष्ठाप्य चत्वारिशृंगेत्यादिध्यात्वान्वादध्यात् । समिद्द्वयमादायक्रियमाणेवृषोत्सर्गहोमेदेव तापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेऽग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा । अत्रप्रधानं रुद्रंचरुणा सोमंपायसेन इंद्रं यावकेन शेषेणस्विष्टकृतमित्यादि । परिसमूहनपरिस्तरणपर्युक्षणानि । पात्रासादने हविस्त्रयस्थाल्यःप्रोक्षणी दर्वीस्रुवौइ त्यादि । पूर्णपात्रनिधानांतंविधाय निर्वापादिक्रमेणहविस्त्रयंसंपाद्यआज्यसंस्काराद्याज्यभागहोमांतेजुहुयात् । कद्रुद्रायेत्य स्यघौरःकण्वोरुद्रोगायत्री । रौद्रचरुहोमेवि० । ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे । वोचेमशंतमंहृदेस्वाहा । रुद्रायेदं० १ । सोमोधेनुंगौतमःसोमस्त्रिष्टुप् । सौम्यपायसहोमेवि० । ॐ सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति । सादन्यंविद थ्यंसभेयंपितृश्रवणंयोददाशदस्मैस्वाहा । सोमायेदंनमम २ । इंद्रंवोमधुच्छंदाइंद्रोगायत्री । ऐंद्रयावकहोमेवि० । ॐ इंद्रं वोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलःस्वाहा । इंद्रायेदंनमम ३ । एभिर्मंत्रैर्यथाक्रमंहुत्वास्विष्टकृदादिमार्ज नांतंकुर्यात् । ( अत्रकेचिद्रुद्रायस्वाहेत्यादिनानाममंत्रैरेवहोममाहुः ) । ततोद्विहायनमेकहायनंवाजीववत्सायाःपयस्विन्याः पुत्रंनीलादिवर्णंयथालाभंवाआनीय ततश्चतस्रोद्वेएकांवाएकवर्षाधिकावत्सतरीमानीय गोसहितवृषस्यमंत्रैरभिषेकःकार्यः आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री । वृषवत्सतर्यभिषेकेवि० । ॐ आपोहिष्ठा० ३ । कयानइतितिसृणांगौतमोवामदेव

इंद्रोगायत्रीतृतीयापादनिचृत्। वृषवत्सत०। ॐकयानश्चित्रआभुवदूतीसदावृधःसखा। कयाशचिष्ठयावृता। कस्त्वासत्योमदा
नांमंहिष्ठोमत्सदंधसः। दृढाचिदारुजेवसु। अभीषुणःसखीनामविताजरितॄणां। शतंभवास्यूतिभिः। वृषवत्सतरीभ्यांनमः
वृषवत्सतर्यावावाहयामीत्यावाह्य आसनादिवस्त्रगंधाक्षतमाल्यादिभिर्यथाशक्त्यलंकृत्य। ऋषभमितिपंचर्चस्यसूक्तस्यऋषभो
विराडनुष्टुप् अंत्यामहापंक्तिः। वृषभोपस्थानेवि०। ॐ ऋषभंमासमानानांसपत्नानांविषासहिं। हंतारंशत्रूणांकृधिविराजं
गोपतिंगवां। अहमस्मिसपत्नहेंद्रइवारिष्टोअक्षतः। अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताः। अत्रैववोपिनह्याम्युभेआर्त्नी
इवज्यया। वाचस्पतेनिषेधेमान्यथामदधरंवदान्। अभिभूरहमागमंविश्वकर्मेणधाम्ना। आवश्चित्तमावोव्रतमावोहंसमितिंददे।
योगक्षेमंवआदायाहंभूयासमुत्तमआवोमूर्धानमक्रमीं। अधस्पदान्मउद्वदतमंडूकाइवोदकान्मंडूकाउदकादिव॥ इतिपंचर्चं
सूक्तंकृतांजलिपुटोजपेत्। ततोवृषंप्रदक्षिणमग्निंपृष्ठतआनीयास्यदक्षिणबाहुमूलेस्फिचिभस्मनात्रिशूलाकारं वामेचक्राकार
मंकयित्वा तदुपरितप्तलोहेनांकयेत्। प्रांचःकेचनत्रिशूलांकनमात्रमिच्छंति। ततःप्रांचमुत्सृजेत्। व्रजंतमनुमंत्रयीत।
एतंयुवानमितिमंत्रस्ययाज्ञवल्क्यऋषभस्त्रिष्टुप् वृषोत्सर्गेवि०। ॐ एतंयुवानंपतिंवोददामितेनक्रीडंतीश्चरतप्रियेण। मानः
शाप्तजनुषासुभागारायस्पोषेणसमिषामदेम। शांतातेपृथिवीशिवमंतरिक्षंद्यौस्तेदेव्यभयंकृणोतु। शिवादिशःप्रदिशउद्दिश
स्तआपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः। सर्वतोव्रजस्वेतिब्रूयात्। ततोवृषंपूर्वाभिमुखंकृत्वा। कद्रुद्रायेतिनवर्च
स्यसूक्तस्यघौरःकण्वोरुद्रोगायत्रीतृतीयामैत्रावरुणीअंत्यस्तृचःसौम्योंत्यानुष्टुप्। पूर्वदिगुपस्थानेवि०। ॐ कद्रुद्रायप्रचेतसेमी

ह्वृष्टमायतव्यसे । वोचेमशंतमंहृदे । यथानोअदितिःकरत्पश्वेनृभ्योयथागवे । यथातोकायरुद्रियं । यथानोमित्रोवरुणोयथा
रुद्रश्चिकेतति । यथाविश्वेसजोषसः । गाथपतिंमेधपतिंरुद्रंजलाषभेषजं । तच्छंयोःसुम्नमीमहे । यःशुक्रइवसूर्योहिरण्यमि
वरोचते । श्रेष्ठोदेवानांवसुः ॥ १ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये । नृभ्योनारिभ्योगवे । अस्मेसोमश्रियमधिनिधेहिशत
स्यनृणां । महिश्रवस्तुविनृम्णं । मानःसोमपरिबाधोमारातयोजुहुरंत । आनइंदोवाजेभज । यास्तेप्रजाअमृतस्यपरस्मि
न्धामन्नृतस्य । मूर्धानाभासोमवेनआभूषंतीःसोमवेदः ॥ २ ॥ एतत्सूक्तांते भोवृष अनयावत्सतर्यासहतृणंभक्षजलंपिव
यथासुखंक्रीडस्वेतिवदेत् ॥ ततोदक्षिणाभिमुखंकृत्वा । इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगती अंत्येत्रिष्टुभौ ।
दक्षिणदिगुपस्थानेवि० । ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामे
अस्मिन्ननातुरं । मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते । यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणी
तिषु । अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः । सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः । त्वेषं
वयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे । आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे । दिवोवराहमरुषंकपर्दिनं
त्वेषंरूपंनमसानिह्वयामहे । हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वा
दीयोरुद्रायवर्धनं । रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ । मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउ
क्षितं । मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः । मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ।

वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे । उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे । भद्राहितेसु
मतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे । आरेतेगोघ्नमुतपूरुपघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु । मृळाचनोअधिचब्रूहिदेवाधाचनःशर्म
यच्छद्विवर्हाः । अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवी
उतद्यौः ॥ २ ॥ एतत्सूक्तांतेअनयावत्सतयासहतृणंभक्षजलंपिवयथासुखंक्रीडस्व ॥ ततःपश्चिमाभिमुखंकृत्वा । आतेपितरि
तिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् । पश्चिमदिगुपस्थानेवि० । ॐ आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ।
अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः । त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाअशीयभेषजेभिः । व्य१स्मद्द्वेपोवितरंव्यं
होव्यमीवाश्चातयस्वाविपूचीः । श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रवाहो । पर्षिणःपारमंहसःस्वस्तिविश्वाअभीतीर
पसोयुयोधि । मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती । उन्नोवीराँअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमि ।
हवीमभिर्हवतेयोहविर्भिरवस्तोमेभीरुद्रंदिषीय । ऋदूदरःसुहवोमानोअस्यैबभ्रुःसुशिप्रोरीरधन्मनायै ॥ १ ॥ उन्मामममंदवृष
भोमरुत्वान्त्वक्षीयसावयसानाधमानं । घृणीवच्छायामरपाअशीयाविवासेयंरुद्रस्यसुम्नं । क्व१स्यतेरुद्रमृळयाकुर्हस्तोयोअस्ति
भेषजोजलाषः । अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाः । प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि । नम
स्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम । स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः । ईशानादस्यभुव
नस्यभूरेर्नवाउयोपद्रुद्रादसुर्यं । अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं । अर्हन्निदंदयसेविश्वमभ्वंनवाओजीयो

रुद्रत्वदस्ति ॥ २ ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं । मृळाजरित्रेरुद्रस्तवानोन्यंतेअस्मन्निवपंतुसेनाः । कुमार
श्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे । यावोभेषजामरुतःशुचीनियाशं
तमावृषणोयामयोभु । यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि । परिणोहेतीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिर्महीगा
त् । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ । एवाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि । हवनःश्रुत्नोरुद्रे
हबोधिबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ एतत्सूक्तांतेअनयावत्सतर्यासहतृणंभक्षजलंपिवयथासुखंक्रीडस्व ॥ उदङ्मुखंकृत्वा ।
इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रोजगत्यंत्यात्रिष्टुप् । उत्तरदिगुपस्थानेवि० । इमारुद्रायस्थिरधन्वनेगिरःक्षि
प्रेषवेदेवायस्वधाव्ने । अषाह्ळायसहमानायवेधसेतिग्मायुधायभरताशृणोतुनः । सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्य
स्यचेतति । अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनोभव । यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ।
सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः । मानोवधीरुद्रमापरादामातेभूमप्रसितौहीळितस्य । आनोभजबर्हिषि
जीवशंसेयूयंपातस्वस्तिभिःसदानः ॥ १ ॥ एतत्सूक्तांतेअनयावत्सतर्यासहतृणंभक्षजलंपिवयथासुखंक्रीडस्वेतिपूर्ववत् ।
ततःवृषपुच्छोदकेनप्रेतस्यनामगोत्राद्युच्चार्यतर्पणंकुर्यादितिकेचित् । ततःअग्नेत्वंनइत्युपस्थानादिपरिस्तरणविसर्जनादिकर्मशे
षंसमापयेत् । प्रमादात्० । ततोरुद्रसोमेंद्रेभ्यआमान्नत्रयंसदक्षिणंदद्यात् । ततोवृषोत्सर्गसंपूर्णतासिद्ध्यर्थंतिलानुदकुंभंगां
वासोहिरण्यमितिपंचदानानियथाशक्तिदक्षिणांचदद्यात् । ब्राह्मणान्संपूज्य महर्षेर्गोत्र० इतितिलान् । वारिपूर्णघटं० इत्युद

कुंभं । यज्ञसाधन० इतिगां । शरण्यंसर्व० इतिवस्त्रं । हिरण्यगर्भ० इतिहिरण्यंदत्वा दानानांसांगतासिद्ध्यर्थं इमांदक्षिणां वोहंसंप्रददे । तेनश्रीपापापह० । निष्क्रयपक्षेवृषोत्सर्गसंपूर्णतासिद्ध्यर्थं तिलादिपंचानांनिष्क्रयद्रव्यंदातुमहमुत्सृज्ये । गच्छ गच्छसुरश्रेष्ठ० । अनेनवृषोत्सर्गाख्येनकर्मणापरमेश्वरःप्रीयतां । पतिपुत्रवत्याःसुवासिन्यानवृषोत्सर्गःतत्स्थानेएकापयस्वि नीगौर्देया तत्संकल्पादिदानप्रसंगेवक्ष्यते ॥ इतिवृषोत्सर्गविधिः ॥ ॥ ॥ ॥

अथमहैकोद्दिष्टम् ॥ ॥ ततःअद्येत्यादिपिंडनवश्राद्धैकोद्दिष्टंप्रवाहणस्नानांतंप्राक्तनविषमदिनवत्कुर्यात् । शिवस्वामि मतेतुनैतत् । किंतुपंचैवनवश्राद्धानिपूर्वोक्तानितन्मते । ततोमहैकोद्दिष्टम् । तस्मिन्नेवाहन्येकंब्राह्मणंनिमंत्र्य तस्यश्मश्रुक र्माभ्यंगादिकारयित्वा । अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्तयेएकादशाहेमहैकोद्दिष्टंकरिष्यइति संकल्प्य । क्षणपाद्यासनार्घ्यगंधपुष्पाच्छादनानिदद्यात् । तत्रार्घ्येदक्षिणाग्रकुशोपरिएकमर्घ्यपात्रमासाद्यतत्रैकंपवित्रंजलं चक्षिस्वा । तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तःप्रेतेमाँल्लोकान्प्रीणयाहिनः । इतिमंत्रेणतूष्णींवातिलान्क्षि प्त्वाअमुकगोत्रेत्यादिसंबुध्याप्रेतांतमुक्त्वामहैकोद्दिष्टेइदमर्घ्यंतवोपतिष्ठतामित्यर्घ्यंदत्वा । पात्रेघृताक्तंसिद्धमन्नमादायविप्र पाणौप्रक्षालितेदर्भानास्तीर्यामुकगोत्रायामुकप्रेतायस्वाहेतिहस्तेएकामाहुतिंहुत्वातदन्नमन्नौक्षिपेत् । नवापाणिहोमः । ततः परिवेषणाद्यंगुष्ठनिवेशनांतंकृत्वाअमुकगोत्रायामुकप्रेतायेदमन्नंयथाशक्तिसोपस्करममृतरूपमुपतिष्ठतामितिसंकल्प्याऽऽपो शनादिदद्यात् । दर्भशिखायाममुकगोत्रेत्यादिअमुकप्रेतायायंतेपिंडउपतिष्ठतामितिपिंडंदद्यात् । तिलोदकंभृंगराजपत्रंद

क्षिणांचदद्यात् । प्रेतस्यवस्त्रशयनाभरणानिपादुकाछत्रोदकपात्रवाहनादीनियथाशक्तिदद्यात् । भूयसींदक्षिणांदत्वासंतो
षयेत् । अभिरम्यतामितिविसर्जनं । अभिरताःस्म इतिप्रतिवचनं । एकोद्दिष्टेएकोविप्रःदैवैवनिमंत्रणं एकमर्घ्यपात्रं धूपदी
पौनस्तः स्वधाशब्दपितृशब्दनमःशब्दानसंति नाभिश्रवणं सर्वप्राचीनावीतिनाकार्यं दैवंनास्ति नाग्नौकरणं एकएवपिंडः
अनुमंत्रणादिसर्वममंत्रकं अक्षय्यस्थानेउपतिष्ठतामितिवदेत् श्राद्धशेषभोजनंनकार्यं अंतेस्नानं नवश्राद्धैकोद्दिष्टेतुसर्वममं
त्रकं । स्मृत्यर्थसारेमहैकोद्दिष्टानंतरंनवश्राद्धमितिक्रमः ॥ इतिमहैकोद्दिष्टं ॥ ॥ ॥

अथद्विजाभावेग्नावेकोद्दिष्टविधिः ॥ ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृ
त्त्याउत्तमलोकप्राप्त्यर्थंमृताहादेकादशेहनिअग्नावेकोद्दिष्टश्राद्धंकरिष्ये तदंगमग्निस्थापनादिकरिष्ये इतिसंकल्प्य । ग्रामाद्ब
हिःशुचौदेशेगोमयेनोपलिप्तस्थंडिले भूर्भुवःस्वःअग्निंप्रतिष्ठापयामिइतिलौकिकाग्निंप्रतिष्ठाप्य । चत्वारिशृंगा० इत्यादिध्या
त्वा परिसमुह्य ३ परिस्तीर्य पर्युक्ष्य विश्वानिन० इत्यर्चयित्वा । अपसव्यं । तिलोदकंकृत्वा अमुकगोत्रस्यामुकप्रेतस्यमहै
कोद्दिष्टश्राद्धेक्षणउपतिष्ठतां इत्यग्नौदर्भत्रयंप्रक्षिपेत् । ततःअग्नेरुत्तरतः त्रिकोणंमंडलंकृत्वा तत्रपाद्याद्युपचारान्दद्यात् ।
तत्रदक्षिणाग्रंदर्भंनिधाय । अमुकगोत्रअमुकप्रेतस्वरूपाग्ने पाद्यमुपतिष्ठतां । अमुकगोत्रामुकप्रेतरूपस्याग्नेः महैकोद्दिष्टश्रा
द्धेइदमासनमुप० इत्यग्नौसव्यतआसनंदद्यात् । ततःअग्नेःपुरतःदक्षिणाग्रकुशोपरिएकमर्घ्यपात्रमुत्तानमासाद्य तत्रैकंपवित्रं
जलंचप्रक्षिप्य तिलोसिसोम० स्वधयाप्रेतेमाँल्लोकान्प्रीणयाहिनः इतिमंत्रेणतिलान्क्षिप्त्वा अमुकेत्यादिसंबुद्ध्याअग्नौइदमर्घ्यं

मुपतिष्ठतां इत्यग्नेर्दक्षिणतोविप्रकरंध्यात्वा तत्रपवित्रंविधायअर्घ्यंदद्यात् । अमुक० अग्नौगंधमुप० । अमुक० भृंगराजपत्रं
तुलसीपत्रंचोपति० । नात्रधूपदीपौ । अमुक० आच्छादनार्थेकिंचिद्धिरण्यमुपति० । घृतप्लुतंग्रासमात्रमन्नंगृहीत्वा अमुक
गोत्रायामुकप्रेतायस्वाहा इत्यग्नावेकाहुतिहोमः । त्रिकोणमंडलेअग्नेरग्रभागेपात्रेपुरुषाहारपरिमितंसोपस्करमन्नंपरिविष्यगा
यंत्र्याप्रोक्ष्यतूष्णींपरिषिच्य अमुकगोत्रायामुकप्रेताय इदमन्नंयथाशक्तिसोपस्करममृतरूपमुपतिष्ठतां । अमृतोपस्तरणमसि
इत्यग्नेर्वायव्यदेशेउदकंदत्वा अग्नौपंचप्राणाहुतीर्जुहुयात् । प्राणायस्वाहा अपानाय० व्यानाय० उदानाय० समानाय० ।
ततःसोपस्करमन्नंसर्वमेकीकृत्य । उदीरतामित्यष्टभिर्मंत्रैःप्रणवाद्यैःस्वाहाकारांतैश्चतुर्वारमावृत्यद्वात्रिंश ३२ दाहुतीर्ग्रास
मिताःसोपस्करस्यान्नस्यजुहुयात् । नात्रइदंनममेतित्यागः । उदीरतामित्यष्टर्चस्यशंखःपितरस्त्रिष्टुप् । महैकोद्दिष्टान्नहोमेवि० ।
ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः । असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषुस्वाहा १ । ॐ इदंपितृ
भ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः । येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षुस्वाहा० २ । ॐ आहंपितृन्त्सुवि
दत्राँअवित्सिनपातंचविक्रमणंचविष्णोः । बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमिष्ठाःस्वाहा ३ । ॐ बर्हिषदःपितर
ऊत्यर्वागिमावोहव्याचकृमाजुषध्वं । तआगतावसाशंतमेनाथानःशंयोररपोदधातस्वाहा ४ । ॐ उपहूताःपितरःसोम्या
सोबर्हिष्येषुनिधिषुप्रियेषु । तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेवन्त्वस्मान्स्वाहा ५ । ॐ आच्याजानुदक्षिणतोनिषद्येमंयज्ञम
भिगृणीतविश्वे । माहिंसिष्टपितरःकेनचिन्नोयद्वआगःपुरुषताकरामस्वाहा ६ । ॐ आसीनासोअरुणीनामुपस्थेरयिंधत्तदा

शुप्रेमर्त्याय। पुत्रेभ्यः पितरस्तस्यवस्वः प्रयच्छततइहोर्जंदधातस्वाहा ७। ॐ येनः पूर्वेपितरः सोम्यासोनूहिरेसोमपीथंवासिष्ठाः। तेभिर्यमः संरराणोहवींष्युशन्नुशद्भिः प्रतिकाममत्तुस्वाहा ८। एवंचतुरावृत्तसूक्तेनद्वात्रिंशदाहुतीर्हुत्वाउच्छिष्टपिंडोनदेयः। एकः पिंडः पूर्ववद्देयः। महैकोद्दिष्टश्राद्धेपिंडप्रदानंकरिष्ये इतिसं०। पिंडार्थमेकंकुशंनिधायअभ्युक्ष्य अ० गो० पिंडार्थेदर्भासनं तस्योपरितिलोदकंउप० अमुकप्रेतक्षुन्निवृत्त्यर्थंचरुपिंडउप० तस्योपरितिलोदकमुप० अंजनाभ्यंजनंपाद्यंअर्घ्यआचमनीयं स्नानंवस्त्रंगंधमाल्यभृंगराजतुलसीपत्राणिसर्वोपचारार्थेतिलाः धूपदीपौसोपस्करचरुनैवेद्यःउप० तांबूलंदक्षिणांउप० प्रेतस्यवस्त्रशयनासनाभरणानिपादुकाछत्रोदकपात्रवाहनादीनियथाशक्तिदद्यात्। अतसीपुष्प०। अनादिनिधनोदेवइतिपठित्वाप्यायनंवाचयित्वापरिस्तरणानिविसृज्यपरिसमुह्यपर्युक्ष्याभ्यर्च्यसांगतार्थंब्राह्मणेभ्योभूयसींदत्वा अभिरम्यतामितिविसर्जयेत्। अभिरतास्मइतिप्रतिवचनं। पिंडंप्रवाह्यस्नायात्। इत्यग्नौमहैकोद्दिष्टविधिः॥ ॥ ॥

अथरुद्रगणश्राद्धम्॥ ॥ तच्चैकादशरुद्रोद्देशेनरुद्ररूपप्रेतोद्देशेनवाकार्यं। रुद्रोद्देशपक्षेसव्येन तद्रूपप्रेतोद्देशपक्षेऽपसव्येन। तत्रैकादशरुद्रनामानि। वीरभद्रश्च १ शंभुश्च २ गिरीशश्च ३ महायशाः। अजैकपा ४ दहिर्बुध्न्यः ५ पिनाकी ६ चापराजितः ७। भुवनाधीश्वर ८ श्चैव कपाली ९ च विशांपतिः। स्थाणु १० र्भगश्च ११ भगवान्रुद्राएकादशस्मृताः। यद्वा। अजैकपाद् १ अहिर्बुध्न्यः २ कपाली ३ रुद्र ४ एवच। वृषाकपिश्च ५ शंभुश्च ६ कपर्दी ७ रैवतस्तथा ८। हरश्च ९ बहुरूपश्च १० त्र्यंबकश्चा ११ पराजितः॥ अथप्रयोगः॥ ॥ देशकालौस्मृत्वा अमुकगोत्रस्येत्यादिप्रेतत्वविमुक्त्योत्तम

लोकप्राप्त्यर्थंरुद्रगणश्राद्धंकरिष्येइतिसंकल्प्य । अपसव्यं । वीरभद्र-शंभु-गिरीशा-जैकपाद-हिर्बुध्न्यं-पिनाक्यं-पराजितं-भुवनाधीश्वरं-कपालि-स्थाणुं-भर्गरूपिन् अमुकगोत्रामुकप्रेतरुद्रगणश्राद्धेक्षणउपति० इत्येकस्मिन्दर्भवटौक्षणाद्युपचारान्दद्यात्। वीरभद्र० रूपिन्नमुकगोत्रामुकप्रेतपाद्यमुप० । वीरभद्र० रूपामुकप्रेतस्यआसनमुपति० । वीरभद्र० रूपिन्नमुकगोत्र० भृंगराजपत्रंतुलसीपत्रमुप० । वीरभद्र० रूपप्रेतआच्छादनार्थेकिंचिद्व्यावहारिकंद्रव्यमुप० । वीरभद्र० रूपप्रेतायइदमामान्नं यथाशक्तिसोपस्करंसदक्षिणमुप० । अनादिनिधनो० अभिरम्यतामितिविसृज्य अभिरतास्मइतिप्रतिवचनं । शक्तेनैकैकरुद्रनामग्रहणेनैकैकब्राह्मणभोजनंकार्यं। एकैकरुद्ररूपप्रेतोद्देशपक्षे वीरभद्ररूपिन्अमुकगोत्रामुकप्रेतइदमासनमित्यादिप्रत्येकंक्षणपाद्येसंबुद्ध्यादत्वा आसनंषष्ठ्याऽन्नदानंचतुर्थ्याचार्पयेत् । अशक्तेनसर्वोद्देशेनैकएवभोजनीयः । भोजनाभावेएकादशामान्नानि । एकब्राह्मणपक्षेतुएकादशनामान्युक्त्वाएतद्रूपिणेऽमुकप्रेतायेत्याद्यूह्यं । भोजनानंतरंदक्षिणाविसर्जनादिकार्यं । अत्रपिंडदानार्घ्याग्नौकरणविकिराणामभावः ॥ इतिरुद्रगणश्राद्धं ॥ ॥ ॥ ॥

अथवसुगणश्राद्धम् ॥ ॥ इदंचकृताकृतं । इदमप्यष्टवसूद्देशपक्षेसव्येन तद्रूपप्रेतोद्देशपक्षेत्वपसव्येनकार्यं । शक्तेनाष्टौब्राह्मणाभोजनीयाः । अशक्तेनैकःसर्वोद्देशेन । अन्नाभावेआमान्नदानं । अन्यत्सर्वंपूर्ववत् । वसुनामानिच । ध्रुवो १ ऽध्वरश्च २ सोमश्च ३ आपश्चैवा ४ ऽनिलो ५ ऽनलः ६ । प्रत्यूषश्च ७ प्रभासश्च ८ वसवोष्टौप्रकीर्तिताइति । करणपक्षेदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंवसुगणश्राद्धंकरिष्ये । अपसव्यं । ध्रुवा-ध्वर-सोमा-

पो-निॅलो-ऽनॅल-प्रॅत्यूप-प्रॅभासरूपिन्अमुकगोत्रामुकप्रेतवसुगणश्राद्धेक्षणउपतिष्ठतां इतिदर्भवटौक्षणाद्युपचारान्दद्यात् । ध्रुवाध्वर० रूपामुकगोत्रामुकप्रेतपाद्यमुप० । एवंपद्याआसनमुप० ध्रुवा० रूपिन्अमुकगोत्रामुकप्रेतगंधंपुष्पंभृंगराजपत्रंतुलसीपत्रमुप० । ध्रुवा०अमुकप्रेतआच्छादनमुप० । ध्रुवा० रूपिणेमुकप्रेतायइदमामान्नं यथाशक्तिसोपस्करं सदक्षिणमुपति० । अनादिनिधनो० अभिरम्यतां । अभिरतास्मः ॥ अष्टब्राह्मणपक्षेतु अमुकगोत्रेत्यादिसंकल्पांते ध्रुववसुरूपिन्अमुकगोत्रामुकप्रेतअयंतेक्षणउपतिष्ठतांइत्यादिसर्वंकुर्यात् । अत्रपिंडाद्यभावः ॥ इतिवसुगणश्राद्धं ॥ ॥ ॥ ॥

अथषोडशमासिकश्राद्धानि ॥ ॥ तानिच । आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक ६ पंचममासिक ७ षष्ठमासिक ८ ऊनषाण्मासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३ एकादशमासिक १४ द्वादशमासिक १५ ऊनाब्दिकानि १६ तत्तत्कालेकर्तव्यानि द्वादशेह्निसपिंडीकरणाधिकारसिद्ध्यर्थमपकृष्यएकादशेद्वादशेवाह्निकार्याण्येकोद्दिष्टविधिना । यद्दिमरणादारभ्यद्वादशमासमध्येकश्चिदधिकस्तदातन्मासिकंद्विवारंकार्यं । एवंसप्तदशश्राद्धानिभवंति । तस्मिन्नेवाहनिप्रातःषोडशब्राह्मणान्निमंत्र्यतेषांश्मश्रुकर्माभ्यंगौकारयित्वाकृतमाध्याह्निकः षोडशपाकान्निष्पाद्याशक्तौओदनमात्रभेदंकृत्वाश्राद्धमुपक्रमेत् । अत्यशक्तौ आमान्नेनवाकुर्यात् ॥ अथप्रयोगः ॥ देशकालौस्मृत्वाऽमुकगोत्रस्याऽमुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्त्यर्थंअतिक्रांत माद्यमासिकं सपिंड्यधिकारार्थमपकृष्योनमासिकादीन्यूनाब्दिकांतानिपंचदशेतिषोडशमासिकश्राद्धानिआमान्नेनैकोद्दिष्ट



विधिनातंत्रेणकरिष्यइतिसंकल्प्य । अपसव्यं । अमुकगोत्रामुकप्रेतआद्यमासिकेक्षणःक्रियतां । एवंगोत्रनामाद्युच्चार्यऊनमा
सिकेद्वितीयमासिकइत्यादिषोडशस्थानेषुक्षणंदद्यात् । यदिमध्येअधिकमासस्तन्मासात्पूर्वमासिकोत्तरं अधिकमासिकेक्षणः
क्रियतांइतिदत्त्वा ततःशुद्धमासिकस्य । ऊनत्रयत्रैपक्षिकमासिकानांतुद्विरावृत्तिर्नास्ति । शुद्धमासएवकार्याणि ।
अमुकगोत्रामुकप्रेताद्यमासिकेपाद्यमुपतिष्ठतामित्येवंषोडशब्राह्मणेषुपाद्यंदद्यात् । एवमासनार्घ्यगंधपुष्पाच्छादनानिप्रत्येकं
षोडशभ्योदद्यात् । अमुकगोत्रस्यामुकप्रेतस्यआद्यमासिकेआसनमुपतिष्ठतांएवंषोडशेष्वासनं । ततोभूमौषोडशस्थानेषुदक्षि
णाग्रकुशेएकैकमर्घ्यपात्रमुत्तानमासाद्य तत्रैकंपवित्रंजलंचप्रक्षिप्यतूष्णींमंत्रावृत्त्यावातिलान्क्षिपेत् । मंत्रपक्षे । तिलोसि
सोम० स्वधयाप्रेतेमाँल्लोकान्प्रीणयाहिनःइतिमंत्रावृत्त्याप्रक्षिप्य । अमुकगोत्रामुकप्रेतआद्यमासिकेअर्घ्यमुपतिष्ठतां एवंषोड
शस्थानेषुअर्घ्यदद्यात् । अमुकगोत्र० आद्य०गंधमुप० । अमु० आद्य० भृंगराजपत्रंतुलसीपत्रमुप० । एवमूनमासिका
दिषु । अमुकगोत्र० आच्छादनार्थेकिंचिद्द्रव्यमुप० । एवंसर्वत्र । अग्नौकरणंकृताकृतं । करणपक्षे । अमुकगोत्राय० प्रेता
यस्वाहा इतिप्रतिमासिकस्थानेएकैकाहुत्यात्मकंतंडुलैःकार्यं । अमुकगोत्रायामुकप्रेतायआद्यमासिकश्राद्धेइदमामंयथाशक्ति
सोपस्करंसोदकुंभंसदक्षिणंअमृतरूपमुपतिष्ठतां एवमूनमासिकादिषु । ततोद्विजसमीपेदर्भशिखायां । अमुकगोत्रायामुक
प्रेतायआद्यमासिकश्राद्धेअयंसक्तुपिंडउपतिष्ठतां इतिषोडशपिंडान्दद्यात् । पिंडोपरितिलोदकमुप० । अंजनाभ्यंजनमुप० ।
गंधंभृंगराजपत्रंतुलसीपत्रमुप० नैवेद्यार्थेसक्तूपतिष्ठतां फलतांबूलदक्षिणाद्युप० । तूष्णींसक्तुशेषविकिरउपति० । अनादि



निधनो० अभिरम्यतामितिदर्भवटुंपिंडंचविसृज्यपिंडान्प्रवाह्यस्नायात् । एवंएकदेशकालकर्तृकत्वात्तंत्रेणषोडशश्राद्धानि कुर्यात् । आद्यमासिकंसर्वसमाप्यद्वितीयादीनिप्रत्येकंपृथगेवसर्वाणिनतुतंत्रेणेतिकेचित् ॥ इतिषोडशश्राद्धानि ॥ ॥

अथाद्याब्दिकश्राद्धम् ॥ ॥ एतदनंतरमाद्याब्दिकमप्येकोद्दिष्टविधिनाकार्यं । आद्यमासिकेनतंत्रेणसिद्धेर्नपृथक्कार्यं किंतुआद्यमासिकंआद्याब्दिकंचतंत्रेणकरिष्यइतिसंकल्पयेदितिकेचित् । देशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्व विमुक्त्योत्तमलोकप्राप्त्यर्थं मृताहादेकादशेहनिआद्याब्दिकश्राद्धंक० । अपसव्यं । अमुकगोत्रामुकप्रेतआद्याब्दिकश्राद्धे क्षणउपतिष्ठतां इतिशेषंसर्वंपूर्ववत् ॥ इत्याद्याब्दिकश्राद्धम् ॥ ॥ ॥ ॥

अथदानप्रकारः ॥ ॥ तत्रदशदानानि । आचम्यप्राणानायम्यदेशकालौनिर्दिश्य अमुकगोत्रस्यअमुकप्रेतस्यजन्मप्रभृतिमरणांतंकृतनानाविधपापक्षयद्वारापापापहमहाविष्णुप्रीत्यर्थंमृताहाद्यैकादशेहनिब्राह्मणेभ्योगवादिदशदानानिकरिष्ये । ब्राह्मणपूजांचकरिष्ये । गोभूतिलहिरण्याज्यवासोधान्यगुडानिच । रौप्यंलवणमित्यादिदशदानान्यनुक्रमात् । विप्रं संपूज्य ॥ ॥ गोप्रदानं । गांसंपूज्यस्वस्त्यस्त्वित्यादि । यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी । विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ इदंदशदानांतर्गतगोनिष्क्रयद्रव्यंअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इमांदक्षिणांसंप्रद

१ प्रेतकृत्यांतर्गतेष्वपिदानेपुनापसव्यम् । कृतार्चनाहरेर्येनपित्रर्थंमुनिसत्तम । गयायांपिंडदानंतुकृततेनपदेपदे । यमुद्दिश्यहरेःपूजाक्रियतेमुनिसत्तम । उद्धृतोनरकाद्दुःखात्सयातिपरसंपदम् । पित्रर्थमपिक्रियमाणाविष्णुपूजासव्येनैव एकादशाहकर्तव्यशय्यादिदानवदितिआचाररत्नम् ।

देनमम । एवंसर्वत्र ॥ १ ॥ भूमिदानं ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता । अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥२॥
तिलदानम् ॥ ॥ महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः । तस्मादेषांप्रदानेनपितृपापंव्यपोहतु ॥३॥ ॥ हिरण्यदानं॥
हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः । अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ ४ ॥ ॥ आज्यदानं ॥ ॥ कामधेनोःसमु
द्भूतंसर्वक्रतुषुसंस्थितं । देवानामाज्यमाहारअतःशांतिंप्रयच्छमे ॥ ५ ॥ ॥ वस्त्रदानं ॥ ॥ शीतवातोष्णसंत्राणंलज्जाया
रक्षणंपरं । देहालंकरणंवस्त्रमतःशांतिंप्रयच्छमे ॥ ६ ॥ ॥ धान्यदानं ॥ ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् । प्राणि
नांजीवनोपायस्ततःशांतिंप्रयच्छमे ॥ ७ ॥ ॥ गुडदानं ॥ ॥ गुडश्चेक्षुरसोद्भूतोमंत्राणांप्रणवोयथा । दानेनानेनचैतस्य
परालक्ष्मीःस्थिरागृहे ॥ ८ ॥ ॥ रौप्यदानं ॥ ॥ प्रीतिर्यतःपितृणांचविष्णुशंकरयोःसदा । शिवनेत्रोद्भवंरूप्यमतःशांतिं
प्रयच्छमे ॥ ९ ॥ ॥ लवणदानं ॥ ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना । शंभोःप्रीतिकरंयस्मादतःशांतिंप्रयच्छमे ॥
॥ १० ॥ अनेनदशदानाख्येनकर्मणाप्रेतोद्धर्तामहाविष्णुःप्रीयतां ॥ इतिदशदानानि । (सर्वत्रपुत्रकर्तृकेसंकल्पवाक्येदान
मंत्रे 'मे–मम' इत्यादिस्थले'पितुः–तस्य' इत्यूहःकार्यः) । दशदानानांनिष्क्रयपक्षे देशका० अमुकगो० जन्मप्रभृतिमर
णांतंकृतनानाविधपापक्षयद्वाराश्रीपापापह० त्यर्थंब्राह्मणेभ्योगवादिदशदानानियथाशक्तिनिष्क्रयद्वाराकरिष्ये । ब्राह्मणपू
जनं । महाविष्णुस्वरूपिभ्योब्राह्मणेभ्यःसर्वोपचारार्थेगंधाक्षतपुष्पाणिसमर्पयामि इतिजलमध्येगंधाद्युपचारान्प्रक्षिप्य ततः

श्लोकान्पठित्वा । इदंदशदाननिष्क्रयीभूतंयथाशक्तिद्रव्यंनानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृज्येनमम । तेनश्रीपापापहर्ता० । अपसव्यं । इदंदशदानजंफलं अमुकगोत्रायामुकप्रेतायोपतिष्ठतामितिसमर्पयेत् । सव्यं ॥ ॥

अथाष्टदानानि ॥ ॥ 'तानिचआमान्नोदकुंभगोवस्त्रभूम्यास्तरणच्छत्रासनानि । अमुकगोत्रस्यामुकप्रेतस्यजन्मार्जितपापक्षयपूर्वकंपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेष्टदानानिकरिष्ये । विप्रंसंपूज्य ॥ ॥ आमान्नदानं ॥ ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः । अन्नंब्रह्माखिलत्राणमस्तुजन्मनिजन्मनि ॥ १ ॥ ॥ उदकुंभदानं ॥ ॥ वारिपूर्णोघटश्चायंदेवत्रयमयोयतः । प्रीयतांधर्मराजस्तुदानेनानेनपुण्यदः ॥ २ ॥ ॥ गोप्रदानं ॥ ॥ यज्ञसाधनभूताया० ॥ ३ ॥ ॥ वस्त्रदानं ॥ शीतवातोष्णसंत्राणंलज्जायारक्षणंपरं । देहालंकरणंवस्त्रमतःशांतिंप्रयच्छतु ॥ ४ ॥ ॥ भूमिदानं ॥ ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता । अनंतसस्यफलदाअतःशांतिंप्रयच्छतु ॥ ५ ॥ ॥ शय्या ( कटः ) ॥ ॥ यथानकृष्णशयनंशून्यंसागरजातया । शय्यैतस्याप्यशून्यास्तुतथाजन्मनिजन्मनि ॥ ६ ॥ ॥ छत्रदानं ॥ ॥ इहामुत्रातपत्राणंकुरुमेकेशवप्रभो । छत्रंत्वत्प्रीतयेदत्तंतस्यास्तुचसदाशुभं ॥ ७ ॥ ॥ आसनं ( और्णंदारुजंवा ) ॥ ॥ त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे । आसनेनचतुष्यस्वप्रयच्छैतस्यवांछितं ॥ ८ ॥ ॥ इत्यष्टदानानि ॥ ॥ वृषोत्सर्गांगाष्टदानानि । आमान्नत्रयं तिलानुदकुंभंगांवासोहिरण्यंचेति । एवमष्टौ । देशकालौ० अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्याउत्तमलोकप्राप्त्यर्थंकृतवृषोत्सर्गांगत्वेनरुद्रसोमेंद्रप्रीत्यर्थं आमान्नत्रयदानं तथातिलोदकुंभगोवस्त्रहिरण्येतिपंचदानानिकरिष्ये । ब्राह्मणपूजनं ॥ ॥ तत्रतिलदानं ॥

महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः । तस्मादेषांप्रदानेनतस्यपापंव्यपोहतु ॥ १ ॥ ॥ उदकुंभदानं ॥ ॥ वारिपूर्णो
घटश्चायंदेवत्रयमयोयतः । प्रीयतांधर्मराजस्तुदानेनानेनपुण्यदः ॥ २ ॥ ॥ गोप्रदानं ॥ ॥ यज्ञसाधनभूताया० ॥ ३ ॥
वस्त्रदानं ॥ ॥ शीतवातोष्णसंत्राणंलज्जायारक्षणंपरं । देहालंकरणंवस्त्रमतःशांतिंप्रयच्छतु ॥ ४ ॥ ॥ हिरण्यदानं ॥ ॥
हिरण्यगर्भगर्भस्थं० ॥ ५ ॥ ॥ आमान्नत्रयदानं ॥ ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः । अन्नंब्रह्माखिलत्राणमस्तु
जन्मनिजन्मनि ॥ इतिवृषोत्सर्गांगान्यष्टदानानि ॥ ॥ ॥ ॥

अथचतुर्दशोपदानानि ॥ ॥ अन्नंचैवोदकंचैवोपानहौचकमंडलुः । छत्रंवस्त्रंतथायाष्टिंलोहदंडंचदापयेत् । अग्नीष्टिकां
प्रदीपंचतिलांस्तांबूलमेवच । चंदनंपुष्पदानंचोपदानानिचतुर्दश । देशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यजन्मार्जिता
खिलपापनाशपूर्वकमुत्तमलोकप्राप्त्यर्थंपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेचतुर्दशोपदानानिकरिष्ये ॥ ॥ अन्नदानं ॥ ॥
अमुकगोत्र० मार्गेक्षुधानिवृत्तिपूर्वंसुखप्राप्तयेन्नदानंक० । अन्नमेवाग्रतोलक्ष्मीरन्नमेवजनार्दनः । अन्नंब्रह्माखिलंशश्वत्तस्या
स्तांजन्मजन्मनि । इदमन्नंअमुकगोत्रायशर्मणेतुभ्यमहंसंप्रददेनमम । दानसांगतासिद्ध्यर्थंदक्षिणांसंप्रददे । तेनप्रेतपापापहम
हाविष्णुःप्रीयतां ॥ १ ॥ ॥ उदकदानं ॥ ॥ अमुकगो० प्रपादानफलावाप्तयेउदकदानंक० । त्रिलोकीनाथदेवेशसर्वभू
तदयानिधे । उदपात्रेणतुष्यस्वप्रयच्छप्रेतवांछितं ॥ २ ॥ ॥ उपानहदानं ॥ ॥ अमुकगो० कंटककूर्पादिपीडानिवृत्त्यर्थं
उपानहदानंक० । उपानहौप्रदास्यामिकंटकादिनिवारणे । सर्वस्थानेषुसुखदेतस्यशांतिंप्रयच्छतः ॥ ३ ॥ ॥ कमंडलुदानं ॥

अमुकगो० मार्गेतृषाशमनपूर्वकंसुखसिद्धयेकमंडलुदानंक० । वारिपूर्णोघटश्चायंदेवत्रयमयोयतः । प्रीयतांधर्मराजस्तुदानेनानेनपुण्यदः ॥ ४ ॥ ॥ छत्रदानं० ॥ ॥ अमुकगो० मार्गेरौद्रातपजन्यदाहनिवृत्तिपूर्वकंसुखसिद्धयेछत्रदानंक० । इहामुत्रातपत्राणंकुरुश्रीकेशवप्रभो । छत्रंत्वत्प्रीतयेदास्येतस्यास्तुचसदाशुभं ॥ ५ ॥ ॥ वस्त्रदानं ॥ ॥ अमुकगो० शीतजन्यपीडानिवृत्त्यासुखसिद्धयेवस्त्रदानंक० । शरण्यंसर्वलोकानांलज्जायारक्षणंपरं । सुवेषधारिवस्त्रंचतस्यशांतिंप्रयच्छतु ॥ ६ ॥ यष्टिकादानं ॥ ॥ अमुकगो० मार्गेभयनिवृत्त्यासुखसिद्धयेयष्टिकादानंक० । भयनाशकरींयष्टिंसुदृढांदेवनिर्मितां । दास्यामिभयनाशार्थतस्येमांवैणवींशुभां ॥ ७ ॥ ॥ लोहदंडदानं ॥ ॥ अमुकगो० ज्ञानादज्ञानाद्वालोभेनकृतपापनिवृत्तयेलोहदंडदानंक० । ज्ञानाज्ञानकृतंपापंतथालोभकृतंचयत् । लोहदंडप्रदानेनतस्यपापंव्यपोहतु ॥ ८ ॥ ॥ अग्नीष्टिकादानं ॥ ॥ अमुकगो० मार्गेशैत्यांधकारनिवृत्त्यासुखप्राप्तयेअग्नीष्टिकादानंक० । हुतभुक्सर्वदेवानांमुखंहव्यंवहन्सदा । शीतवातविनाशःस्याद्दानेनानेनसर्वदा ॥ ९ ॥ ॥ दीपदानं ॥ ॥ अमुकगो० मार्गेंधकारापनयेनसुखप्राप्तयेदीपदानं । दीपायनमइतिदीपंब्राह्मणंच० संपूज्य । ज्योतिस्तेजःप्रकाशश्चाप्यूर्ध्वगत्यांप्रजायते । प्रदानंतेजसस्तस्मात्तेजोवर्धयतेक्षयं ॥१०॥ तिलदानं ॥ ॥ अमुकगो० जन्मप्रभृतिमरणांतंकृतनानाविधपापनिवृत्त्यासुखावाप्तयेतिलदानंक० । महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः । तस्मादेषांप्रदानेनप्रेतपापंव्यपोहतु ॥ ११ ॥ ॥ तांबूलदानं ॥ ॥ अमुकगो० मुखेसर्वदासौगंध्यप्राप्त्यासुखनिवासार्थतांबूलदानंक० । सोपस्करंचतांबूलंसर्वदामंगलप्रदं । प्रियंचाखिलदेवानांसौगंध्यंवदनेस्त्वतः ॥

॥ १२ ॥ ॥ चंदनदानं ॥ ॥ अमुकगोत्र० मनसिसर्वदानंदप्राप्त्यासुखसिद्धयेचंदनदानंक० । चंदनावासमंदारसखेवृंदारकार्चित । चंदनत्वत्प्रदानाच्चसदानंदप्रदोभव ॥ १३ ॥ ॥ पुष्पदानं ॥ ॥ अमुकगो० मनसिसर्वदाह्लादपूर्वकंविष्णुलोकनिवासार्थंपुष्पदानंक० । ह्लादयंतिमनोयस्मात्सुमनांसिस्मृतान्यतः । दानात्सुमनसांनित्यमत्याह्लादोस्तुतस्यवै ॥ १४ ॥ अपसव्यं । एतच्चतुर्दशोपदानजंफलंअमुकगोत्रायामुकप्रेतायोपतिष्ठतां । सव्यं । चतुर्दशदाननिष्क्रयपक्षे । अमुकगो० चतुर्दशोपदानकल्पोक्तफलावाप्तिपूर्वकस्वर्गेसुखसिद्धयेअन्नादिचतुर्दशदानानिनिष्क्रयद्वाराक० । जलमध्येब्राह्मणान्संपूज्य । महाविष्णुस्वरूपिभ्यश्चतुर्दशब्राह्मणेभ्योदातुमहमुत्सृज्ये । तेनपापापहमहाविष्णुःप्रीयतां ॥ ॥ ॥ ॥

अन्यान्यपिविभवेउपदानानि ॥ ॥ सिद्धस्थालीदानं ॥ अमुकस्यजन्मजन्मांतरेषुज्ञातिवंधुसुहृद्वर्गविप्रस्वजनभोजनोत्तरस्वभोजनसिद्धिपूर्वकंस्वर्गसुखावाप्तयेसिद्धस्थालीदानं० । ज्ञातिवंधुसुहृद्वर्गविप्रेषुस्वजनेतथा । अभुक्तवत्सुनाश्नीयां तथाभववरप्रद । इमांपायससंपूर्णांस्थालींघृतजलादिभिः । दद्यात्संपत्तिपात्रंस्यादतःपाहिमहेश्वर ॥ ॥ ऊर्णापट्टदानं ॥ अमुकस्यसर्वपापशीतादिपीडाक्षयपूर्वकंस्वर्गसुखावाप्तयेऊर्णापट्टदानं० । ऊर्णापट्टमनुध्येयंशीतपीडानिवारकं । दत्तंगृहाण देवेशपापंसंहरसत्वरं ॥ ॥ कंवलदानं ॥ अमुकस्यसर्वाधिव्याधिध्वंसपूर्वमक्षय्यसुखप्राप्तयेकंवलदानं । सर्वाधिव्याधिविध्वंसःसततंसुखमुत्तमं । प्रदानात्कंवलस्यास्यपापध्वंसोऽस्तुसर्वदा ॥ ॥ तिलपात्रदानं ॥ अमुकस्यप्रेतत्वनिवृत्त्या

जन्मप्रभृतिमरणांतंकृतनानाविधपापविनाशार्थंतिलपात्रदानं० । तिलाःपुण्याःपवित्राश्चतिलाःसर्वकराःस्मृताः । शुक्ला वायदिवाकृष्णाऋषिगात्रसमुद्भवाः । यानिकानिचपापानिब्रह्महत्यासमानिच । तिलपात्रप्रदानेनतानिनश्यंतुसर्वदा ॥ ॥ व्यजनदानं ॥ अमुकस्यआतपदाहादिनिवृत्त्यासुखसिद्ध्येव्यजनदानं० । त्रिकालंसर्वजंतूनांशैत्यानंदकरंशुभं । पितृणांप्रीतिदंनित्यमतःशांतिंप्रयच्छतु ॥ ॥ तुलसीपत्रदानं ॥ अमुकस्यमाणिक्यमुक्ताफलदानाधिकफलप्राप्तयेतुलसीपत्रदानं० ॥ माणिक्यादीनिपुष्पाणिमणिमुक्तामयानिच । तुलसीपत्रदानस्यकलांनार्हंतिषोडशीं ॥ ॥ गोपीचंदनदानं ॥ अमुकस्यस्वर्गसुखाद्यवाप्त्यर्थंगोपीं० । यद्वैदेवांगसंलग्नंकुंकुमादिविलेपनं । जलक्रीडासुगोपीनांद्वारवत्याजलार्पितम् । गोपीचंदनमित्युक्तंमुनींद्रैःकिल्बिपापहं । तस्मादस्यप्रदानेनविष्णुर्दिशतुवांछितं ॥ ॥ कर्पूरदानं ॥ अमुकस्यांधकारनिवृत्त्यासुखावाप्तये० । कर्पूरःकदलीभूतोदेवदेवप्रियःसदा । भाग्योत्तमोनृपाणांचतद्दानात्सुखमश्नुते ॥ ॥ दर्पणदानं ॥ अमुकस्यशौर्यसत्कीर्तिनिर्मलज्ञानप्राप्तयेदर्पणदानं० । दर्शनेनत्वमादर्शनृणांमंगलदायक । शौर्यसौभाग्यसत्कीर्तिनिर्मलज्ञानदोभव ॥ ॥ हरिद्रादानं ॥ अमुकस्यश्रीप्राप्तयेहरिद्रादानं० । लक्ष्मीप्रियाचलक्ष्मीदालक्ष्म्याश्चवसनाश्रया । सौभाग्यकृद्धरस्त्रीणांहरिद्राश्रीप्रदास्तुते ॥ ॥ कार्पासदानं ॥ त्वमेवावरणंयस्माल्लोकानामिहसर्वदा । कार्पासत्वांप्रदास्यामित्वमघध्वंसनोभव ॥ इतिविशेषोपदानानि ॥ ॥ ॥ ॥

अथप्रायश्चित्तगोदानप्रयोगः ॥ ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यजन्मप्रभृत्यद्यया
वदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणांतंपापापनोदनार्थं गोरोमतुल्यवत्सरावधिविविधभोगपरिपूर्णस्वर्गवासभो
गोत्तरंविष्णुसायुज्यप्रीत्यर्थंप्रायश्चित्तधेनुदानंक० । तदंगत्वेनब्राह्मणवरणंतत्पूजनंगोपूजनंचकरिष्ये । अमुकगोत्रोमुकश
र्माहंअमुकप्रवरममुकगोत्रंशर्माणंब्राह्मणंकरिष्यमाणगोदानेप्रतिग्रहीतारंत्वांवृणे । महाविष्णुस्वरूपिणेगोप्रतिगृहीत्रेब्राह्मणा
येदमासनं । तवपादोदकंतीर्थं० । पाद्यं । भूमिदेवाग्रजन्मानिस० । अर्घ्यं० । विष्णुरूपिन्द्विजश्रेष्ठभूदेवपंक्तिपावन ।
यज्ञरूपनमस्तेस्तुपात्ररूपनमोस्तुते । आचमनीयं। स्नानंवस्त्रंयज्ञोपवीतंगंधंअक्षतान्पुष्पं धूपदीपौनैवेद्यंतांबूलंदक्षिणाःपांतु।
नमोस्त्व० पुष्पांजलिं० । इतिपूजयित्वाप्रार्थयेत् । त्वंविप्रसर्वगुणमंदिरसर्वभूतविश्वेश्वरत्रिपथगोदधिपर्वतानां । त्वद्दा
नशक्तिशकलीकृतपापकोट्यःप्राप्तोस्मिनिर्वृतिमतीवपरांनमामि । त्वंनोगुरुःपितामातात्वंप्रभुस्त्वंपरायणं । त्वत्प्रसादाच्च
विप्रर्षेसर्वमेस्यान्मनोगतं । आपद्विमोक्षणार्थायगृह्णीष्वेमंप्रतिग्रहम् ॥ ॥ अथगोपूजनम् ॥ तत्रादौगविदेवतान्यासः ।
शृंगमूलयोः ब्रह्मविष्णून्यसामि । शृंगाग्रयोःसर्वतीर्थानिन्य० । शिरोमध्येमहादेवं० । ललाटाग्रेमहादेवींन्य० । नासावंशे
षण्मुखंन्य० । कर्णयोःअश्विनौदेवौन्य० । चक्षुषोःशशिभास्करौन्य० । दंतेषुसर्ववायून्न्य० । जिह्वायांवरुणंन्य० । हुंकारे
सरस्वतींन्य० । गंडयोःयममर्धौन्य० । ओष्ठयोःसंध्याद्वयंन्य० । ग्रीवानांइंद्रंन्य० । कुक्षिदेशेरक्षांसिन्य० । उरसिसाध्या
न्न्य० । चतुःपादेषुधर्मादीन्न्य० । खुरमध्येषुपन्नगान्न्य० । खुरपार्श्वेषुअप्सरसोन्य० । पृष्ठेएकादशरुद्रान्न्य० । सर्वसंधिषु

वसून्य० । श्रोणीतटेपितॄन्य० । लांगूलेसोमंन्य० । वालेषुआदित्यरश्मीन्य० । मूत्रेगंगांन्य० । क्षीरेसरस्वतीं० । दध्नि
नर्मदां० । सर्पिषिहुताशनंन्य० । रोमसुत्रयस्त्रिंशत्कोटिदेवान्य० । उदरेपृथिवींसकाननांन्य० । पयोधरेषुचतुःसागरान्य० ।
इतिन्यासः ॥ सौरभेयिसर्वहितेपवित्रेपापनाशिनि । प्रतिगृह्णमयादत्तंपाद्यंत्रैलोक्यवंदिते । रुद्ररूपिण्यैगवेनमःपाद्यंस० ।
सर्वदेवमयेदेविसर्वतीर्थमयेशुभे । गृहाणार्घ्यमयादत्तंसौरभेयिनमोस्तुते । अर्घ्य । देहस्थायाचरुद्राण्याःशंकरस्यप्रियासदा ।
धेनुरूपेणसादेवीतस्यपापंव्यपोहतु । आचमनीयं । यालक्ष्मीःसर्वभूतेषुयाचदेवेष्ववस्थिता । धेनुरूपेणसादेवीतस्यपापंव्य
पोहतु । स्नानं । अभ्यंगस्नानं । आच्छादनंगवेदद्यात्सम्यक्शुद्धंसुशोभनं । सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी । वस्त्रं ।
उपवस्त्रं । सर्वदेवप्रियंदेविचंदनंचंद्रसंनिभं । कस्तूरीकुंकुमाढ्यंचप्रीत्यर्थंप्रतिगृह्यतां । चंदनं । अक्षताश्चसुरश्रेष्ठेकुंकु० ।
अक्षतान् । हरिद्रांकुंकुमं । गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश । यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच । पुष्पं ॥ अंगपूजा ।
गोःअग्रपादौपूजयामि । गोःआस्यंपू० । गोःनासावंशंपू० । गोःनेत्रेपू० । गोःकर्णौपू० । गोःककुदंपू० । गोःपृष्ठंपू० ।
गोःपुच्छंपू० । गोःपश्चिमपादौपू० । गोःस्तनान्पू० । गोःसर्वांगंपू० । पूर्ववत्शृंगमूलयोःब्रह्मविष्णूपूजयामिइत्यादिदेवताः
संपूज्य । यालक्ष्मीःसर्वभूतेषुयाचदेवेष्ववस्थिता । धेनुरूपेणसादेवीतस्यपापंव्यपोहतु । इतिकंठेपुष्पमालांबध्नीयात् । ततोग
वेअलंकारान्दद्यात् । सुवर्णशृंगे । रजतखुरान् । ताम्रपृष्ठं । पुच्छेमौक्तिकं । कंठेघंटां । दोहनार्थंदोहनपात्रं । सर्वालंका
रार्थंयथाशक्तिद्रव्यं ॥ देवद्रुमरसोद्भूतंगोघृतेनसमन्वितं । प्रयच्छामिमहाभागेधूपंतेप्रतिगृह्यतां । धूपं । आनंदकृत्सर्वलो

केदेवानाचप्रियःसदा । गौस्त्वंपाहिजगद्वंद्येदीपोयंप्रतिगृह्यतां । दीपं । सुरभित्वंजगन्मातर्देविविष्णुपदेस्थिते । सर्वदेवम
येदेविमयादत्तमिमंग्रस । सौरभेय्यःसर्वहिताःपवित्राःपुण्यराशयः । प्रतिगृह्णंत्विमंग्रासंगावस्त्रैलोक्यमातरः । गोग्रासनै
वेद्यं । पूगीफलंतांबूलंफलंदक्षिणां । पंचगावःसमुत्पन्नामथ्यमानेमहार्णवे । तासांमध्येतुयानंदातस्यैदेव्यैनमोनमः । नम
स्कारं । गावस्तवाग्रतःसंतुगावस्तेसंतुपृष्ठतः । गावस्तेहृदयेनित्यंगवांमध्येवसस्त्वयं । प्रदक्षिणां । धेनुस्त्वंपृथिवीसर्वायस्मा
त्केशवसंनिभा । सर्वपापहरानित्यमतःशांतिंप्रयच्छतु । मंत्रपुष्पंसमर्प्यप्रार्थयेत् ॥ यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थिता ।
धेनुरूपेणसादेवीतस्यपापंव्यपोहतु । देहस्थायाचरुद्राणीशंकरस्यप्रियासदा । धेनुरूपेणसादेवीतस्यपापंव्यपोहतु । विष्णो
र्वक्षसियालक्ष्मीःस्वाहायाचविभावसोः । चंद्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाप्रिये । चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धनदस्यच ।
लक्ष्मीर्यालोकपालानांसाधेनुर्वरदास्तुते। स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांतथा। सर्वपापहराधेनुस्तस्माच्छांतिंप्रयच्छभोः।
इतिगांप्रार्थ्यअनेनपूजनेनगौःप्रीयतां । ततःसवत्सांगांप्राङ्मुखीमवस्थाप्यदातापुच्छदेशेबद्धशिखःप्राङ्मुखःसन् । प्रतिग्रही
तारंब्राह्मणंगोपुच्छदेशेउदङ्मुखमवस्थाप्य दातायथाशक्तिस्वर्णयुताज्यपूरितकांस्यपात्रेगोपुच्छंनिक्षिप्य सतिलेप्रागग्रेविप्रपा
णौघृतदिग्धंसतिलपुच्छंनिधायजलधारांपातयेत् । स्वस्त्यस्तुदीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु । यज्ञसाधनभूताया
विश्वस्याघौघनाशिनी । विश्वरूपधरोदेवःप्रीयतामनयागवा । प्रायश्चित्तेसमुत्पन्नेनिष्कृतिर्नकृताक्कचित् । तस्यपापस्यशु
द्ध्यर्थंधेनुमेतांददामिते । मयामत्पित्रावाजन्मप्रभृतिअद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणातंपातकापनो

दकामः प्रायश्चित्तत्वेनकल्पितांइमांकपिलांधेनुंरुद्रदैवत्यांसुवर्णशृंगींरौप्यखुरांताम्रपृष्ठांघंटाग्रैवेयकांमुक्तालांगूलांकांस्यदोहनिकांवस्त्रद्वयाभरणाद्युपस्करयुतां अमुकगोत्रस्यामुकप्रेतस्यपरलोकेसुखसिद्धयेअमुकगोत्रायामुकशर्मणेतुभ्यमहंसंप्रददेनमम प्रतिगृह्यतां । इतिवदेत् । प्रतिग्रहीतातुदेवस्यत्वा० भ्यांप्रतिगृह्णामीतिमंत्रेणप्रतिगृह्यस्वस्तीत्युक्त्वा कइदंकस्माअदादिति कामस्तुतिंयथाशाखंपठेत् । दाता । आगावोअग्मन्नुतभद्रमक्रन्त्सीदंतुगोष्ठेरणयंत्वस्मे । प्रजावतीःपुरुरूपाइहस्युरिंद्राय पूर्वीरुषसोदुहानाः । इतिमंत्रेणगांप्रदक्षिणीकृत्यदानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांतुभ्यमहंसंप्रददेनमम । ततोधेनुंकानिचित्पदानिअनुव्रज्यगोमतींपठेत् । गावःसुरभयोनित्यंगावोगुग्गुलुगंधिकाः । गावःप्रतिष्ठाभूतानांगावःस्वस्त्ययनंमहत् । अन्नमेवपरंगावोदेवानांहविरुत्तमं । पावनंसर्वभूतानांरक्षंतिचवहंतिच । हविषामंत्रपूतेनतर्पयंत्यमरान्दिवि । ऋषीणामपि होतॄणांगावोहोमेप्रतिष्ठिताः । सर्वेषामेवभूतानांगावःशरणमुत्तमं । गावःपवित्रंपरमंगावोमंगलमुत्तमं । गावःसर्वस्यभूतस्य गावोधन्याःसनातनाः । ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं । एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति । गावस्तमुपतिष्ठंतुहेमशृंग्यःपयोमुचः । सुरभ्यःसौरभेय्यश्चसरितःसागरंयथा । गावःपश्यंत्वमुंनित्यंगावःपश्यंतुनःसदा । गावश्चास्यह्यसौतासांयतोगावस्तमोह्ययं । ततःसोपस्करमामान्नंगोप्रतिगृहीत्रेब्राह्मणायतुभ्यमहंसंप्रददे । अनेनगोदानेनपापापहमहाविष्णुः प्रीयतांइत्युक्त्वाततोविष्णुंस्मृत्वाकर्मेश्वरार्पणंकुर्यां । इतिगोदानविधिः ॥ ॥ ॥ ॥

गोदानानि ॥ ॥ वैतरणीधेनुदानं ॥ तत्रोपकल्पनं । पाटलांकृष्णांवाहेमशृंगाद्युपेतांकृष्णवस्त्रयुगच्छन्नांसप्तधान्यसंयुक्तांछत्रोपानद्युगुलसंयुक्तांगांसंनिधाप्य द्रोणमितकार्पासशिखरेताम्रपात्रं तत्रमहिषारूढंदक्षिणवामकरधृतलोहदंडपाशंहैमंयमंस्थापयित्वा तदग्रेरक्तपट्टबंधेक्षुदंडनिर्मितनौकोपरितांधेनुंस्थापयित्वा तिथ्यादिसंकीर्त्य अमुकगोत्रस्यामुकप्रेतस्यदक्षिणयममहाद्वारवर्तिपूयशोणितकृमिकीटास्थिपाषाणकंटककर्दमाद्युपलक्षितशतयोजनविस्तीर्णवैतरणीनद्युत्तारणार्थंगोरोमतुल्येत्यादिपापापहमहाविष्णुप्रीत्यर्थंवैतरणीगोदानंकरिष्ये । ब्राह्मणंवृत्वातत्पूजनंकार्यं । अत्रयमपूजनं नौकापूजनं लवणाद्यष्टपर्वतसप्तधान्यघृतकुंभस्थापनंचाधिकंकार्यं । तत्प्रकारः । अद्येत्यादि०र्थंवैतरणीगोदानांगभूतंयमपूजनंनौकापूजनंचकरिष्ये । इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः । आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादयस्व । अस्यांलोहमयमूर्तौयमिन्यासहितंयममावाहयामि । यमिन्यासहितयमायनमःध्यायामि इत्यादिसर्वोपचारैःसंपूज्य । अनेनपूजनेनयमिन्यासहितोयमःप्रीयतां । ततोनौकापूजनं ॥ ॥ सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं । दैवींनावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तये । इमाꣳसुनावमारुहꣳशतारित्राꣳशतस्फ्यां । अच्छिद्रांपारयिष्णुं । भूर्भुवःस्वःलक्ष्मीरूपिण्यैनौकायैनमःध्यायामि । इत्यादिसंपूज्य । अनेनपूजनेनलक्ष्मीरूपिणीनौकाप्रीयतां । ततःपूर्वादिक्रमेणलवणाद्यष्टकुलाचलाःकार्याः लवणगुडकार्पासनवनीतसप्तधान्यतंडुलसुवर्णरत्नादिभिः । पश्चादीशान्यांवाद्वारमुत्सृजेत् । सप्तधान्यानितु व्रीहयोयवगोधूमतिलकंगुस्तथैवच । श्यामाकंमुद्गकंचैवसप्तधान्यमुदाहृतं । घृतकुंभंचतत्रस्थापयेत् ॥

अथगोःपूजनंनिर्दिष्टप्रकारेणकृत्वा ॥ विष्णुरूपद्विजश्रेष्ठभूदेवगतिपावन । ततुंवैतरणीमस्यकृष्णांगांप्रददाम्यहम् । धेनुकेत्वं प्रतीक्षस्वयमद्वारेमहापथे । उत्तितीर्षुरयंदेविवैतरण्यैनमोस्तुते । दानमंत्रः । यमद्वारपथेघोरेघोरावैतरणीनदी । तांततुंमस्यय च्छामिकृष्णांवैतरणींतुगाम् । ममपितुःयमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंइमांकृष्णांगांसवत्सांयमप्रतिमायुक्तांकृष्णव स्त्रयुगच्छन्नासप्तधान्ययुतांरक्तमाल्याद्यलंकृतां यथाशक्तिस्वर्णशृंगाद्युपस्करोपेतांकार्पासद्रोणशिखरांरुद्रदैवत्यांगोत्रायशर्म णेतुभ्यमहंसंप्रददेइतितिलजलकुशयुतंगोपुच्छंविप्रहस्तेदद्यात् ॥ ॥ पापक्षयधेनुदानं ॥ आजन्मोपार्जितंपापंमनोवाक्काय कर्मभिः । तत्सर्वंनाशमायातुपापधेनुप्रदानतः । ममपितुःमनोवाक्कायकर्मभिराजन्मोपार्जितपापापनोदनकामोहंइमांकृष्णां पापापनोदधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेतुभ्यंसंप्रददे ॥ ॥ ऋणधेनुदानं ॥ ममपितुःऐहिकामुष्मिक सप्तजन्मार्जितऋणपातकापाकरणार्थंगोदानंक० । ऐहिकामुष्मिकंयच्चसप्तजन्मार्जितंऋणं । तत्सर्वंशुद्धिमायातुगामेकांद दतस्तव । संकल्पवाक्यमुक्त्वाइमांगांइत्यादिपूर्ववत् ॥ ॥ मोक्षधेनुदानं ॥ मोक्षदोवासुदेवस्तुवेदशास्त्रेषुगीयते । तत्प्री तयेद्विजाग्र्यायमोक्षधेनुंददाम्यहम् । ममपितुःसमस्तपापक्षयपूर्वकसंसारमोक्षावाप्तिकामःश्रीपापापहमहाविष्णुप्रीतिकामश्च इमांमोक्षधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेसंप्रददेनमम ॥ इतिगोदानानि ॥ ॥ ॥

अथाश्वदानम् ॥ ॥ अद्येत्यादि० ममपितुर्वासमस्तपापक्षयपूर्वकमश्वरोमसंख्याकाब्दसूर्यलोकनिवासाप्तिकामःयथा शक्तिसोपस्करमश्वदानंकरिष्ये इतिसंकल्प्य अश्वप्रतिग्रहीतारंयथाविभवंसंपूज्य । उच्चैःश्रवःकुलीनायसूर्यरूपिणेश्वायनमः

इतिनाममंत्रेणाश्वंसंपूज्य तदलंकारादिभिरलंकृत्य भक्ष्यधान्यंनिवेद्यप्रदक्षिणीकृत्यनत्वा अश्वकर्णंधृत्वादद्यात् ।उच्चैःश्रवास्त्वमश्वानांराज्ञांविजयकारक । सूर्यवाहनमस्तुभ्यमतःशांतिंप्रयच्छमे । महार्णवसमुत्पन्नउच्चैःश्रवसपुत्रक । मयात्वंविप्रमुख्यायदत्तोहयसुखीभव । इमंविप्रनमस्तुभ्यमश्वंतेप्रतिपादितम् । प्रतिगृह्णीष्वविप्रेंद्रमयादत्तंसुशोभनं । इतिदानमंत्रमुच्चार्य इममश्वंसुवर्णतिलकालंकारयुतंललाटग्रैवेयकादियुतंचगंधपुष्पाद्यर्चितंसूर्ययमदैवतं ममपितुःब्रह्महत्यादिसमस्तपापनाशकामोहयरोमसमसंख्याकाब्दसूर्यलोकनिवासकामश्चगोत्रायशर्मणेतुभ्यमहंसंप्रददेनमम । सांगतासिद्ध्यर्थेदक्षिणांदद्यात् । अनेनाश्वदानाख्येनकर्मणाप्रेतोद्धर्तामहाविष्णुःप्रीयतां ॥ इत्यश्वदानम् ॥ ॥ ॥ ॥

अथशय्यादानम्॥ ॥गोमयोपलिप्तभूमौश्वेतरजसाष्टदलंविरच्यतत्कर्णिकायांतिलप्रस्थंनिक्षिप्य तस्मिन्दारुमयींस्वास्तीर्णाद्युपस्करयुतांशय्यामास्तीर्यतस्याःसमंतादीशानादिकोणचतुष्टयेशिरोभागेचपंचकुंभान्क्रमात् घृतकुंकुमगोधूमजलपूर्णान् ४ उच्छीर्षेघृतपूर्णकलशं १ सप्तधान्यानिचसंस्थाप्य अद्येत्यादि० पित्रादेःसमस्तपापक्षयपूर्वकाप्सरोगणसेव्ययुतविमानकरणकेंद्रपुरगमनोत्तरषष्टिसहस्रवर्षाधिकरणकक्रीडनस्त्रीसंघसमावृतस्वर्गलोकमहितत्वतदुत्तरषष्टियोजनमंडलराज्यभोगानंतरशिवसायुज्यावाप्तिकामःशय्यादानमहंकरिष्ये तदंगत्वेनब्राह्मणवरणंतत्पूजनं शय्यायांसुवर्णनिर्मितप्रतिमायांप्रेत[1]पूजनंचक० । इतिसंकल्प्य । गोत्रोच्चारपूर्वगोविंदशर्माणंब्राह्मणंशय्याप्रतिग्रहीतारंत्वांवृणे इतिवृत्वासपत्नीकंविप्रंपाणौधृत्वाशय्यायामुप

१ जीवतास्वतःशय्यादानकरणेप्रेतशब्दवर्ज्यंसर्वंप्रकृतिवत् । प्रेतप्रतिमास्थानेलक्ष्मीनारायणप्रतिमेतिविशेषः ।

वेश्य विधिवत्पूजयित्वा वस्त्रालंकारोष्णीषादितस्मैदद्यात् । तत्पुरतःप्रेतप्रतिमाचाग्न्युत्तारणपूर्वकंकृतप्राणप्रतिष्ठांस्थापयित्वा । अस्यांस्वर्णमयमूर्तौगोविंदप्रेतायनमःगोविंदप्रेतमावाहयामिइत्यावाह्य नाममंत्रेणसंपूज्य नमःप्रमाण्यैदेव्ये इतिमंत्रेणप्रदक्षिणाचतुष्टयंप्रतिदिशंनमस्कारचतुष्टयंचकृत्वा ब्राह्मणहस्तेशय्यांप्रतिपादयेत् । स्वस्त्यस्त्वित्यादि । दानमंत्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया । तथैतस्याप्यशून्यास्तुशय्याजन्मनिजन्मनि । इति । पितुःसर्वपापक्षयेत्यादिसंकल्पवाक्यमुक्त्वाशिवसायुज्यावाप्तिकामोगोत्रायशर्मणेसुपूजितायइमांशय्यांईशानादिकोणचतुष्टयस्थापितघृतकुंकुमगोधूमजलपूर्णपात्रयुतांउच्छीर्षप्रदेशेस्थापितघृतपूर्णकलशांहंसतूलीप्रच्छन्नांशुभगंडोपधानिकांप्रच्छादनपटास्तृतांसप्तधान्ययुतांसतांबूलोपकरणादर्शकुंकुमक्षोदकर्पूरसुगंधपरिमलभोग्यवस्तुचंदनागरुदीपिकोपानच्छत्रचामरासनयुतांभोजनभाजनजलपात्रपंचवर्णवितानकेशप्रसाधन्यंजनशलाकापुष्पमालायुतां प्रेतप्रतिमासहितांयुक्तोपस्करामंगिरोदैवत्यांगोत्रायशर्मणेसुपूजितायसालंकृतायसपत्नीकायतुभ्यमहंसंप्रददेनममेति शय्योपवेशितविप्रहस्तेसाक्षतकुशोदकंक्षिपेत् । तस्मैसुवर्णमेवदक्षिणांदद्यात् । ततोब्राह्मणेभ्योभूयसींदद्यात् ॥ ॥ इतिशय्यादानम् ॥ ॥ ॥ ॥

## भूम्यादिदानानि ॥ ॥ प्रत्यक्षभूदानं ॥

सागोचर्ममिताधिकावादेया । दशहस्तेनदंडेनात्रिंशद्दंडानिवर्तनं । त्रिभागहीनंगोचर्ममानमाहप्रजापतिः । अद्येत्यादिपितुःसर्वपापक्षयपूर्वकंषष्टिसहस्रवर्षस्वर्गनिवासोत्तरंशिवपुरनिवासार्थंभूदानंक०। विप्रंवृत्वासंपूज्य। सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता। अनंतसस्यफलदाअतःशांतिं०। यस्यांरोहंतिबीजानिवर्पाका

लेमहीतले । भूमेःप्रदानात्सकलास्तस्यसंतुमनोरथाः । इमांभूमिंवृक्षाद्युपेतांसस्योद्भवांविष्णुदैवत्यांसंकल्पहेतवेसंप्रददे ॥ ॥
पददानम् ॥ तत्रादौपदलक्षणम् । आसनोपानहौछत्रंमुद्रिकाचकमंडलुः । भोजनंभोजनाधारोवस्त्राण्यष्टविधंपदं । भाज
नासनदानेनमुद्रिकाभोजनेनच । आज्ययज्ञोपवीतेनपदंसंपूर्णतांव्रजेत् । अथवा—आसनोपानहौछत्रंमुद्रिकाचकमंडलुः ।
यज्ञोपवीताज्येवस्त्रंभोजनंचान्नभाजनं । दशकंपदमेतत्स्यात्पदान्येवंत्रयोदश । देयानिवायथाशक्तितेनासौप्रीणितोभवेत् ।
पित्रादेःमार्गकष्टपरिहारपूर्वकमुत्तमलोकावाप्तयेतृप्त्यर्थंचपददानंक० । त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे । पददानेनतु
ष्यस्वप्रयच्छतस्यवांछितं । संकल्पवाक्यांतेइदंयथाशक्तिआसनादिदशोपकरणसमूहात्मकंपदंतृतीयांशदक्षिणायुतंतुभ्यंसं
प्रददे ॥ ॥ शालग्रामदानम् ॥ अमुकस्य सशैलवनभूचक्रदानसमफलावाप्त्यर्थंशालग्रामदानं० । महाकोशनिवासेनश
क्राद्यैरुपशोभितः । शालग्रामप्रदानेनतस्यपापंव्यपोहतु ॥ ॥ वाणलिंगदानम् ॥ अमुकस्यशिवलोकनिवासशिवसायुज्य
सिद्धयेवाणलिंगदानं० । कैलासवासीगौरीशोभगवान्भूतभावभृत् । चराचरात्मकोलिंगरूपीदिशतुवांछितम् ॥ ॥ रुद्राक्ष
मालादानम् ॥ अमुकस्यशिवसायुज्यतावाप्तयेरुद्राक्षमालादानं० । अष्टाविंशतिसंख्याकैरुद्राक्षैर्योजितामया । अर्पितात
वहस्तेचगृहाणद्विजसत्तम ॥ ॥ पुस्तकदानं ॥ अमुकस्यगोदानसमफलावाप्तिस्वर्गलोकनिवासविद्याविशारदत्वसिद्धयेस
रस्वतीप्रीतयेचपुस्तकदानं० । विद्यानांसर्वयज्ञानांकारणंलिखिताक्षरं । पुस्तकस्यप्रदानेनतस्यप्रीणातुभारती । संकल्पवाक्ये

नद्यात् ॥ ॥ यज्ञोपवीतदानम् ॥ अमुकस्यजन्मजन्मनिब्राह्मणजन्मप्राप्तयेयज्ञोपवीतदानं० । ब्रह्मसूत्रंपरंदिव्यंमया यत्नेननिर्मितम् । ब्राह्मजन्मास्तुप्रेतस्यब्रह्मसूत्रसमर्पणात् । इतिभूम्यादिदानानि ॥ ॥ ॥

अथसपिंडीकरणम् ॥ ॥ तत्कालःकालादर्शे—एकादशेद्वादशेह्नित्रिपक्षेवात्रिमासिके । षष्ठेवैकादशेवाब्देसंपूर्णेवा शुभागमे । सपिंडीकरणस्याष्टाविमेकालाःप्रकीर्तिताः । साग्नौकर्तयुभावाद्यौप्रेतेसाग्नौतृतीयके । अनग्नेस्तुद्वितीयाद्याःसप्त कालामुनीरिताः । खादिरगृह्येपि—वत्सरेपूर्णेषण्मासेत्रिमासेद्विमासेएकमासेऽर्धमासेद्वादशरात्रेवेति । एवमनेककालत्वे प्याहिताग्निभिन्नानांद्वादशाहएवकार्यं अनित्यत्वाच्छरीरस्य। आनंत्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् । अस्थिरत्वाच्छ रीरस्यद्वादशाहःप्रशस्यते ॥ पूर्वेद्युःविश्वेदेवार्थविप्रद्वयंप्रेतार्थमेकःपार्वणार्थत्रयइतिषट्र् । अशक्तौदेवार्थप्रेतार्थपार्वणार्थप्रत्येक मेकैकइतित्रयंवानिमंत्रयेत् । निमंत्रणकर्तुस्तेषांचब्रह्मचर्यं । अपरेद्युर्ब्राह्मणानांश्मश्रुकर्माभ्यंगादिकारयित्वाकृतमाध्याह्निकः आचम्यपवित्रंतेइतिपवित्रादिधृत्वा ऊर्ध्वकेशि० अपक्रामंतु० । प्राणानायम्यदेशकालौसंकीर्त्य कामकालसंज्ञकानांविश्वेषां देवानां प्राचीनावीती भारद्वाजगोत्रस्यअमुकप्रेतस्यप्रेतत्वनिवृत्त्यापितृलोकप्राप्त्यर्थं भारद्वाजगोत्रैःकृष्णविष्णुमहादेवश र्मभिःवसुरुद्रादित्यस्वरूपैःप्रेतपितृपितामहप्रपितामहैःसहसपिंडीकरणं सव्यं मृताहाद्द्वादशेह्निपार्वणैकोद्दिष्टेनविधिनाक रिष्येइतिसंकल्प्य (मातरितुअमुकगोत्रायाअमुकप्रेतायाः भारद्वाजगोत्राभिःअस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिर्व सुरुद्रादित्यस्वरूपाभिःसहसपिंडी० इति । एवंभ्रात्रादिसपिंडनेप्यूह्यं ) तदंगयवतिलोदकंतूष्णींप्रेतोदकंवैश्वदेवसूक्त

जपमार्जनब्रह्मदंडादि । अपसव्यं । अक्रोधनैःशौचपरैः० । अद्यतिथौसपिंडीकरणश्राद्धंकर्तुममाधिकारसंपदस्त्वितिभवंतो ब्रुवंतु । सव्यं । कालोयंमुख्यःकालोस्तु । क्षणादिकरिष्ये । अपोदत्वा कामकालसंज्ञकविश्वेदेवार्थंत्वयाक्षणःकरणीयः । एवंद्वितीये । अपसव्यंप्रेतार्थंक्षणउपतिष्ठतां । प्रेतस्यपित्रर्थंत्वयाक्षणःकरणीयः । एवंपितामहार्थप्रपितामहार्थंच । सव्यं सर्वेषांस्वागतं । ( स्मृत्युक्तकरणपक्षेतुसर्वेषांपादप्रक्षालनं । मंडलानिकृत्वाउत्तरेविश्वेदेवमंडलंचतुष्कोणं । दक्षिणेप्रेतमंडलंत्रिकोणं । ततोपिदक्षिणेपितामहादिमंडलंवर्तुलं । पाद्यस्थानेगंध० सर्वे० संतु । कामकालसंज्ञकविश्वेदेवाःइदंवःपाद्यं । शंनोदेवी० । अपसव्यं । अमुकगोत्रअमुकशर्मन्प्रेतइदंतेपाद्यमुपतिष्ठतां । प्रेतपितृपितामहप्रपितामहाःशर्माणःगोत्राःवसुरु० इदंवःपाद्यं । सव्यं । शंनोदेवी० । अप० । पृथक्पक्षेप्रेतपितःशर्मन्गोत्रवसुरूपइदंतेपाद्यं एवंप्रेतपितामह० । प्रेतप्रपितामह० इत्यादि । ततःकर्ताब्राह्मणानाचमय्यस्वयमाचम्यपवित्रेधृत्वादेवानुपवेशयित्वा ) देवाःसमाध्वं । प्राचीनावीती । प्रेतसमास्व । प्रेतपित्रादयःसमाध्वं । उपक्रांतंसपिंडीकरणश्राद्धंकरिष्ये । शंनोदेवी० यवोसियवया० । प्रेतस्थानेतूष्णीं । पार्वणस्थानेशंनोदेवी० । उदीरता० । तिलारक्षंत्व० । रक्षोहणं० अष्टौवसव० । पाकप्रोक्षणं० । आगच्छंतुमहाभागा० । श्राद्धभूमौ० । सव्यं कामकालसं० देवानांब्रह्मणेइदमासनंइत्यादिमंत्रवदर्घ्यासादनावाहनार्घ्यदानगंधपुष्पधूपदीपाच्छादनांतार्चनंप्रकृतिवत् । अपसव्यं । सपिंडीकरणश्राद्धेप्रेतस्थानेक्षणउपतिष्ठतां । पार्वणेपित्र्येक्षणःक्रियतां । ॐ तथा । प्राप्नोतु भवान् । ततोमुकगोत्रस्यामुकप्रेतस्येदमासनं । ततःपार्वणस्थत्रयेअपोदत्वा अमुकशर्मणांगोत्राणामित्यादिषष्ठ्यासनंदत्वा

प्रेतार्थमेकमर्घ्यपात्रमासाद्य तत्पूर्वतःपार्वणार्थपात्रत्रयमाग्नेयीसंस्थंचासाद्य प्रेतपात्रेदर्भचतुष्टयंनिधाय पार्वणपात्रेषुप्रत्येकं कुशत्रयंनिधाय पात्रचतुष्टयेप्यपआसिच्य पितृपात्राणि शंनोदेवीतिसकृदनुमंत्र्य । प्रेतपात्रे तिलोसिसोम० प्रत्नवद्भिःप्रत्तः प्रेतेमांल्लोकान्प्रीणयाहिनःइतितिलान्प्रक्षिप्य पार्वणपात्रेषुप्रकृतिवत्प्रक्षिप्य सर्वत्रगंधादिक्षिप्त्वा सर्वेउपचारास्तिलैःसंपूर्णाः संतु । प्रेतादीनावाहयिष्ये । अमुकगोत्रममुकप्रेतंआवाहयामि । प्रेतपितृपितामहप्रपितामहान्शर्मणःगोत्रान्वसु० आवाह यिष्ये । उशंतस्त्वा०पि । प्रेतपात्रंतूष्णींनिवेद्य पित्रादिपात्राणिसंपन्नानिस्वधाअर्घ्याःइतिप्रत्येकंनिवेदयेत् । ततःप्रेतपात्रस्थमेकं कुशंप्रेतस्थानीयब्राह्मणहस्तेदत्वा प्रेतपात्रस्थजलैकदेशमादाय अमुकगोत्रामुकप्रेतेदंतेर्घ्यमुपतिष्ठतांइत्यर्घ्यंदत्वा । भारद्वाज गोत्रामुकप्रेतपात्रोदकं भारद्वाजगोत्राणांकृष्णविष्णुमहादेवशर्मणांवसुरुद्रादित्यस्वरूपाणां प्रेतपितृपितामहप्रपितामहाना मर्घ्यपात्रोदकेनसंयोजयिष्ये । संयोजयेत्युक्ते । प्रेतपात्रस्थंकुशत्रयंपित्रादिपात्रत्रयेदत्वा प्रेतार्घ्यपात्रस्थजलंवक्ष्यमाणमंत्रैः किंचित्किंचित्संयोजयेत् । प्रतिसंयोजनंमंत्रावृत्तिः । येसमानाःसमनसःपितरोयमराज्ये । तेषांलोकःस्वधानमोयज्ञोयज्ञेषु कल्पतां । येसजाताःसमनसोजीवाजीवेषुमामकाः । तेषांश्रीर्मयिकल्पतामस्मिँल्लोकेशतंसमाः । संगच्छध्वंसंवदध्वंसंवोमनां सिजानतां । देवाभागंयथापूर्वेसंजानानाउपासते । समानोमंत्रःसमितिःसमानीसमानंमनःसहचित्तमेषां । समानंमंत्रमभि मंत्रयेवःसमानेनवोहविषाजुहोमि । समानीवआकूतिःसमानाहृदयानिवः । समानमस्तुवोमनोयथावःसुसहासति । एता न्मंत्रानुक्त्वा भारद्वाजगोत्रशिवप्रेत भारद्वाजगोत्रेणकृष्णशर्मणावसुरूपेणस्वपित्रासहसंसृजस्वेत्युक्त्वा हस्तेगृहीत

जलंप्रेतपितृपात्रस्थोदकेसंयोजयेत् । पुनःप्रेतार्घ्यपात्रस्थमुदकंकिंचिद्गृहीत्वा येसमानाइत्यादिमंत्रान्पठित्वा भारद्वाजगोत्र शिवप्रेत—भारद्वाजगोत्रेणविष्णुशर्मणारुद्ररूपेणस्वपितामहेनसहसंसृजस्वेत्युक्त्वा तज्जलंप्रेतपितामहपात्रेसंयोजयेत् । ततःप्रेतपात्रस्थोदकंसर्वंगृहीत्वा येसमानाइत्यादिमंत्रानुच्चार्य भारद्वाजगोत्रशिवप्रेत भारद्वाजगोत्रेणमहादेवशर्मणाआदित्यरूपेणस्वप्रपितामहेनसहसंसृजस्वेत्युक्त्वा हस्तस्थजलंप्रेतप्रपितामहपात्रेसंयोजयेत् । (मातरितुभारद्वाजगोत्र गंगाप्रेतपात्रोदकं भारद्वाजगोत्राणांकृष्णावेणीनर्मदादानांप्रेतभर्तृमातृपितामहीप्रपितामहीनांवस्वादिरूपाणामर्घ्यपात्रोदकैः संयोजयिष्ये । पूर्ववत्त्रिषुकुशनिधानांते प्रेतपात्रजलैकदेशमादाय येसमानाइत्यादिमंत्रान्पठित्वा भारद्वाजगोत्रेगंगाप्रेते भारद्वाजगोत्रयाकृष्णादयावसुरूपयास्वश्वश्वासहसंसृजस्वेत्युक्त्वा हस्तस्थजलंभर्तृमातृपात्रेसंयोज्य पुनर्जलमादाययेसमानाइत्यादिमंत्रांते भारद्वाजगोत्रेगंगाप्रेते भारद्वाजगोत्रयावेणीदयारुद्ररूपयास्वभर्तृपितामह्यासहसंसृजस्वेत्युक्त्वा हस्तस्थजलंतत्पात्रेसंयोज्य प्रेतपात्रस्थंसर्वंजलंगृहीत्वायेसमानाइत्यादिमंत्रपाठांते भारद्वाजगोत्रेगंगाप्रेते भारद्वाजगोत्रयानर्मदादयाआदित्यरूपयास्वभर्तृप्रपितामह्यासहसंसृजस्वेत्युक्त्वा हस्तस्थमुदकंतत्पात्रेसंयोजयेत् । भ्रात्रादिसंयोजनेप्येवमेवोह्यं) । सव्यं । ततःप्रेतपितरिदंतेर्घ्यं । प्रेतपितामहेदंतेर्घ्यं० । प्रेतप्रपितामहेदंतेर्घ्यं० । यादिव्याआपः० । इदमर्घ्यं दत्तंनमम । ततःपितृभ्यःस्थानमसीतिस्थानमसिप्रणीतांप्रतिष्ठापयेत् । अपसव्यं । भारद्वाजगोत्रामुकप्रेतसपिंडीकरणश्राद्धे गंधमुपतिष्ठतांमाल्यंआच्छादनमुपतिष्ठतामितिप्रेतेदत्वा । प्रेतपितृपितामहप्रपितामहाःशर्माणःगोत्राःरूपाः यथाभागशः

अमीवोगंधाःइत्यादि संबुध्यापार्वणवदाच्छादनांतंकुर्यात् । पृथक्पूजापक्षे प्रेतपितःशर्मन्गोत्र० प्रेतपितामह० प्रेतप्रपितामह० गंधाःइत्यादिसंपूज्य । सव्यं । मंडलादि । चतुरस्रत्रिकोणवर्तुलानिमंडलानियथायथंकृत्वा । अपसव्यं । पिशंगभृष्टि० । सव्यं । रक्षाणोअग्ने० । इतिभस्मनामंडलानिकृत्वा । मूर्धानंदिवो० घृतमभिघार्य । करशुद्धिः० । ततो भवत्स्वेवभवदनुज्ञयाग्नौकरणंकरिष्यइतिसंकल्प्य । अपसव्यं । प्रेतस्थानेग्नौकरणंकृताकृतं । करणपक्षेभोजनार्थादन्नादुद्धृत्यघृताक्तंकृत्वा अमुकगोत्रायामुकशर्मणेप्रेतायस्वाहेत्येकामाहुतिंप्रेतस्थविप्रकरेहुत्वातदन्नंवह्नौप्रक्षिप्य । पात्रांतरेसघृतमन्नमादायद्विधाविभज्यपार्वणस्थब्राह्मणकरेषुसोमायपितृमते० । अग्नयेकव्यवाहनाय० इत्यग्नौकरणंकृत्वा । ततोन्नंघृताभिघारपूर्वंपात्रेषुपरिविष्य पृथिवीतेपात्रमित्यादि कामकालसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःइदमन्नमित्यादिप्रकृतिवत् । प्रेतपात्रेतूष्णीं परिषिच्यअमुकगोत्रायामुकप्रेतायेदमन्नंसोपस्करममृतरूपमुपतिष्ठतामितिनिवेद्य । पित्राद्युपविष्टस्थले पृथिवीतेइत्यादिप्रेतपितृपितामहप्रपितामहेभ्यःअ० शर्मभ्योगोत्रेभ्यःइत्यादि । पृथक्पक्षेप्रेतपित्रेशर्मणेगोत्रायइदमन्नंइत्यादि । ब्रह्मार्पणं० ईशान विष्णु० एकोविष्णु० । ततस्तृप्तेषुकामकालविश्वेदेवाःतृप्ताःस्थ । प्रेतस्थानेस्वदितमितिप्रश्नःसुस्वदितं । पित्रादौप्रकृतिवत् । उच्छिष्टसमीपेप्रोक्ष्यपिंडार्थमेकंदर्भंनिधाय तत्रशुंधंतांप्रेताइत्युदकंनिनीय अमुकगोत्रायामुकप्रेतायसपिंडी० अयंतेपिंडउप

१ पिंडप्रमाणं—प्रत्यब्देविल्वमात्रंतदधिकपृथुलंद्वादशाहात्सपिंडीकृत्येतद्द्वादशाहेत्वतिपृथुलमतोनिर्वपेत्पिंडमेकं । पर्वण्युच्चैःकपित्थामलबदरशमीपत्रकैःकुक्कुटांडैस्तुल्यान्छक्त्याप्रदद्यादितरकरयुजापाणिनादक्षिणेन । इति ॥

तिष्ठतामितिमहांतंपिंडंदत्वा तद्दक्षिणतःपश्चिमतोवाअपहतेत्यादिशुंधनांतंकृत्वापार्वणवत्प्रेतपित्रादिभ्यःपिंडत्रयंदद्यात् । प्रेतपिंडेअनुमंत्रणांजनाभ्यंजनादिसर्वंतूष्णींकृत्वातिलोदकगंधपुष्पभृंगराजाद्युपचारान्समर्प्य अमुकशर्मणःप्रेतस्ययद्दत्तंसपिंडीकरणश्राद्धीयमन्नोदकादितदक्षय्यमुपतिष्ठतामित्युक्त्वाविशिष्टदक्षिणांदत्वा अभिरम्यतामितिविसर्जयेत् । सहैववादक्षिणाविसर्जनेभवेतां । ततःअमुकगोत्रस्यामुकप्रेतस्यापिंडंपित्रादिपिंडैःसहसंयोजयिष्ये इतिपृष्ट्वासंयोजयस्वेतिद्विजैःप्रत्युक्तःकर्ता मधुवाताइतितृचेनकुशरज्ज्वा प्रेतपिंडंत्रिधाविभज्य तदवयवत्रयंत्रिषुपिंडेषुयोजयेदेभिर्मंत्रैः । येसमानाः० येसजाताः० संगच्छध्वं० समानोमंत्रः० समानीवआकूतिः० इतिपंचपूर्वोक्तान्मधुवाताइतितृचंचोक्त्वा । अमुकगोत्रअमुकप्रेत अमुकशर्मणास्वपित्रासंसृजस्वेति प्रेतपिंडप्रथमभागंतत्पितृपिंडेसंयोज्यदधिमधुभ्यांमिश्रीकुर्यात् । येसमानाइत्यादिमधुवाताइत्यादितृचमुक्त्वा अमुकगोत्रामुकप्रेत अ० गोत्रेणशर्मणास्वपितामहेनसंसृजस्व इतिद्वितीयभागं । पुनर्येसमानाइत्यादिअमुकगोत्रामुकप्रेत अमुकगोत्रेणशर्मणास्वप्रपितामहेनसंसृजस्वइतितृतीयभागंसंयोजयेत् । ततःसंयोजितांस्त्रीन्पिंडानिदानींमृतमारभ्यपुरुषत्रयायपार्वणवत्पुनरपिनामगोत्राद्युच्चार्यदद्यात् । एतत्तेअस्मत्पितः अमुकशर्मन्नमुकगोत्रवसुरूपयेच त्वामत्रानु० इत्यादिपिंडोपस्थानांतंकृत्वा । मोक्षधेनुंदद्यात् । देशकालौ० अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणांअग्निकव्यवाहनादिपितृलोकप्राप्तानांशाश्वतमोक्षप्राप्त्यर्थंमोक्षधेनुदानंक० । दानमंत्रः । सुरभित्वत्प्रसादेनजन्मसंसारबंधनात् । निर्मुक्तःपितृलोकस्थःशाश्वतंमोक्षमाप्नुयात् । इमांगांइत्यादि कूर्मभट्टेनोक्तं । परेतनपितरः० इत्यं

तंकृत्वा । द्वादशदिनपर्यंतंधारितमुत्तरीयंपिंडोपरिदद्यात् तच्चाचार्योगृह्णीयात् । अवयवपिंडार्थास्थालीचाचार्यायदेया । ततः । एषवोनुगतःप्रेतःपितृभागमवाप्तवान् । शुभंभवतुशेषाणांजायंतांचिरजीविनः । इतिमंत्रंपठेत् । ततोविकिरद्वयं । उच्छिष्टपिंडोदेयः । वरयाचनतांबूलदक्षिणादि ॐ स्वधोच्यतामित्यादिविसर्जनांतंपार्वणवत् । स्मृत्युक्तसंकल्पेतुशिवाआपःसंत्वित्यादिसर्वंज्ञेयं । प्रेतस्थानेअन्यविप्राद्द्विगुणदक्षिणांदद्यात् । आसीमांतमनुव्रज्यपिंडान्गंगादौप्रक्षिप्यस्नात्वागृहमागत्यवैश्वदेवादिकंकुर्यात् ॥ इतिसपिंडीकरणम् ॥ ॥ ॥ ॥

अथपाथेयश्राद्धम् ॥ ॥ अथद्वादशेत्रयोदशेवाह्नितिथ्यादिस्मृत्वापुरूरवार्द्रवसं० प्राचीनावीती अमुकगोत्रस्यामुकशर्मणःप्रेतलोकात्पितृलोकगमनेसुखसिद्ध्यर्थं अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणां । सव्यं । पाथेयश्राद्धंसदैवंसपिंडंसाग्नौकरणंपार्वणविधिनाआमेनहविषासद्यःकरिष्येइतिसंकल्प्य तिलोदकंकृत्वा । पुरूरवा० देवस्थानेक्षणंदत्वाभ० व्यः । अपस० पितृपितामहप्रपितामहस्थानेक्षणं० व्यः । सव्यं । सर्वेषांस्वागतं । देवाः समाध्वं । अपस० । पित्रादयःसमाध्वं । समा० । उपक्रांतंपाथेयश्राद्धंकरिष्ये । अ० । श्राद्धस्यकर्मणः । सव्यं० । विश्वेषांदे० । अपहता० प्रत्यग्ने० । उदीर० । आमंप्रोक्ष्य । आगच्छंतु० । अप० । श्राद्धभूमौ० । सव्यं । पुरू० णांइदमासनं अत्रास्यतां । पाथेयश्राद्धेदैवेक्षणःक्रियतां । अर्घ्यमासाद्यप्रोक्ष्य उद्धृत्य प्रोक्ष्य । इदमर्घ्यंदत्तंनमम । पुरू० देवाः गंधादि आच्छादनांतं प्रत्युपचारंस्वाहानमः । युवासुवासा० । पित्राद्यर्चनंक० । अपसव्यं । पितृपितामह० इदमासनं अत्रा

स्यतां । पाथेयश्राद्धेपित्र्येक्षणःक्रियतां । अर्घ्यमासाद्य० आवाहनमंत्रे उशंतस्त्वा० हविषेस्वीकर्तवेइतिकार्यऊहः । पितरिदंतेअर्घ्यमित्यादिप्रत्येकंदत्वा । स्थानमसिप्रच्छाद्य । पितृपितामहप्रपितामहाःशर्माणःगोत्राःवसुरु० गंधादिआच्छादनांतंस्वधानमः । इदंपितृभ्यो० । मंडलकरणभस्ममर्यादांतं० । अवदानधर्मेणतंडुलानवदायाग्नौकरणं । आमंपात्रेषुसंस्थाप्य । पुरू० विश्वेभ्योदेवेभ्यःइदमामंसोपस्करममृतरूपेणस्वाहा । एवंपितृपितामहप्रपितामहेभ्यःइदमामं० । सव्यं । पाथेयश्राद्धंसंपन्नं । पाथेयश्राद्धेपिंडप्रदानंकरिष्ये । सक्तुपिंडान्दत्वासंपूज्य । उपस्थानमंत्रे । नमोवःपितरआमद्रव्याय नमोवःपितरऊर्जे० । देवान्पितॄन्सहैवविसर्जयिष्ये । वाजेवाजे० मादयध्वंतर्प्यथयातपथिभिर्देवयानैः । उत्तिष्ठंतुपितरः० । प्रमादात्० । यथासुखंजुषध्वमित्यस्यापोशनप्राणाहुतितृप्तिप्रश्नानांचलोपः । संपन्नवाचनांतेन्नशेषप्रश्नलोपः । सर्वमतेतंडुलसक्तुपिंडदानं । केचिद्गृहसिद्धान्नेनपायसेनवापिंडानाहुः । इतिपाथेयश्राद्धम् ॥

अथत्रयोदशदिनविधिः ॥ ॥ ततःकर्ताअभ्यंगस्नानंकृत्वाआचम्यदेशकालौस्मृत्वा ममसपरिवारस्यसकलारिष्टोपशांतयेक्षेमायुःसिद्ध्यर्थश्रीपरमेश्वरप्रीत्यर्थंगणेशपूजनपूर्वकंस्वस्तिवाचनंकरिष्येइतिसंकल्प्य गणपतिंसंपूज्य महीद्यौरित्यादिकलशंसंस्थाप्यसंपूज्य मह्यंसहकुटुंबिने० अस्यकर्मणःपुण्याहंभवंतो० एवंअस्यकर्मणेस्वस्ति इत्यादियथाशाखंस्वस्त्ययनंवाचयित्वाशांतिसूक्तानिनिधनसूक्तानिजपेयुः । आनोभद्रा० वर्ग० १ स्वस्तिनो० वर्गौ २ शंनइंद्राग्नी० वर्गाः० ३ शंवतीःपा० वर्गः १ आशुःशिशानो० वर्गाः ३ मुंचामित्वा० वर्गः १ त्यमुषुवाजिनं० वर्गः १ महित्रीणाम० वर्गः १ ॥ ईळेद्यावापृथि

वीपूर्वचित्तयेनिधमसुरुचंयामन्निष्टये । याभिर्भरेकारमंशायजिन्वथस्ताभिरूषुऊतिभिरश्विनागतम् । युवोर्दानायसुभराअ
सश्चतोरथमातस्थुर्वचसंनमंतवे । याभिर्धियोवथःकर्मन्निष्टयेताभिरूषुऊतिभिरश्विनागतम् । युवंतासांदिव्यस्यप्रशासनेवि
शांक्षयथोअमृतस्यमज्मना । याभिर्धेनुमस्वं1 पिन्वथोनरातांभिरूषुऊतिभिरश्विनागतम् । याभिःपरिज्मातनयस्यमज्मना
द्विमातातूर्षुतरणिर्विभूषति । याभिस्त्रिमंतुरभवद्विचक्षणस्ताभिरूषुऊतिभिरश्विनागतम् । याभीरेभंनिवृतंसितमद्भ्यउद्वं
दनमैरयतंस्वर्दृशे । याभिःकण्वंप्रसिषासंतमावतंताभिरूषुऊतिभिरश्विनागतं ॥ १ ॥ याभिरंतकंजसमानमारणेभुज्युंयाभि
रव्यथिभिर्जिजिन्वथुः । याभिःकर्कधुंवय्यंचजिन्वथस्ताभिरूषुऊतिभिरश्विनागतं । याभिःशुचंतिंधनसांसुषंसदंतप्तंघर्म
मोम्यावंतमत्रये । याभिःपृश्निगुंपुरुकुत्समावतंताभिरूषुऊतिभिरश्विनागतं । याभिःशचीभिर्वृषणापरावृजंप्रांधंश्रोणंचक्षस
एतवेकृथः । याभिर्वर्तिकांग्रसितामुंचतंताभिरूषुऊतिभिरश्विनागतं । याभिःसिंधुंमधुमंतमसश्चतंवसिष्ठंयाभिरजरावजि
न्वतं । याभिःकुत्संश्रुतर्यंनर्यमावतंताभिरूषुऊतिभिरश्विनागतं । याभिर्विश्पलांधनसामथर्व्यंसहस्रमीळ्हआजावजिन्वतं ।
याभिर्वशमश्व्यंप्रेणिमावतंताभिरूषुऊतिभिरश्विनागतं ॥ २ ॥ याभिःसुदानूऔशिजायवणिजेदीर्घश्रवसेमधुकोशोअक्षरत् ।
कक्षीवंतंस्तोतारंयाभिरावतंताभिरूषुऊतिभिरश्विनागतं । याभीरसांक्षोदसोद्नःपिपिन्वथुरनश्वंयाभीरथमावतंजिषे । याभि
स्त्रिशोकउस्रियाउदाजततताभिरूषुऊतिभिरश्विनागतं । याभिःसूर्यंपरियाथःपरावतिमंधातारंक्षैत्रपत्येष्वावतं । याभिर्विप्रंप्र
भरद्वाजमावतंताभिरूषुऊतिभिरश्विनागतं । याभिर्महामतिथिग्वंकशोजुवंदिवोदासंशंबरहत्यआवतं । याभिःपूर्भिद्येत्रसद

स्युमावंतंताभिरूषुऊतिभिरश्विनागतं । याभिर्वम्रंविपिपानमुपस्तुतंकलिंयाभिर्वित्तजानिंदुवस्यथः । याभिर्व्यश्वमुतपृथि
मावंतंताभिरूषुऊतिभिरश्विनागतं ॥ २ ॥ याभिर्नराशयवेयाभिरत्रयेयाभिःपुरामनवेगातुमीषथुः । याभिःशारीराजतंस्यू
मरश्मयेताभिरूषुऊतिभिरश्विनागतं । याभिःपठर्वाजठरस्यमज्मनाग्निर्नादीदेच्चितइद्धोअज्मन्ना । याभिःशर्यातमवथोमहा
धनेताभिरूषुऊतिभिरश्विनागतं । याभिरंगिरोमनसानिरण्यथोग्रंगच्छथोविवरेगोअर्णसः । याभिर्मनुंशूरमिषासमावतंता
भिरूषुऊतिभिरश्विनागतं । याभिःपत्नीर्विमदायन्यूहथुराघवायाभिररुणीरशिक्षतं । याभिःसुदासऊहथुःसुदेव्यं१ताभिरूषु
ऊतिभिरश्विनागतं । याभिःशंतातीभवथोददाशुषेभुज्युंयाभिरवथोयाभिरध्रिगुं । ओम्यावतींसुभरामृतस्तुभंताभिरूषुऊ
तिभिरश्विनागतं ॥ ४ ॥ याभिःकृशानुमसनेदुवस्यथोजवेयाभिर्यूनोअर्वंतमावतं । मधुप्रियंभरथोयत्सरड्भ्यस्ताभिरूषुऊ
तिभिरश्विनागतं । याभिर्नरंगोषुयुधंनृषाह्येक्षेत्रस्यसातातनयस्यजिन्वथः । याभीरथाँअवथोयाभिरर्वतस्ताभिरूषुऊतिभिर
श्विनागतं । याभिःकुत्समार्जुनेयंशतक्रतूप्रतुर्वीतिंप्रचदभीतिमावतं । याभिर्ध्वसंतिंपुरुषंतिमावतंताभिरूषुऊतिभिरश्विना
गतं । अप्नस्वतीमश्विनावाचमस्मेकृतंनोदस्रावृषणामनीषां । अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ । द्युभिरक्तुभिः
परिपातमस्मानरिष्टेभिरश्विनासौभगेभिः । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ५ ॥ निवर्तध्वंमानु
गातास्मान्त्सिषक्तरेवतीः । अग्नीषोमापुनर्वसूअस्मेधारयतंरयिं । पुनरेनानिवर्तयपुनरेनान्याकुरु । इंद्रएणानियच्छत्वग्निरे
नाउपाजंतु । पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ । इहैवाग्नेनिधारयेहतिष्ठतुयारयिः । यंनियानंन्ययनंसंज्ञानंयत्परायणं ।

आवर्तनंनिवर्तनंयोगोपाअपितंहुवे । यउदानड्व्ययनंयउदानट्परायणं । आवर्तनंनिवर्तनमपिंगोपानिवर्ततां । आनिवर्तनिवर्तयपुनर्नइंद्रगादेहि । जीवाभिर्भुनजामहै । परिवोविश्वतोदधऊर्जाघृतेनपयसा । येदेवाःकेचयज्ञियास्तेरय्यासंसृजंतुनः । आनिवर्तनिवर्तयनिनिवर्तनिर्वतय । भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥१॥ भद्रंनोअपिवातयमनः । शांतापृथिवीशिवमंतरिक्षंद्यौर्नोदेव्यभयंनोअस्तु । शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः । तवगृहेसर्वारिष्टशांतिरस्तु । यजमानःतथास्तु । ततःस्थापितकलशोदकेनसमुद्रज्येष्ठादिमंत्रैर्यजमानाभिषेकः । नूतनवस्त्रधारणं । ततः अशुभनिवृत्त्याचंदनादिभोगधारणाधिकारार्थचंदनपुष्पफलतांबूलगुडदानानिकरिष्येइतिसंकल्प्यतानिकृत्वाकुलदेवतामिष्टदेवतादींश्चनत्वा अभ्यारमितिदेवतांविसृज्यद्विराचम्यब्राह्मणैःसहबंधुभिःस्वयंभुंजीत श्रीखंडंधृत्वातांबूलादिभक्षयित्वाभूयसींदक्षिणांदद्यात् । आचार्यायवस्त्रदक्षिणांदत्वातोषयेत् ॥ इति ॥ ॥ ॥ ॥

अथत्रयोदशश्रवणामान्नविधिः ॥ ॥ देशकालौनिर्दिश्यअमुकगोत्रस्यामुकशर्मणःपित्रादेःजन्मप्रभृतिमरणांतमाचरितसुकृतस्यधर्मराजाग्रेकथयितॄणांश्रवणाख्यद्वादशब्राह्मणानांप्रीतयेद्वादशतथासमस्तपापक्षयपूर्वकमहाविष्णुप्रसादसिद्ध्येएकमितित्रयोदशामान्नानिसोदकुंभानिसवस्त्रदक्षिणादियुतानिनानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृज्यइत्युत्सृज्यपूजापूर्वकंतानिसदक्षिणानिदद्यात् ॥ कर्मसंपूर्णतासिद्ध्यर्थेईश्वरार्पणंकुर्यात् ॥ इति ॥ ॥ ॥

अथोदकुंभश्राद्धं ॥ ॥ इदंकृतेअकृतेवासपिंडनेत्रयोदशदिनादारभ्ययावद्वर्षप्रतिदिनंकार्यं । अशक्तौमासिकश्राद्धे

वोदकुंभोदेयः । तच्चाकृतेसपिंडनेएकोद्दिष्टंकृतेतुपार्वणं । अदैवमिदंसांकल्पविधिनाकुर्यात् । आचम्यदेशकालौसंकीर्त्य । अपसव्यं । अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणां । सव्यं । तृप्त्यर्थंउदकुंभश्राद्धंसांकल्पेनविधिनान्नेनहविषासद्यःकरिष्ये । तिलोदकं । अप० । पितृपिता० स्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः । सुक० । पितृपि० रूपाःइदंवःपाद्यं । सुपाद्यं । पितृपि० रूपाणांइदमासनं अत्रास्यतां । पितृपि० रूपाःअमीवोगंधाः । इमानिवःपुष्पाणितुलसीभृंगराजपत्र० एषवोधूपः । एषवोदीपः । आच्छादनार्थेकिंचिद्व्यावहारिकंद्रव्यं । प्रत्येकंस्वधानमः । मंडलकरणपात्रासादनभस्ममर्यादादिपरिवेषणेकृते अन्नंगायत्र्याप्रोक्ष्य । पितृपिता० महेभ्यः रूपेभ्यः एषउदकुंभःइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचास्यब्राह्मणस्यातृप्तेःस्वधाकव्यंनमम । सव्यं । अस्यश्राद्धस्यप्रतिष्ठाफलसिद्ध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददे । जपच्छिद्रंतपश्छिद्रं० । ब्राह्मणस्यप्रसादतः । सर्वमच्छिद्रंभवतु । अनेनोदकुंभश्राद्धेनपितृपि० स्वरूपीजनार्दनवासुदेवःप्रीयतां । नात्रश्राद्धेब्रह्मचर्यपुनरभोजनादिनियमाः । इत्युदकुंभश्राद्धं ॥ ॥ ॥ ॥

अथमासिकश्राद्धानि ॥ ॥ तानिचसपिंडीकरणार्थमपकृष्यकृतान्यपिमासिकानिद्वितीयमासिकादारभ्यपुनःस्वस्वकालेमासादौकर्तव्यान्येव । ऊनमासिकंऊनषाण्मासिकंऊनाब्दिकंचद्विपुष्करत्रिपुष्करनंदासिनीवालीचतुर्दशीभृगुवारकृत्तिकानक्षत्ररहितत्वेसति आद्यादिषुमासेषु पंचम्यांमृतस्यएकदिवसन्यूनपक्षेतृतीयायां द्व्यूनेद्वितीयायां त्र्यूनेप्रतिपदिकार्यं । एतदभावेऊनमासिकंतुद्वितीयमासिकेनसहतंत्रेणकार्यंऊनषाण्मासिकंऊनाब्दिकंच माधवमतानुसारेणमृताहात्पूर्वेद्युरेधवा

कार्यं । त्रैपक्षिकंतुत्रिपक्षेतीतेमृताहेकार्यं । ततःसंवत्सरांत्यदिनेसंवत्सरविमोक्षाख्यंअब्दपूर्त्यपरपर्यायकंश्राद्धंकृत्वापरेद्युर्द्वितीयाब्दिकंमृतदिनेकार्यं । पार्वणेनैवविधिनानुष्ठानंश्राद्धांगतर्पणाभिश्रवणवर्ज्यं । वर्षमध्येक्वचिद्वृद्ध्याद्युपस्थितौप्राप्तकालमासिकदिनेवृद्धिपूर्वदिनेवासर्वाणिमासिकानियुगपदेवकुर्यात् । उदकुंभश्राद्धमपि । तत्रसंकल्पः । देशकालौसंकीर्त्य अपसव्यं अस्मत्पितुःअमुकगोत्रस्यअमुकशर्मणःवसुरूपस्य वर्षपर्यंतंक्षुत्तृषोपशमनार्थं अक्षय्यसुखावाप्तयेच प्रतिदिनमेकैकब्राह्मणभोजनपर्याप्तमामनिष्क्रयद्रव्यंउदकुंभंचयथानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृज्ये इतिसंकल्प्यदद्यात् ॥ ॥ ततः श्राद्धकालेतंत्रेणपाकंकृत्वा षोडशब्राह्मणान्निमंत्र्य देशकालौसंकीर्त्य पुरूरवार्द्रव० देवाना । अपसव्यं अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरु० णां । सव्यं । श्रेयोर्थंमोक्षार्थंतृप्त्यर्थं—ऊनमासिक द्वितीय० त्रैपक्षिक० तृतीय० चतुर्थ० पंचम० षष्ठ० ऊनषष्ठ० सप्तम० अष्टम० नवम० दशम० एकादश० द्वादश० ऊनाब्दिकश्राद्धंच एतानिपंचदशमासिकश्राद्धानिपुनरावृत्त्यास्वस्वकालेकर्तव्यानिममकुलेकरिष्यमाणचौलोपनयनविवाहाद्यन्यतमांगवृद्धिश्राद्धाधिकारार्थं अपकृष्यअन्नेनहविषापार्वणेनविधिनातंत्रेणाद्यकरिष्ये । तदंगंयवतिलोदकं । ऊनमासिकाद्यूनाब्दिकांतमासिकश्राद्धेषुपुरूरवा० देवार्थेक्षणःक्रियतां । अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवस्वादिरूपाणांऊनमासिकश्राद्धेक्षणःक्रियतां इत्यादिसर्वश्राद्धेषुक्षणंदत्त्वा पाद्यादिसर्वपार्वणवत् । यदिमरणोत्तरंवर्षमध्येऽधिकमाससंभवस्तदा यस्यमासस्याधिकस्तत्पूर्वमासिकोत्तरं अधिकमासश्राद्धेक्षणःक्रियतां ततोऽग्रेतनशुद्धमासिकस्य । इतिमासिकनिवृत्तिः । मासिकश्राद्धेषुपिंडदानेवि

शेषः—अपकृष्याथवोत्कृष्यमासिकानिवहूनिवै । नदेयात्रहवःपिंडास्त्रीन्पिंडानेवदापयेत् । मासिकैकेत्रयःपिंडाःपट्पिंडामासिकद्वये । अतऊर्ध्वत्रयःपिंडामासिकेषुप्रकीर्तिताः ॥ इतिषोडशमासिकश्राद्धानि ॥ ॥ ॥

"अथजीवच्छ्राद्धविधिः ॥ ॥ तत्रशौनकः । जीवच्छ्राद्धंप्रवक्ष्यामिशौनकोहंद्विजन्मनां । कृष्णपक्षेत्रयोदश्यांस्नात्वोपोष्यसमाहितः । तस्मिन्नहनिसंभारानुपकल्प्ययथाक्रमं । विद्रुमंहेमसूचींवैअंकुशंतांतवंतथा । पाशंकेशांश्चपालाशंवृंतंकृष्णाजिनंतथा । औदुंवरसमिद्दर्भहिरासनंकलशान्नवान् । ग्रीवामात्रजलेतीर्थेस्नात्वामध्यंदिनेजपेत् । गायत्रीमित्यर्थः । उत्थाय ब्राह्मणान्भोज्यकृत्वापुण्याहसुव्रतं । वस्त्रांगुलीयकादीनिदत्वाचार्यायभक्तितः । सघृतंपायसान्नंचसभुक्त्वादक्षिणामुखः । सायंकालेग्निमाधायपुरस्तात्तत्रसंस्कृतं । घृताप्लुतंचरुंहुत्वामंत्रैःपड्भिर्यथाक्रमं । द्वाभ्यांचत्वारिशृंगेतितत्सवितुर्ऋचैकया । अग्नेनयेतिद्वाभ्यांचजातवेदसइत्यृचा । हुत्वापुरुषसूक्तेनप्रत्यृचंषोडशाहुतीः । अतोदेवादिपड्भिश्चसावित्र्याष्टशतानिच । अष्टाविंशतिसंख्यांवाहोमशेषंसमापयेत् । गत्वाचतुष्पथंसूचीरज्जुकाद्यंकुशांस्तथा । प्रीयतांकिंकरायेतिदद्यात्कृष्णायवैमुने । कृष्णायकिंकरायैतद्दत्तंनमम अनेनसप्रीयतामितियमकिंकरोद्देशेनत्यागः । निधायकलशान्प्रीतःसोदकांस्तंतुवेष्टितान् । पुरुषाकृतिवत्कुर्याच्छिरसित्रीन्मुखेतथा । ग्रीवैकंचतुरोवक्षोवाह्वोर्द्वौद्वौतथैवच । एकंलिंगेपादयोश्चपंचपंचेतिकथ्यते । एवमेकविंशतिकलशाः । यन्मेप्रीतोसिभगवन्नित्याहृत्यसुसंस्कृतान् । पंचगव्येनप्रक्षाल्यएतोन्विंद्रादिभिस्तथा । पालाशवृंतानीतिशेषः । कृष्णाजिनेतुपालाशवृंतैःकृत्वानराकृतिं । चत्वारिंशच्छिरोग्रीवेदशत्रिंशदुरस्यपि । वाह्वोश्चैवशतंदद्यात्पंचपंचतथां

गुलौ । जठरेविंशतिंदद्याज्जंघयोर्विंशतिद्वयं । ऊर्वोश्चषष्टिर्दद्याद्वैमेढ्रेचत्वारिविन्यसेत् । त्रीणित्रीणिवृषणयोःपादयोस्त्रिंशतं तथा । विन्यसेच्छेदवृंतानिदशपादांगुलीषुच । शतानित्रीणिषष्टिश्चपालाशंवृंतमाहरेत् । अलाभेयज्ञवृक्षाणांवृंतान्यपिसमाहरेत् । निवेश्यकलशेप्राणान्वृंतेदेहंनिवेश्यच । कलशइत्येकवचनमविवक्षितं । कलशेषुप्राणनिवेशनंचिंतयित्वेत्यर्थः । मध्येशयित्वास्वंदेहंविवस्वत्युदितेसति । सुस्नाप्यसकलंऋग्भिःस्वंदेहंस्वयमेवतु । सम्यक्पुरुषसूक्तेनश्रीसूक्तेनसमाप्यच । अन्नेनब्राह्मणान्भोज्ययमकिंकरतृप्तये । दाहश्चतस्यकर्तव्यःपितृमेधविधानतः । होतृप्रीत्याचवरयेद्बालवृद्धातुरान्जनान् । नद्यादितीरेकर्तव्यंदशाहंवादिनेगृहे । दिनेचेद्गृहएवेत्यर्थः । एकादश्यांतुकर्तव्यंश्राद्धंसुब्राह्मणायच । सर्वमेकाह्निवाकुर्यात्सपिंडीकरणंविना । एकादश्यांचनोकुर्यात्तत्पिंडान्मंत्रवत्तथा । मंत्रकर्माणिजीवेनश्राद्धंकुर्याच्चसत्स्वपि । यथाविधिप्रकर्तव्यंसपिंडीकरणादृते । अन्येनस्त्रीचशूद्रश्चवृंतैर्दग्ध्वास्वकांतनुं । तदह्न्येवक्रियाःसर्वाःकुर्याच्छक्त्यनुसारतः । देशांतरमृतस्यैवंचंडालाद्यैर्हतस्यच । यद्येकादशेह्निकुर्यात्तद्ब्राह्मणस्यैव । चकारादन्यवर्णयोश्चैकादशेह्निकुर्याद्दिनांतरेवासपिंडीकरणवर्जं । स्त्रीशूद्रौप्रत्याहएकादश्यामिति । स्त्रियाशूद्रेणचैकादश्यांपिंडोपलक्षितमौर्ध्वदेहिकंनकार्यं । सर्वकर्माणितूष्णींकार्याणि । सत्सुपिंडादिष्वधिकारिपुजीवच्छ्राद्धंनकार्यंअसत्स्वाहयथेति । अनेनकृतप्रायश्चित्तइत्यर्थः । देशांतरमृतादेरस्थ्यलाभेपर्णवृंतदाहमात्रमितिदृश्यते । इतिशौनकोक्तोजीवच्छ्राद्धविधिः ॥” ॥ ॥ ॥

अथपालाशविधिः ॥ ॥ तत्रदेशांतरमरणेपराकद्वयमष्टौकृच्छ्रान्वाकृत्वास्थीनिदहेत् । यद्यस्थीनिचांडालश्वादिभिः

स्पृष्टानिस्युस्तदापंचगव्यगंगोदकाभ्यांप्रक्षाल्यविधिनादहेत् । अथयस्यास्थीन्यपिनलभ्यंतेतस्यपर्णशरदाहः । सचैवं । आचम्यप्राणानायम्यदेशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यअमुकप्रेतस्यप्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंमृताहात्विदेशस्थस्यमरणेप्रेतस्यमंत्राग्निरहितस्यऔर्ध्वदेहिकक्रियाधिकारार्थंपालाशविधिंकरिष्येइतिसंकल्प्य यवपिष्टेनशरीरनिर्माणं शुचिभूमौकृष्णमृगचर्मास्तीर्यतदुपरिएकंशरंदक्षिणोत्तरायतंनिवेश्यतदुपरिपालाशवृंतानिन्यसेत् । शिरसिचत्वारिंशत् ग्रीवायांदश १० वाह्वोःप्रत्येकंपंचाशत्एवंशतं १०० करांगुलिपुसर्वासुदश १० उरसिविंशतिः २० जठरेत्रिंशत् ३० शिश्नेचत्वारि ४ अंडयोस्त्रयस्त्रयः ६ ऊर्वोःप्रत्येकंपंचाशत् १०० जंघांतःपादतलांतंयावत्पादयोःप्रत्येकंपंचदश ३० सर्वासुपादांगुलिपु दश १० एवंषष्ठ्यधिकशतत्रयमित ३६० पालाशपर्णैःशरीरंनिर्माय ऊर्णासूत्रेणशरेणसहवद्ध्वा जललोडितयवपिष्टेनानुलिंपेत् । ततःशक्तौसत्यांवक्ष्यमाणान्यपिकार्याणि । मूर्धस्थानेकदलीफलं १ शिरसिनारिकेलं १ ललाटेकदलीपत्रं १ दंतेषुदाडिमवीजानि ३२ कर्णयोःकंकणे नेत्रयोःकपर्दकौ नासिकायांतिलपुष्पं नाभौअभ्रकं स्तनयोर्जंवीरफलद्वयं वातेमनःशिलां पित्तेहरितालं कफेसमुद्रफेनं रुधिरेमधु पुरीषेगोमयं मूत्रेगोमूत्रं रेतसिपारदं वृषणयोर्वृंताकद्वयं शिश्नेगृंजरं केशेवनसूकरकेशाः रोमावलीषुऊर्णा मांसस्थानेयवपिष्टेनवामाषपिष्टेनवातंडुलपिष्टेनवालिंपेत् । ततःपंचगव्येनप्रोक्ष्य पंचामृतमंत्रैः पंचामृतेनप्रोक्ष्य । पुनर्नोअसुमितिबृहदुक्थःप्राणदस्त्रिष्टुप् प्राणप्रवेशनेवि० । पुनर्नोअसुंपृथिवीददातुपुनर्द्यौर्देवीपुनरंतरिक्षं । पुनर्नःसोमस्तन्वंददातुपुनःपूपापथ्यां३यास्वस्तिइतिप्राणप्रवेशनंभावयेत् । यद्वा यत्तेयममितिद्वादशर्चस्ययमोनुष्टुप् प्राणप्रवे

शनेवि० । यत्तेयमंवैवस्वतंमनोजगामदूरकं । तत्तआवर्तयामसीहक्षयायजीवसे । यत्तेदिवंयत्पृथिवींमनो० । तत्तआवर्त० । यत्तेभूमिंचतुर्भृष्टिंमनो० । तत्त० । यत्तेचतस्रःप्रदिशोमनो० । तत्त० । यत्तेसमुद्रमर्णवंमनो० । तत्त० । यत्तेमरीचीःप्रवतोमनो० । तत्त० ॥ १ ॥ यत्तेअपोयदोषधीर्मनो० । तत्त० । यत्तेसूर्ययदुषसंमनो० । तत्त० । यत्तेपर्वतान्बृहतोमनो० । तत्त० । यत्तेविश्वमिदंजगन्मनो० । तत्त० । यत्तेपराःपरावतोमनो० । तत्त० । यत्तेभूतंचभव्यंचमनो० । तत्तआवर्त० ॥ २ ॥ इतिसूक्तेनप्राणानानीय । शुक्रमसिज्योतिरसितेजोसि । इतिमंत्रेणपारदंक्षिप्त्वा । अक्षीभ्यांतइतिषळर्चेनशरीरंस्पृशेत् । अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते । ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योऽअनूक्यात् । यक्ष्मंदोषण्य१मंसाभ्यांबाहुभ्यांविवृहामिते । आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते । ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां । यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते । मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । इत्येतैःस्पृष्ट्वाशरीरंस्नापयित्वा चंदनेनानुलिप्य वस्त्रेपरिधाप्य यज्ञोपवीते धारयित्वा शुभ्रसुगंधमाल्यादिभिरलंकृत्य अयंसदेवदत्तइत्यभिमृश्य । इदंचास्योपासनमित्यग्निंध्यात्वा पूर्वोक्तवैतरण्यादिदानपूर्वकंऊर्णासूत्रेणवेष्टयित्वा कृष्णाजिनेनाच्छाद्य चितिस्थानमानीयपूर्वोक्तविधिनाशववद्दहेत् । पालाशवृंताभावेकुशैःप्रतिकृतिंकुर्यात् । अत्रविशेषविचारः । आहिताग्नेःप्रतिकृतिदाहेअस्थिदाहेवादशाहमेवाशौचं । अनाहिताग्नेस्तुसपिंडानांत्र्यहं ।

पर्णशरदाहेपूर्वमगृहीताशौचयोर्भार्यापुत्रयोर्दशाहादिपूर्णमेव । गृहीताशौचयोस्तुतयोरपित्रिरात्रमाशौचं । पत्नीसंस्कारेप त्युश्चैवमेव । सपत्न्योःपरस्परंचैवमेवाशौचं । सापत्नमातुर्दशाहानंतरंत्र्यहंकार्यंसपत्नीपुत्रेण । आहिताग्नौविदेशस्थेमृतेयाव द्विधिनानसंस्कारस्तावत्पुत्रादीनांनाशौचं ॥ इतिपालाशविधिः ॥ ॥ ॥ ॥

अथमातापित्रोर्मरणेप्रथमाब्देविहितनिषिद्धानि ॥ ॥ तत्रधवलनिबंधेदेवलः । प्रमीतौपितरौयस्यदेहस्तस्याशुचिर्भ वेत् । नदैवंनापिवापित्र्यंयावत्पूर्णोनवत्सरः । तथा । महागुरुनिपातेतुप्रेतकार्यंयथाविधि । कुर्यात्संवत्सरादर्वागेकोद्दिष्टं नपार्वणं । अन्यदीयमित्यर्थः । स्नानंचैवमहादानंस्वाध्यायंचाग्नितर्पणं । प्रथमेब्देनकुर्यात्तुमहागुरुनिपातने । तथा । सर्वे षांप्रेतकार्याणिमहागुरुनिपातने । कुर्यात्संवत्सरादर्वाक्श्राद्धमेकंतुवर्जयेत् । भृगुः । पिताचैवतथाभ्राताभार्यापुत्रस्तथास्नुषा । एषांमृतौचरेच्छ्राद्धमन्यस्यनपुनःपितुः । तथा । माताचैवसुतोभ्रातापत्नीचैवविपद्यते । तत्रश्राद्धानिकुर्वीतनकुर्याज्जनके मृते । एतत्सर्ववर्षपर्यंतमकृतेसापिंडनेज्ञेयमितिकेचित् । अन्यच्च । अस्थिक्षेपंगयाश्राद्धंश्राद्धंचापरपक्षिकं । प्रथमेब्देपि कुर्वीतयदिस्याद्भक्तिमान्सुतइति । भक्तिमान्भक्त्याख्यंश्राद्धेदेवतात्वयोग्यतासंपादकंश्राद्धंतद्वान् । तत्कृत्वाएतानिकुर्या दित्यर्थः । अन्येतुयथाश्रुतंव्याचक्षते । एतस्यचविषयविवेकोऽस्मत्कृतेत्रिस्थलीसेतौगयाप्रकरणेऽवगंतव्यः ॥ ॥

अथपुनःसंस्कारेकालशुद्धिः ॥ ॥ आशौचमध्येपुनःसंस्कारेयथासंभवंदिनंशोध्यं । कालांतरेतुशोध्यमेव । संवत्सरा दूर्ध्वंप्रेतकार्येउत्तरायणःश्रेयान् । तत्रापिकृष्णपक्षः । तिथिषुनंदांत्रयोदशींदिनक्षयंचवर्जयेत् । शुक्रशनिवारौवर्ज्यौ ।

नक्षत्रेषुभरणीकृत्तिकार्द्राश्लेषामघाधनिष्ठादिपंचकंत्रिपुष्कराणिचातिदुष्टानिसर्वथावर्ज्यानि । व्यतीपातेपरिघेवैधृतौचयोगे विष्टिकरणेचतुर्थाष्टमद्वादशस्थेचंद्रेचातिदोषः । रोहिणीमृगशीर्षपुनर्वसुपूर्वोत्तराचित्राविशाखानुराधापूर्वाषाढोत्तराषाढा निद्विपुष्कराणिचेषद्दुष्टानिसंभवेवर्ज्यानि शिष्टान्यदुष्टानि । सर्वथादिनशुद्ध्यसंभवेअनतिदुष्टंबाह्यनक्षत्रंग्राह्यं । पुनःसंस्कारे आंतरंनग्राह्यं । नंदायांशुक्रेचतुर्दश्यांत्रिजन्मनक्षत्रेषुएकोद्दिष्टमतिनिषिद्धं । एकादशाहादौननिषेधः । तत्रतिथ्यादिनैव शोध्यं । युगादिमन्वादिसंक्रांत्यमावास्यासुप्रेतकार्येपुनःसंस्कारेचकिंचिदपिनैवशोध्यं ॥ ॥ ॥

अथाधिकारिणः ॥ ॥ सर्वत्रदाहपिंडादिकमपतितादिर्ज्येष्ठऔरसपुत्रःकुर्यात् । तदसन्निधौकनिष्ठः । तेषांसर्वेषामसन्निधौपौत्रोज्येष्ठपुत्रपौत्रादिक्रमेण । तदभावेतथैवप्रपौत्रः । एषामभावेपुत्रिकापुत्रादयःपुत्राःक्रमेण । तदभावेतत्पुत्रादयः पूर्ववत् । उक्ताभावेपत्नी । एवंपुत्राद्यभावेपत्न्याभर्ता । तदभावेसपत्नी । सपत्न्यभावेभ्रातृपुत्रोभ्रातास्नुषादुहितादौहित्रः । अन्यःसगोत्रःसपिंडःसब्रह्मचारी । मित्रंशिष्योगुरुर्वांधवोधनसंबंधीवादद्यात् । (पुत्रस्यस्नुषायादाहादिसर्वंपित्रावाभ्रात्रा वापितृव्येणयस्यमृतस्यतस्यसर्वदाहादिकंकर्तव्यमिति । देशांतरेस्वग्रामेपि ।) नपुत्रस्यपितादद्यान्नानुजस्यतथाग्रजः । यदि स्नेहेनकुर्वीतसपिंडीकरणंविना । इदंसतिसंभवे । अदत्तकन्यायैपितरौदत्तः । अन्याभावेदत्तानामपिपितरावेव । दौहित्र मातामहौपरस्परं । मातामह्याश्चदौहित्रोजामातृश्वशुरौमिथः । श्वश्र्वादेःस्नुषा । भ्रातरौचमिथोदत्तः । गुरुशिष्यौ परस्परं । सर्वाभावेयःकश्चित्कुर्यात् । तस्यसर्वसंपत्प्राप्तिः । वर्षत्रयानंतरंचूडाभावेप्यौर्ध्वदेहिकंमंत्रवत्कुर्यात् । वर्षत्रया

दर्वाक्कृतचूडोपिशक्तौसर्वमंत्रवत्कुर्यात् । यद्यशक्तोऽकृतचूडोवातदाग्निदानमेवमंत्रवत्कुर्यात् । शिष्टमन्येनकारयेत् । एवंपत्न्याप्यग्निदानमात्रंसमंत्रकंकार्यंशिष्टमन्येनकारयेत् । तथाचकात्यायनः । असंस्कृतेनपत्न्याचह्यग्निदानंसमंत्रकं । कर्तव्यमितरत्सर्वंकारयेदन्यमेवहि । सुमंतुः । अनुपेतोपिकुर्वीतमंत्रवत्पैतृमेधिकं । यद्यसौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरः । सपिंडीकरणादर्वाग्भावीनिश्राद्धानिपुत्रोविभक्तोऽविभक्तोवासन्निहितएकएवकुर्यात् । तत्रविभक्तैर्यथाशक्तिस्वकीयंद्रव्यं देयं । गृह्यपरिशिष्टे । असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् । प्रथमेहनियोदद्यात्सदशाहंसमापयेत् । तथा । प्रथमेह नियद्द्रव्यंतदेवस्यादशाहिकं । तथा । उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये । पूर्वदत्ताजलीन्दद्यात्पिंडदानंतथैवच । आचार्य विपर्ययेप्येवं । एकादशाहादिकंतु दशाहकर्ताज्येष्ठपुत्रएववाकुर्यात् । सपिंडीकरणंतुयोग्योज्येष्ठपुत्रएवकुर्यात् । कनिष्ठो पिवा नतुपुत्रादन्यः । पुत्रेसतिनान्यस्तत्राधिकारी । तथा । यवीयसाकृतंकर्मप्रेतशब्दंविहायतु । तज्ज्यायसापिकर्तव्यं सपिंडीकरणंपुनः । विभक्ताःपुत्राऋद्धिकामाश्चेत्पृथक्पृथगपिसपिंडीकरणंकुर्युः । अविभक्तसुतेषुवार्षिकादिज्येष्ठपुत्रएव कुर्यात् । विभक्ताःप्रत्येकंपृथक्पृथक्कुर्युः । ब्रह्मचार्यादीनांदहनोदकदानाद्यधिकाराभावोवक्ष्यते । पाषंड्यादीनांमृतानाम धिकारिणापिदहनादिनकार्यं । तदाहयाज्ञवल्क्यः । पाषंड्यनाश्रिताःस्तेनाभर्तृघ्न्यःकामगादिकाः । सुराप्यआत्मत्यागि न्योनाशौचोदकभाजनाः । वेदवाह्यलिंगधारणंपाषंडं । अनाश्रिताःसत्यप्यधिकारेआश्रमविशेषरहिताः । स्तेनाब्राह्मणस्वर्ण व्यतिरिक्तोत्तमद्रव्यहारिणः । सुराप्यइत्यादिउद्देश्यगतत्वाल्लिंगमविवक्षितं । आशौचमुदकंचैतन्मरणे नकार्यमित्यर्थः ।

आत्मत्यागिनोबुद्धिपूर्वकमात्मघातिनः । तेषुविशेषमाहगौतमः । प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छता-
मिति । प्रायोमहाप्रस्थानं । अनाशकमनशनं । प्रपतनंशैलादेःपातःइत्यादिनिमित्तैः। शास्त्राविहितमार्गेणेच्छापूर्वकंमृताना
माशौचादिनेत्यर्थः । तथा अंगिराः । चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपापकर्मणां ।
उदकंपिंडदानंचप्रेतेभ्योयत्प्रदीयते । नोपतिष्ठतितत्सर्वमंतरिक्षेविनश्यति । आश्वलायनगृह्यपरिशिष्टेपिचंडालादित्याद्यु
क्त्वा । नसंस्कारविधिस्तेषांनैवकार्योदकक्रिया । रोदनंनैवकर्तव्यंसूतकंनचवंधुभिः । दग्ध्वाशरीरंप्रेतस्यसंस्थाप्याऽस्थी
नियत्नतः । प्रायश्चित्तंतुकर्तव्यंपुत्रैश्चांद्रायणत्रयं । मनुः । वृथासंकरजातानांप्रव्रज्यासुचतिष्ठतां। आत्मनस्त्यागिनांचैवनि
वर्तेतोदकक्रिया । वृथाजाताःपंचमहायज्ञरहिताः । संकरजाताःप्रतिलोमजाः । प्रमादात्तुपूर्वोक्तनिमित्तैर्मरणेप्रायश्चित्त
मुक्तं । चंडालाऽभिहतेविप्रेत्वंतरिक्षमृतेपिवा । कृच्छ्रातिकृच्छ्रचांद्रैस्तुशुद्धिस्तत्रप्रकीर्तितेति । तथाविधेप्रमादमरणेभवत्ये
वाशौचादि । तदाहांगिराः । अथकश्चित्प्रमादेनम्रियेताग्न्युदकादिभिः । तस्याशौचंविधातव्यंकर्तव्याचोदकक्रियेतिवच
नात् । प्रमादेचांद्रायणंतप्तकृच्छ्रद्वयंचकार्य । यद्वापंचदशकृच्छ्राणिकुर्यात् । ततोविधिनादाहादि । बुद्ध्याचंडालादिमृता
ग्न्यादीनांप्रतिपत्तिःस्मृतावुक्ता । वैतानंप्रक्षिपेदप्सुआवसथ्यंचतुष्पथे । पात्राणितुदहेदग्नौयजमानेवृथामृते । वृथाऽविहित
मार्गेण । तेषांशरीरंगंगायामन्यत्रवामहानद्यांक्षिपेत् । यद्वालौकिकाग्नावमंत्रकंदग्ध्वास्थीनिस्थापयेत् । प्रायश्चित्तनारायण
वल्यादौकृतेस्थीनिक्षीरेणक्षालयित्वाविधिनादहेत्श्राद्धंचकुर्यात् । प्रायश्चित्तनारायणवलीचवत्सरांतेलोकगर्हापरिहारार्थं

श्राद्धादौयोग्यतार्थंचकार्यौ ।नारायणवलिःकार्योलोकगर्हाभयान्नरैः । तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमइत्युक्तेः । तेषांपाषंड्यादीनांबुद्धिपूर्वात्मघातकानांचेत्यर्थः ॥ ॥ ॥ ॥ ॥

अथैषामविभक्ताःशक्ताःपुत्राद्याःसंतितदात्मघातकप्रायश्चित्तंद्विगुणंचांद्रद्वयंतप्तकृच्छ्रचतुष्टयंच । यद्वात्रिंशत्कृच्छ्राणि कृत्वापाषंड्यादीनांयोग्यंचसर्वप्रायश्चित्तंकृत्वानारायणबलिंचकृत्वातदैवकालांतरेवावत्सरादर्वागपिदाहश्राद्धादिकुर्युः । अनित्यत्वादायुषः । अकृतनिष्कृतीनांपाषंड्यादीनांशवानांस्पर्शनस्नानालंकरणवहनरज्जुच्छेदनदहनाश्रुपातकथादीन्यज्ञानात्कृत्वामहासांतपनंचरेत् । ज्ञानात्तप्तकृच्छ्रं । एतेष्वेकैककरणेत्वज्ञानादुपवासः । मत्याभ्यासेकृच्छ्रातिकृच्छ्रचांद्राणियोग्यतयाकुर्यात् । यस्तुवृद्धादिरचिकित्स्यगुरुव्याधियुतःप्रत्याख्यातभिषक्क्रियोबुद्धिपूर्वकमप्यात्मानंघातयतिप्रयागादौवातस्यनदोषः । शास्त्रानुज्ञातमरणत्वात् तस्यप्रायश्चित्तनारायणवलीनस्तः । त्रिरात्रमेवाशौचं । चतुर्थदिनेएकादशाहकृत्यंपंचमेसपिंडनं । त्र्यहाशौचेपिपिंडास्त्रयःदशवा । अत्रआद्येऽत्येचाह्निपिंडत्रयं । दशांजलिपक्षेत्रयोंजलयः । शतांजलिपक्षेत्रिंशत् । मध्येह्निपिंडचतुष्टयं । चत्वारश्चत्वारिंशद्वांजलयः । द्वितीयदिनेस्थिसंचयनं । एवमन्यत्रापित्र्यहाशौचे । ब्रह्मचारिभिःपूर्वोक्तपाषंड्यादिभिःपतितैःक्लीवैःप्रक्रांतप्रायश्चित्तव्रतैश्चसपिंडादिमरणेदहनाशौचोदकदानादिनकार्यं । ब्रह्मचारीप्रक्रांतप्रायश्चित्तश्चमातृपितृमहागुरुमातामहमातामह्याचार्योपाध्यायानांकुर्यादेव । तत्रव्रतलोपोनास्ति । किंतुसूतकान्नंनाश्नीयात् । नसूतकिभिःसहवसेत् । मात्रादिव्यतिरिक्तप्रेतकर्मकरणेपुनरुपनयनंब्रह्मचारिणः । याज्ञवल्क्यः । एवंमातामहा

चार्यप्रेतानामुदकक्रिया । कामोदकंसखिप्रत्तास्वस्रीयश्वशुरर्त्विजां । काममित्युक्तेःसख्यादावदानेपिनदोषः । यमेनांजलि संख्यायांविशेषउक्तः । पाषाणंततआदायविप्रेदद्यादशांजलीन् । द्वादशक्षत्रियेदद्याद्वैश्येपंचदशस्मृताः । त्रिंशच्छूद्रायदा तव्यास्ततःसंप्रविशेद्गृहं ॥ ॥ ॥ ॥ ॥ ॥

अथषोडशश्राद्धनिर्णयः ॥ ॥ तानिच । मासिकानिदशैकंचआद्येद्वेध्यर्धमासिकं । ऊनाब्दमूनषाण्मासंप्रेतश्राद्धा निषोडश । अध्यर्धमासिकंत्रैपक्षिकं । नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश । एकेनैवतुकार्याणिसंविभक्तधनेष्वपि । तत्रचयथांशंसर्वैर्द्रव्यंदेयं । यत्रसद्यःशौचंतत्रशंखः । सद्यःशौचेपिदातव्यंप्रेतस्यैकादशेहनि । सएवदिवसस्तस्यश्राद्धपिंडो दकादिषु । शय्यासनादिष्वितिपाठः । एकाहाशौचेतुदशाहकृत्यंतस्मिन्नेवाहनिद्वितीयेचैकादशाहइतिकुंडपद्धतौ । केचित्तु तत्रापिसद्यःशौचवदेकादशाहमाहुः । नवश्राद्धमासिकयोर्विघ्नेकण्वः । नवश्राद्धंमासिकंचयद्यदंतरितंभवेत् । तत्तदुत्तर सातंत्र्यादनुष्ठेयंप्रचक्षते । अंगिराः । प्रथमेह्नितृतीयेह्निपंचमेसप्तमेतथा । नवमैकादशेचैवनवश्राद्धंप्रकीर्तितं । शिवस्वामि मते नवश्राद्धानिपंचाहुराश्वलायनशाखिनः । आपस्तंबाःषडित्याहुर्विभापातैत्तिरीयिणः । पंचत्वैकादशाहिकव्यतिरेकेण । भविष्यत्पुराणेवर्णतोपिव्यवस्था । नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात् । आद्यंतयोर्वर्णयोस्तुषडित्याहुर्महर्षयः । विशां नव राज्ञांसप्त । तथा । प्रेतश्राद्धेतुयत्पात्रमर्घ्यार्थपरिकल्पितं । तस्यैवोत्तानताप्रोक्ताशेषेषुन्युब्जतामता । प्रेतश्राद्धेनवि किरइतिस्मृतिरत्नावल्यां । तथा । द्वादशाहेयदाकुर्यात्पितुःपुत्रःसपिंडनं । एकादशेह्निकुर्वीतप्रेतश्राद्धानिषोडश । वस्त्रालं

कारशय्यादिपितुर्यद्वाहनादिकं । गंधमाल्यैःसमभ्यर्च्यश्राद्धभोक्रेतदर्पयेत् । तथा। आशिषोद्विगुणादर्भाजयाशीःस्वस्तिवाचनं । पितृशब्दस्यसंबंधःशर्मशब्दस्तथैवच । पात्रालंभोऽवगाहश्चउल्मुकोल्लेखनादिकं। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच। प्रदक्षिणाविसर्गाश्चसीमांतगमनंतथा । अष्टादशपदार्थाश्चप्रेतश्राद्धेविवर्जयेत् । सपिंडीकरणंयावदृजुदर्भैःपितृक्रिया । सपिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् । पतिपुत्रवतीनारीभर्तुरग्रेमृतायदि । वृषोत्सर्गंनकुर्वीतगांदद्याच्चपयस्विनीं । अन्वारोहणेतु । नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् । एकएववृषोत्सर्गोगौरेकातत्रदीयते । यतिपुशातातपः । एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियां । नकुर्यात्पार्वणादन्यद्ब्रह्मीभूतायभिक्षवे । उशनाः । एकोद्दिष्टंनकुर्वीतयतीनांचैवसर्वदा । अहन्येकादशेप्राप्तेपार्वणंतुविधीयते । सपिंडीकरणंतेपानकर्तव्यंसुतादिभिः । त्रिदंडग्रहणादेवप्रेतत्वंनैवजायते । मातृविषये शंखः । मातुःसपिंडीकरणंकथंकार्यंभवेत्सुतैः । पितामह्यादिभिःसार्धंसपिंडीकरणंस्मृतं । कारिकायां । पितामह्यादिभिःसार्धंमातरंतुसपिंडयेत् । अन्वारोहणेतुयमः । पत्याचैकेनकर्तव्यंसपिंडीकरणंस्त्रियाइति । पत्नीविषयेपैठीनसिः । अपुत्रायांमृतायांतुपतिःकुर्यात्सपिंडनं । श्वश्र्वादिभिःसहैवास्याःसपिंडीकरणंभवेत् । सपिंडीकरणेचज्येष्ठपुत्रस्यैवाधिकारः । तदुक्तंवायुपुराणे । श्राद्धानिषोडशादत्वाकुर्यान्नतुसपिंडनं । प्रोषितावसितेपुत्रःकालादपिचिरादपि । यदिषोडशश्राद्धानिकनिष्ठभ्रात्रादिनाकृतानितदासपिंडत्वमेवकुर्यादित्यपरार्के । पितृदशाहंकुर्वन्यदिपुत्रोमृतस्तदा तत्पुत्रःपितुरौर्ध्वदैहिकानंतरंपितामहकृत्यंपुनःसंस्कारंकृत्वासर्वमावर्तयेत् । अतीतेतुदशाहेनैवं । तथा । अशक्त्यापित्रानुज्ञातेनपौत्रेणपितामहश्राद्धे

उपक्रांतेपितृमरणेसातपित्राशौचंवहन्नेवस्वकालेपितामहश्राद्धंपौत्रःकुर्यात् प्रक्रांतत्वादितिमदनपारिजाते। द्वादशाहादि कालेषुप्रमादादननुष्ठितं। सपिंडीकरणंकुर्यात्कालेषूत्तरभाविषु। शूद्रस्यतुविष्णुः। मंत्रवर्जंहिशूद्राणांद्वादशेहनिकीर्तितं। अमावास्याश्राद्धकारिशूद्रविषयमेतत्। अपरार्केकल्पतरौच। वचनवलादाशौचमध्यएवकार्यं। यत्तुकात्यायनः। सर्वेषा मेववर्णानामाशौचांतेसपिंडनमिति। तदेतद्व्यतिरिक्तविषयं। ब्रह्मपुराणे। आशौचांतेह्निवर्णानांदशमंपिंडमुत्सृजेत्। श्राद्धांतेपिंडदानांतेशुद्ध्यर्थंश्राद्धमाचरेत्। सपिंडीकरणेव्युत्क्रममृतेतुब्रह्मपुराणे। मृतेपितरियस्याथविद्यतेचपितामहः। तेनदेयास्त्रयःपिंडाःप्रपितामहपूर्वकाः। तेभ्यश्चपैतृकःपिंडोनियोक्तव्यश्चपूर्ववत्। मातर्यग्रेमृतायांतुविद्यतेचपितामही। प्रपितामहीपूर्वंतुकार्यस्तत्राप्ययंविधिः। व्युत्क्रमाच्चप्रमीतानांनैवकार्यासपिंडनेतितुमातापितृभर्तृव्यतिरिक्तविषयं। अतए वस्कांदे। व्युत्क्रमेणमृतानांनसपिंडीकृतिरिष्यते। यदिमातायदिपिताभर्तानैषविधिःस्मृतः। एषविधिःसपिंडननिषेधरूपः। क्षत्रियादिरपिमहैकोद्दिष्टमेकादशाहन्येवकुर्यात्। नतुसूतकांते। तदाहवृद्धवसिष्ठः। एकादशेह्नियच्छ्राद्धंतत्सामान्यमुदा हृतं। चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथक्। लौगाक्षिरपि। आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनि। कर्तुस्तात्कालिकी शुद्धिरशुद्धःपुनरेवसः। रुद्रगणश्राद्धंतुक्षत्रियादिःसूतकांतेकुर्यात्। एकादशेहनितथाविप्रानेकादशैवतु। क्षत्रियादिःसूत कांतेभोजयेदयुजोद्विजानितिमत्स्यपुराणात्। इदंरुद्रगणपरत्वेनव्याख्यातं। मदनपारिजातेगोभिलः। ब्राह्मणंभोजयेदाद्ये होतव्यमनलेथवा। पुनश्चभोजयेद्विप्रंद्विरावृत्तिर्भवेदिति। इदंचाद्यमासिकाद्याब्दिकयोःसिद्ध्यर्थं। अंगिराः। 'यस्यसंव

त्सरादर्वाक्सपिंडीकरणंकृतं । मासिकंचोदकुंभंचदेयंतस्यापिवत्सरं । पैठीनसिः । सपिंडीकरणादर्वाक्कुर्याच्छ्राद्धानिषोडश । एकोद्दिष्टविधानेनकुर्यात्सर्वाणितानितु । सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः । प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्सतान्यपि । शाठ्यायनिः । सपिंडीकरणादर्वागपकृष्यकृतान्यपि । पुनरप्यपकृष्यंतेवृद्ध्युत्तरनिषेधनात् । वृद्धिश्राद्धानंतरंनिषेधादित्यर्थः ॥

अत्ररात्रौजननमरणेरजोदर्शनादौत्रयःपक्षाः ॥ ॥ अर्धरात्रपर्यंतंपूर्वदिनगणनावा । त्रिभागायारात्रेर्भागद्वयंपूर्वदिनांतर्गतंवा । सूर्योदयावधिपूर्वदिनमेवेतिवा । तदाहकश्यपः । उदितेतुयदासूर्येनारीणांदृश्यतेरजः । जननंवाविपत्तिर्वायस्याहस्तस्यशर्वरी । अर्धरात्रावधिःकालःसूतकादौविधीयते । रात्रिंकुर्यात्त्रिभागांतुद्वौभागौपूर्वएवतु । उत्तरांशःप्रभातेनयुज्यतेमृतसूतके । रात्रावेवसमुत्पन्नेमृतेरजसिसूतके । पूर्वमेवदिनंग्राह्यंयावन्नाभ्युदितोरविरिति । अत्रदेशाचाराद्व्यवस्था ॥

अथरात्रौदाहादिनिर्णयोदेवजानीये ॥ ॥ रात्रौवारात्रिशेषेवाम्रियंतेचेद्द्विजातयः । दाहंकृत्वायथान्यायंद्वौपिंडौनिर्वपेत्सुतः । निगमः । संध्यायांवातथारात्रौदाहःपाथेयकर्मच । नवश्राद्धंचनोकुर्यात्कृतंनिष्फलतांव्रजेत् । रात्रिमृतस्यतुरात्रावेवदाहः । वपनंतुप्रातः । उक्तंचस्मृतिसंग्रहे । रात्रौदग्ध्वातुपिंडांतंकृत्वावपनवर्जितं । वपनंनेष्यतेरात्रौश्वस्तनीवपनक्रिया । निगमवचस्तुदिनमृतस्यालस्यादिनारात्रिदाहनिषेधार्थं । तथाशवंरात्र्युषितंचेत्त्रीन्कृत्वाकृच्छ्रान्दहेत्सुतइतिस्मृतिरत्नावल्यां ॥

दशाहांतर्दर्शपातेभविष्यत्पुराणे ॥ ॥ प्रवृत्ताशौचतंत्रस्तुयदिदर्शंप्रपद्यते । समाप्यचोदकंपिंडान्स्नानमात्रंसमाचरेत् । मातापितृविषयेतुगौतमः । अंतर्दशाहेदर्शश्चेत्तत्रसर्वंसमापयेत् । पित्रोस्तुयावदाशौचंदद्यात्पिंडंतिलांजलीन् । पित्रोरित्ये

कशेपः । यत्तुगालवः । पित्रोराशौचमध्येपियदिदर्शःसमापयेत् । तावदेवोत्तरंतंत्रंपर्यवस्येत्र्यहात्परमिति । तदनौरस
पुत्रोयदाकरोतितद्विषयं । आपदादिविषयंचेतिपारिजातेपराशरमाधवीयेनिर्णयामृतेच । त्र्यहानंतरंदर्शेमातापितृतंत्रस्या
पिसमाप्तिर्नतुत्र्यहमध्येदर्शपाते । तद्विषयमेवगौतमवचनं । अन्येपांतुयदाकदाचिद्दशाहमध्येदर्शपातेतंत्रसमाप्तिरिति ॥

दाहकालेग्निनाशेदाहकाष्ठैरग्निंमथित्वातेनदहेत् । भूर्भुवःस्वःस्वाहेत्याज्याहुतिंहुत्वालौकिकेनाग्निनावातदेहंमहाजले
वाक्षिपेत् । दशाहंप्रेतपिंडंदत्वास्नात्वाभुक्त्वौअसपिंडस्यत्र्यहोपवासः। सपिंडस्यैकाहः। मत्याद्द्विगुणंद्वयोः । प्रेतकृत्यंकुर्वतां
संचयनादर्वाक्स्त्रीसंगेचांद्रं । ऊर्ध्वंकायत्रयं । अन्येषांप्रेताशौचिनांपूर्वंसंचयनात्रिरात्रं । पश्चादुपवासइत्यादिस्मृत्यंतरेभ्यो
ज्ञेयं । अन्यदप्युक्तंकारिकायां । पत्नीमपिदहेदेवंभर्तुःपूर्वमृतायदि । अनग्निकांदहेदेवंकापालेनहविर्भुजा । अग्निवर्णकपालं
तुकृत्वातत्रविनिक्षिपेत् । करीषादिततोयस्तुजातःसतुकपालजः । अनुपनीतस्याप्येवं । स्मृत्यंतरेतु । गृहस्थोब्रह्मचारीचवि
धुरोविधवाःस्त्रियः । औपासनश्चोत्तपनस्तुपाग्निश्चकपालजः । देवलः । चांडालाग्निरमेध्याग्निःसूतिकाग्निश्चकर्हिचित् ।
पतिताग्निश्चिताग्निश्चनशिष्टग्रहणोचिताः ॥ ॥ ॥ ॥

आहिताग्नेर्देशांतरमरणेविशेषस्तत्रैव ॥ ॥ यस्मिन्देशेस्थितोवह्निस्ततोन्यत्रमृतोयदि । चरुःपथिकृतःकार्यःपूर्णाहुति
रथापिवा । अन्यदीयेनवत्सेनयागौःस्नुतपयोधरा । आशरीराहृतेस्तस्याःपयसाहोमइष्यते । अन्यस्याअपिहोतव्यंपयसात
दसंभवे । तथा । कृष्णपक्षेप्रमीयेतयद्यह्निप्रातराहुतीः । शेषास्तुजुहुयाद्दर्शपर्यंताःपक्षहोमवत् । तदानीमेवजुहुयात्सायंका

लाहुतीरपि । संकृद्गृहीतमन्त्रेष्टंभिन्नतंत्रंचहोमयोः । दर्शंचापिप्रकुर्वीतस्थालीपाकंतथैवतु । होमदर्शौनकर्तव्यौपुनर्यदिसजीवति । म्रियेतौपवसथ्येह्निनैवैनंयाजयेत्तदा । म्रियेताधिश्रितेनित्यहोमद्रव्येहविष्युच । यथानिःशेपदग्धानितथातानिदहेत्तदा । बर्हिष्वासादितेष्वेवहविष्युम्रियतेयदा । यासांपरिगृहीतानिदेवतानाहवींपितु । चतुर्थ्यंतानिनामानितावतीनांवदेदथ । स्वाहाकारेणयुगपत्सर्वाणिजुहुयादथ । नेष्टंस्विष्टकृदाद्यत्रशेषंकार्यमितिस्थितः । पिंडप्रमाणंतु । एकोद्दिष्टेसपिंडेतुकपित्थंतुविधीयते । नारिकेलप्रमाणंतुप्रत्यब्देमासिकेतथा । तीर्थेदर्शेचसंप्राप्तेकुक्कुटांडप्रमाणतः । महालयेगयाश्राद्धेकुर्यादामलकोपमं । ( पितृणामासनस्थानायद्यरत्नित्रयंपुरा । उच्छिष्टंतद्विजानीयान्नोच्छिष्टंद्विजसन्निधौ । उच्छिष्टस्योत्तरेभागेपिंडंदद्यात्षडंगुलं । एकाब्दस्यकपित्थस्यपरिमाणंविचक्षणः । ) प्रथमेहनिपिंडेनमुखंमूर्धाप्रजायते । चक्षुःश्रोत्रंनासिकेचद्वितीयेहनिजायते । भुजौवक्षस्तथाग्रीवातृतीयेहनिजायते । नाभिस्थानंगुदंलिंगंचतुर्थेहनिजायते । ऊरूतुपंचमेज्ञेयौपष्ठेमर्मसमुद्भवः । सप्तमेत्वक्शिरास्थीनिसर्वलोमानिचाष्टमे । नवमेवीर्यसंपत्तिर्दशमेक्षुत्पिपासके । अनुगम्येच्छयाप्रेतंज्ञातिमज्ञातिमेववा । स्नात्वासचैलंस्पृष्ट्वाग्निंघृतंप्राश्यविशुध्यति । घृताभावेतुगायत्र्यादशकृत्वःपिवेदपः । ज्येष्ठेनवाकनिष्ठेनसपिंडीकरणेकृते । देशांतरगतानांचपुत्राणांतुकथंभवेत् । श्रुत्वातुवपनंकार्यंदशाहांतंतिलोदकं । ततःसपिंडीकरणंकुर्यादेकादशेहनि । द्वादशाहेनकर्तव्यमितिशातातपोब्रवीत् । स्मृत्यर्थसारे । ब्रह्मचारिणामनपत्यानांचसापिंडनंनास्ति । अतस्तेषांसदैकोद्दिष्टमेव । व्युत्क्रममृतानाव्यवहितैःसापिंड्यंकार्यंनवा । केचित्सर्वत्रसपिंडनमाहुरिति । यतीनांप्रेतत्वंनास्ति ।

अतस्तेषांनैकोद्दिष्टंनसपिंडीकरणंकिंतुएकादशेहनिपार्वणंकार्यं । दंडग्रहणात्पूर्वंमृतेतुदाहादिसपिंडनांतंसर्वंविधिनाकार्यमेव॥ ॥ इतिभट्टरामेश्वरसूनुनारायणभट्टकृतेप्रयोगरत्ने और्ध्वदैहिकपद्धतौउपयोगिनिर्णयः ॥ ॥ ॥ ॥

अथविधानानि ॥ तत्रब्रह्मचारिमरणेविधानमालायांविशेषः । येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि । तत्कुलंक्षयमाप्नोतिसोपिदुर्गतिमाप्नुयात् । ग्रहत्वंप्राप्नुयाद्वोधिद्रुमेऽनवरतंवसेत् । तस्यापितस्यवंशस्यगतिमिच्छन्महीयसीं । विधानंचविधायाशुऔर्ध्वदैहिकमाचरेत् । मृतस्यम्रियमाणस्यषडब्दंव्रतमादिशेत् । त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनकान्नवान् । हस्तमात्राःकर्णमात्रादद्यात्कृष्णाजिनानिच । पादुकाच्छत्रमाल्यानिगोपीचंदनमेवच । मणिप्रवालमालाश्चब्रह्मसूत्राणिचार्पयेत् । मंत्रैस्तल्लिंगकैश्चैवब्रह्मसायुज्यसिद्धये । अभावेव्रतिनांपूज्यागृहस्थाःसाधवःशुभाः । एवंकृतेविधानेचविघ्नस्तस्यनजायते ॥

ब्रह्मचारिमरणेर्कविवाहःशौनकेनोक्तः । ब्रह्मचारिमृतौशांतिंकथयामिसमासतः । तत्रावकीर्णदोषस्यप्रायश्चित्तंप्रशांतये । द्वादशाब्दंषडब्दंवात्र्यब्दंशक्त्याथवाचरेत् । ततोव्रतविसर्गाख्यंविधिंसम्यक्समाचरेत् । स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदि । संयोज्यचार्कंविधिनासंयोज्यौतौपरस्परं । अथाग्निमुपसमाधायएवंगुणेत्याद्यमुकगोत्रस्यामुकनाम्नोमृतस्यब्रह्मचारिणोव्रतविसर्गंकरिष्येइतिसंकल्प्यतदंगंहिरण्येननांदीश्राद्धंकरिष्यइतिसंकल्प्य तत्कृत्वान्वाधानाद्याघारांतंकृत्वाज्यंजुहुयात् । व्याहृतयश्चतस्रः । अग्नयेव्रतपतयेस्वाहा । अग्नयेव्रतानुष्ठानफलसंपादनायस्वाहा । विश्वेभ्योदेवेभ्यःस्वाहा ७ । ततःस्विष्टकृदादिसमाप्य । पश्चादर्कसमीपेअथवार्कशाखामानीयार्कविवाहः । अर्कब्रह्मचारिणौहरिद्रयानुलिप्यपीतसूत्रेण

वेष्टयवस्त्रयुग्मेनाच्छाद्याग्निमुपसमाधायएवंगुणेत्यादिअमुकगोत्रस्येत्यादिऔर्ध्वदैहिकाधिकारार्थमर्कविवाहंकरिष्येतदंगंहिरण्येननांदीश्राद्धंकरिष्ये । इत्याघारांतंकृत्वाज्यहोमः । ॐ अग्नयेस्वाहा । ॐ बृहस्पतयेस्वाहा । ॐ विवाहविधियोजकायस्वाहा । यस्मैत्वंकामकामायवयंसंम्राड्यजामहे । (त्व) तमस्मभ्यंकामंदत्वाथंदंतंघृतंपिवस्वाहा । कामकामायेदं ४ । चतस्रोव्याहृतयः ८ ततःस्विष्टकृदादि । अर्कशाखांब्रह्मचारिशवंचतुपाग्निनाविधिवदहेत् । शाखांप्रवाहयेदित्यन्ये । इति ब्रह्मचारिमरणविधिः ॥ ॥

अथकुष्ठिमरणेविधिःयमः ॥ ॥ मृतस्यकुष्ठिनोदेहंनिखनेद्गोष्ठभूमिषु । वासरत्रितयंपश्चादुद्धृत्यान्यत्रतंदहेत् । नगंगाप्लवनंकार्यंनिक्षेपेविधिरुच्यते । षडब्दव्रतपूर्वेणविधिनांत्यंक्रतुंचरेत् । ततोस्थिसंचयंतस्यगंगायांप्रक्षिपेत्सुधीः । मासिमासिततःकुर्यान्मासिश्राद्धानिपार्वणात् । संकल्पविधिनाकेचित्प्रवदंतिमनीषिणः । इत्येवंकुष्ठिनोह्यूर्ध्वंकथितंशास्त्रकोविदैः । स्मृतिवद्भिरनूचानैर्यमाद्यैःपूतविग्रहैः ॥ इतिकुष्ठिमरणविधिः ॥ ॥ ॥

अथसर्पहतेनागव्रतंकार्यं॥ ॥ तत्संवत्सरेश्रावणशुक्लपंचमीमारभ्यान्यांवाशुक्लपंचमीमारभ्यपंचम्यामुपवासः । यद्वाचतुर्थ्यामेकभक्तंपंचम्यांनक्तं । दारुमयंमृण्मयंवानागंपंचफणंकृत्वागंधैःकरवीरैःशतपत्रैःजातिपुष्पैर्धूपैर्दीपैरनंतंवासुकिंशंखंपद्मंकंबलंकर्कोटकमश्वतरंधृतराष्ट्रंशंखपालंकालियंतक्षकंकपिलंचप्रतिमासंनामभिःशुक्लपंचम्यांसंपूज्यब्राह्मणान् घृतपायसमोदकैर्भोजयेत् । संवत्सरांतेचैवंसंपूज्यमहद्ब्राह्मणभोजनंशक्त्यासौवर्णनागदानंचकुर्यात् । अथचोभयोःपक्षयोःपंचमीषुभूमौ

नागंपिष्टेनविलिख्यसितपुष्पैःसितेनगंधेनतिलतंडुलैश्चाभ्यर्च्यगव्यंक्षीरंमोदकंचभूमौनिवेद्यउपस्थायैवंवदेत् । मुंचमुंचामुकमिति । तद्दिनेमधुरमश्नीयात् । एवमब्दंविधिनानागमभ्यर्च्यपूर्णेब्देयथाशक्तिसौवर्णनागंगांचदद्यात् । ततोनारायणवलिंचकृत्वाश्राद्धादिसर्वंकुर्यात् । तत्रमूलवचनानिस्मृतिरत्नावल्यांज्ञेयानि ॥ ॥ ॥ ॥

अथपूर्वोक्तपापंज्यादीनांबुद्धिपूर्वकात्मघातिनांचनारायणवलिप्रयोगः ॥ ॥ कस्यांचिच्छुक्लैकादश्यांनदीमन्यद्वातीर्थंगत्वास्नानादिकृत्वाचम्यप्राणानायम्यदेशकालौनिर्दिश्य अमुकशर्मणःआत्महत्यापापंज्यादिजनितपापोपशमनद्वाराऔर्ध्वदैहिकेसंप्रदानत्वयोग्यतासिद्ध्यर्थंनारायणवलिंकरिष्यइतिसंकल्प्य । कलशपंचकंव्रीहीणांयवानांवोपरिस्थापयित्वोदकेनापूर्यापोहिष्ठेतिमंत्रत्रयेणाभिमंत्र्यसर्वौषधीतिलगंधादिप्रत्येकंप्रक्षिप्यवस्त्रेणवेष्टयित्वापुष्पाणिपंचरत्नानिचप्रक्षिप्यतदुपरिताम्रादिपात्रेब्रह्मविष्णुशिवयमप्रेतानापंचमूर्तीःस्थापयेत् । आवाहनादयउपचाराःकार्याः । तत्रविष्णोःपुरुषसूक्तेनपूजा । ब्रह्मणोहिरण्यगर्भःसमवर्ततारग्रइति । रुद्रस्यकद्रुद्रायेति । यमस्ययमायसोममिति । प्रेतस्यनामगोत्रेणषोडशोपचारैःपंचदेवताःपूजयित्वास्वगृह्योक्तमार्गेणस्थंडिलेग्निंप्रतिष्ठाप्यचरुहोमंकुर्यात् । अन्वाधानेआज्यभागांतमुक्त्वानारायणंषोडशकृत्वश्चरुणायक्ष्यइत्युक्त्वाग्निंस्विष्टकृतमित्यादिप्राकृतमुक्त्वान्वाधानसांमेधौहुत्वा । स्वगृह्योक्तमार्गेणनिर्वापादिविधिनाचरुंश्रपयित्वाआज्यभागांतंकृत्वापुरुषसूक्तेनषोडशाहुतीर्जुहुयात् । नारायणायेदंनममेतित्यागः । अन्यत्सर्वंप्राकृतंसमाप्यार्चितदेवसमीपेअमुकगोत्रायामुकशर्मणेप्रेतायविष्णुरूपिणेऽयंपिंडइतिमधुघृतप्लुतांस्तिलमिश्रान्दशपिंडान्विष्णुरूपिणंप्रेतमनुस्म

रन्प्रेतस्यनामगोत्रेचउच्चार्यदक्षिणाग्रेषुदर्भेषुदक्षिणाभिमुखोपसव्येनदत्वा । यत्तेयममितिसूक्तेनपिंडाननुमंत्र्यकुशैःशंखोद
केनपुरुषसूक्तेनापिंडानभिषिच्यगंधाद्यैरभ्यर्च्यपिंडप्रवाहणांतंकृत्वानद्यांक्षिपेत् । नपत्न्यैदद्यात् । ततःपुरुषसूक्तेनप्रेतनाम
गोत्रेउक्त्वामुकंनारायणरूपंतर्पयामीतिषोडशवारंप्रत्यृचंतर्पयेत् । ततःपुरुषाहारपरिमितमन्नंविष्णवेब्रह्मणेशिवायसकिंक
राययमायचबलीन्गृहीत्वा । ब्रह्माविष्णुर्महादेवोयमश्चैवसकिंकरः । बलिंगृहीत्वाकुर्वंतुप्रेतस्यचशुभांगतिमितिप्रार्थ्यवि
ष्णवादिभ्यइमंबलिंसमर्पयामीतिबलिंदद्यात् । स्मृत्यर्थसारेतुहोमतर्पणबलयोनोक्ताः । ततःप्रतिदैवतंत्रिविधंत्रिविधंफलंच
समर्प्यशर्करामधुगुडसर्पींषिनिवेदयेत् । गीतादिनाजागरणंकुर्यात् । ततोस्यामेवरात्र्यामयुग्मान्पंचसप्तनववाब्राह्मणाना
मंत्र्यउपोषितः श्वोभूतेमध्याह्नेविष्ण्वादीनमभ्यर्च्यदेशादिस्मृत्वानारायणबलिविहितंश्राद्धपंचकमेकोद्दिष्टविधिनाकरिष्य
इतिसंकल्प्यएकोद्दिष्टविधिनाब्राह्मणपादप्रक्षालनादिकृत्वायथाज्येष्ठमुदङ्मुखानुपवेश्यावाहनादितृप्तिप्रश्नांतंकृत्वापिंडपितृ
यज्ञवदुल्लेखनाद्यवनेजनांतंकृत्वाविष्णवेब्रह्मणेशिवाययमायसपरिवारायचतुरःपिंडान्दत्वानामगोत्रविशिष्टंविष्णुरूपंप्रेतंस्मृ
त्वापंचमंपिंडंदद्यात् । ततोविप्रानाचांतान्दक्षिणाभिस्तोषयित्वातन्मध्येचैकंगुणवंतंब्राह्मणंप्रेतस्थानेभोजितंप्रेतबुद्ध्यासंस्म
रन्भूमिहिरण्यादिनातिशयेनसंतोष्याक्षय्यस्थानेतिलदर्भतुलसीयुतशंखोदकधारांदद्यात् । ततस्तैःपवित्रपाणिभिर्ब्राह्मणैःकृ
त्वामुकगोत्रायामुकशर्मणेप्रेतायविष्णुरूपायेदंतिलोदकमुपतिष्ठतामितिवाचयित्वासकुशतिलमुदकांजलिंदापयेत् । ततःस्ना
त्वागुडशर्करापायसादिस्वजनैःसहभुंजीतेति ॥ इतिनारायणबलिः ॥ ॥ ॥ ॥

अथसहगमनविधिः ॥ ॥ अथान्वारोहणंस्त्रीणामात्मनोभर्तुरेवच । सर्वपापक्षयकरंनरकोत्तारणायच । अनेकस्वर्ग फलदंमुक्तिदंतत्तथैवच । जन्मांतरेचसौभाग्यधनपुत्रादिवृद्धिदं । एवंगुणेत्यादिआत्मनोभर्तुश्चैतज्जन्मजन्मांतरपरंपरार्जित सर्वपापक्षयद्वारालक्ष्मीनारायणप्रीतयेपुराणोक्तानेकफलप्राप्तयेचान्वारोहणंकरिष्ये । तदंगतयाविहितंहरिद्राकुंकुमांजनादि सौभाग्यद्रव्ययुतवंशपात्रवायनदानंकरिष्यइतिसंकल्प्य सोपस्कराणिशूर्पाणिदद्यात् । तत्रमंत्रः । लक्ष्मीनारायणोदेवोवल सत्वगुणाश्रयः । गाढंसत्वंचमेदेयाद्वायनैःपरितोषितः । सोपस्कराणिशूर्पाणिवायनैःसहितानिच । लक्ष्मीनारायणप्रीत्यै सत्वकामाददाम्यहं । अनेनसोपस्करशूर्पदानेनलक्ष्मीनारायणौप्रीयेतां । अग्नेःसमीपमागत्यपंचरत्नानिपल्लवे । नीलांजनं तथावध्वामुखेमुक्ताफलंन्यसेत् । ततोग्निप्रार्थनांकृत्वामंत्रेणानेननिश्चितं । स्वाहासंश्लेपनिर्विण्णशर्वगोत्रहुताशन । सत्व मार्गप्रदानेननयमांपत्युरंतिकं । इत्यग्निंप्रार्थ्याज्येनाग्नौजुहुयात् । अग्नयेतेजोधिपतयेस्वाहा । विष्णवेसत्वाधिपतयेस्वाहा । कालायधर्माधिपतयेस्वाहा । पृथिव्यैलोकाधिष्ठात्र्यैस्वाहा । अद्भ्योरसाधिष्ठात्रीभ्यःस्वाहा । वायवेबलाधिपतयेस्वाहा । आकाशायसर्वाधिपतयेस्वाहा । कालायधर्माधिष्ठात्रेस्वाहा । अद्भ्यःसर्वसाक्षिणीभ्यःस्वाहा । ब्रह्मणेवेदाधिपतयेस्वाहा । रुद्रायश्मशानाधिपतयेस्वाहा ॥ ११ ॥ एकादशाहुतीर्हुत्वाकुर्यादग्नेःप्रदक्षिणां । ततःशिलांसोपस्करांसंपूज्यतामारुह्यफल पुष्पांजलिंगृहीत्वाग्निंप्रार्थयेत् । त्वमग्नेसर्वभूतानामंतश्चरसिसाक्षिवत् । त्वमेवदेवजानीषेनविदुर्यानिमानुषाः । अनुगच्छा मिभर्तारंवैधव्यभयपीडिता । सत्वमार्गप्रदानेननयमांभर्तुरंतिकं । मंत्रमुच्चार्यशनकैःप्रविशेच्चहुताशनं । तांप्रेतस्योत्तरतः

सुसांदेवरःशिष्योवानमस्कृत्यकरेधृत्वाउदीर्ष्वेतिद्वाभ्यांमंत्राभ्यांत्वरसहितामुत्थापयेत् । सत्वाधिकासुहृदःसमाश्वास्यभर्तारं विष्णुरूपंस्मरंतीप्रविशेत् । हारीतः । मृतेभर्तरियानारीधर्मशीलादृढव्रता । अनुगच्छतिभर्तारंशृणुतस्यास्तुयत्फलं । तिस्रः कोट्योर्धकोटीचयावंत्यंगरुहाणिवै । तावंत्यब्दसहस्राणिस्वर्गलोकेमहीयते । मातृकंपैतृकंचैवयत्रकन्याप्रदीयते । कुलत्रयं पुनात्येषाभर्तारंयानुगच्छति । इत्यादिवाक्यपर्यालोचनयासंकल्पेतत्तत्फलमुल्लेख्यं । अन्वारोहणेअन्वयवापिंडार्थःपाकस्तंत्रेण पिंडःपृथक्पृथक् इतिद्वंद्वपद्धतौ । अन्यत्रतु । अन्वारोहेतुनारीणांपत्युश्चैकोदकक्रिया । पिंडदानक्रियातद्वच्छ्राद्धंप्रत्याब्दिकं तथा । अन्वारोहेकृतेपत्न्याःपृथक्पिंडांस्तिलांजलीन् । पृथक्शिलेनकुर्वीतदद्यादेकशिलेतथा । नवश्राद्धानिसर्वाणिसपिंडी करणंपृथक् । एकएववृषोत्सर्गोगौरेकातत्रदीयते । अन्वारोहणेएकचित्यारोहणेवास्त्रियाःपृथक्सपिंडनंनास्तिभर्तुःकृतेस्त्रि याःकृतंभवतीतिस्मृत्यर्थसारे । भर्त्राचैकेनेतिवहवः । भर्त्रादित्रयेणेत्यन्ये । अन्वारोहणंगर्भिणीनांवालापत्यानांरजस्वला नांसूतिकानांचनिषिद्धं । गर्भिणीनांतत्तज्जातिवधसमानं । ब्राह्मण्याएकचित्यारोहणमेवनपृथक्चित्यारोहणं । क्षत्रियादि स्त्रियाःपृथक्सहवाचितिः । असवर्णायाःपृथक्चितिरेव । मदनपारिजातमते । अन्वारोहणेनवश्राद्धमात्रंपृथक् । तत्रापिपि तृमातामहपार्वणद्वयवत्सहैवानुष्ठानं । आपस्तंवः । चितिभ्रष्टातुयानारीमोहाद्विचलिताभवेत् । प्राजापत्येनशुध्येततस्माद्वै पापकर्मणः । भर्तुरनुगमनेचितिभ्रष्टेत्यर्थः । पत्न्यांरजस्वलायांयदाभर्तामृतःसाचदेशकालवशात्तदैवानुगंतुमिच्छतिनपं चमादिदिनंप्रतीक्षते तत्रविधिरुच्यते । यदास्त्रियामुदक्यायांपतिःप्राणान्त्समुत्सृजेत् । द्रोणमेकंतंडुलानामवहन्या

द्धिशुद्धये । मुसलाघातैस्तदसृक्स्रवतेयोनिमंडलात् । विरजस्कांमन्यमानास्वेचित्तेतदसृक्क्षयं । दृष्ट्वाशौचंप्रकुर्वीतपं चमृत्तिकयापृथक् । त्रिंशद्विंशतिर्दशपंचगवांदत्वात्वहःक्रमात् । विप्राणांवचनाच्छुद्धासमारोहेद्धुताशनं । नारीणां सरजस्कानामियंशुद्धिरुदाहृता ॥ इत्यन्वारोहणविधिः ॥ ॥ ॥ ॥

अथरजस्वलामरणेविधिः । अंतरिक्षेमृतायेचवह्नावप्सुप्रमादतः । उदक्यासूतिकानारीचरेच्चांद्रायणत्रयं । संग्रहे । पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलां । वस्त्रांतरावृतांकृत्वादाहयेद्विधिपूर्वकं । वृद्धशातातपस्तु । रजस्वलायाःप्रेतायाः संस्कारादीनिनाचरेत् । ऊर्ध्वंत्रिरात्रात्स्नातायाःशवधर्मेणदाहयेत् । इतित्र्यहोत्तरंसंस्कारमाह । अत्रदेशकालानुसाराद्व्यव स्था । अद्येत्यादिअमुकगोत्रायाःअमुकस्यारजस्वलायाश्चमरणनिमित्तप्रत्यवायपरिहारार्थऔर्ध्वदैहिकयोग्यत्वार्थचांद्रायणत्र यप्रायश्चित्तपूर्वकंशूर्पेणाष्टोत्तरशतस्नानानिकारयिष्ये । इतिसंकल्प्यब्राह्मणवचनेनचांद्रायणत्रयंकृत्वायवपिष्टेनप्रेतमनुलि प्यस्वयंस्नात्वाशूर्पोदकेनशतवारंस्नापयेत् । प्रेतंप्रक्षाल्यभस्मगोमयमृत्तिकाकुशोदकपंचगव्यशुद्धोदकैःस्नापयेत्। पावमानी भिःस्वस्त्ययनीभिर्यदंतियच्चदूरकेआपोहिष्ठेतितिसृभिःकयानइतितिसृभिःसंस्नाप्यपूर्ववस्त्रंपरित्यज्यविधिनादहेत् । यद्वा । रजस्वलांसूतिकांचमलंप्रक्षाल्यस्नापयित्वाकाष्ठवद्दग्ध्वास्थीनिविधिनादहेत् ॥ ॥ ॥ ॥

अथसूतिकामरणे ॥ सूतिकामरणेप्राप्तेसर्वौषध्यनुलेपनं । असूतकीतुसंस्पृष्टःशूर्पाणांतुशतंक्षिपेत् । पूर्ववत्संकल्प्यब्राह्म

णवचनाच्चांद्रायणत्रयंकृत्वापूर्ववच्छतशूर्पस्नानानिकारयित्वाकुंभेजलमादायपंचगव्यंतत्रक्षिप्त्वाआपोहिष्ठेतियवामदेव्यवारुणादिपुण्यर्ग्भिरभिमंत्र्यपूर्वोक्तमंत्रैःस्नाप्यविधिनादहेत् ॥ ॥ ॥ ॥ ॥

अथसूतिकामरणेदिनभेदेनविशेषप्रायश्चित्तम् । सूतिकातुयदासाध्वीविस्नातामरणंगता । त्रिवर्षपूर्णपर्यंतंशुद्ध्येत्कृच्छ्रेणसर्वदा । एतत्प्रथमत्र्यहविषयं । सूतिकातुयदानारीरजसातुपरिप्लुता । म्रियतेचेत्तुयानारीद्विवर्षकृच्छ्रमाचरेत् । एतद्द्वितीयत्र्यहविषयं । सूतिकातुयदासाध्वीविस्नातामरणंगता । अब्दकृच्छ्रेणशुद्ध्येतव्यासस्यवचनंयथा । तथा । सूतिकातुयदासाध्वीविस्नातामरणंगता । त्रिषण्णवदिनादर्वागेकाब्देनविशुद्ध्यति । दशाहादुत्तरंतु । सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् । मासमेकावधिंयावत्त्रिभिःकृच्छ्रैर्विशुद्ध्यति । तथा । सूतिकायांमृतायांतुकथंकुर्वंतियाज्ञिकाः । कुंभेसलिलमादायपंचगव्यंक्षिपेत्ततः । पूर्वर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः । तेनैवस्नापयित्वातुदाहंकुर्याद्यथाविधि । अब्लिंगपावमानीभिर्वामदेव्याभिरेवच । अन्यैश्चवारुणैर्मंत्रैःसंस्नाप्यविधिनादहेत् ॥ ॥ ॥

अथगर्भिणीमरणेविधिः । यदागर्भवतीनारीसशल्यासंस्थिताभवेत् । कुक्षिंभित्त्वाततःशल्यंनिर्हरेद्यदिजीवति । प्रमीतंनिक्षिपेत्तंतुप्रायश्चित्तंततःपरं । सात्रयस्त्रिंशताकृच्छ्रैःशुद्ध्यतेशल्यदोषतः । सगर्भदहनेतस्यावर्णजंवधपातकं । प्रायश्चित्तंचरित्वातुशुद्ध्यंतेपापकारिणः । भ्रूणहत्यांपतिश्चैवशुद्धिंस्वायंभुवोब्रवीत् । अंतर्गर्भमृतस्त्रीणांपृथग्गर्भेणनिष्कृतिः । दग्ध्वातुगर्भसंयुक्तांत्रिरब्दंकृच्छ्रमाचरेत् । इत्यादिग्रंथांतरतोवगंतव्यं ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः । व्यधत्तरुचिरांका

ह्यामौर्ध्वदैहिकपद्धतिं । आश्वलायनमार्गेणसंतिपद्धतयःशतं । ताभ्यस्त्वस्याविशेषोयःपंडितैःसोवधार्यतां ॥ ॥ इतिश्री
मद्रामेश्वरभट्टसूरिसूनुनारायणभट्टविरचितेप्रयोगरत्नेऔर्ध्वदैहिकपद्धतिःसमाप्ता ॥ ॥ ॥

समा

अयंग्रंथोगोमांतकांतर्गतपेडणेग्रामस्थपणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुपावासुदेवशर्मणासंस्कृतः
परिष्कृतश्चमुंबय्यांश्रेष्ठिवरैः तुकाराम जावजी इत्येतैःस्वीये निर्णयसागराख्यमुद्रणालये
मुद्रयित्वाप्रकाशितः ।

शाकः १८३७, सन १९१५.

Published by Tukaram Javaji, Proprietor Nirnaya-Sagar Press, 23, Kolbhat Lane, Bombay.

Printed by Ramchandra Yesu Shedge at the Nirnaya-Sagar Press, 23, Kolbhat Lane, Bo

॥ इति प्रयोगरत्नं=नारायणभट्टी

उत्तरनारायणभट्टी=अंत्येष्टिश्च ॥